# * रसतरङ्गिणी *

श्रीमद्देवज्ञरत्न पण्डित जीवानन्दशर्म-
तनूजेन सदानन्द शर्म्मणा
विरचिता।

मा चय
लवपुरीय मित्रौषधालयाध्यक्षवर्य्यैः
श्रीमद्भि॰ कविराज नरेन्द्रनाथ
मित्रमहोदयैः प्रकाशिता।



विक्रमाब्दाः १९८१] [मूल्यं पञ्चरूप्यकाणि



मिश्रान्वयावतंसः सन्मानसैकहंस ।
जयति क्षमासनाथ श्रीमान्नरेन्द्रनाथ ॥

ॐ

## ❀ समर्पणम् ❀

गुणिगणभूषण
परमविचक्षण
लब्धसुशिक्षणकीर्ते ।
प्रणयपरीक्षण
सदयनिरीक्षण
मधुरमनोहरमूर्ते ॥
मित्रकुलोद्भव
सज्जनवैभव
वैद्यविकत्थितबुद्धे ।
रसनिगमोदित
सुबहुपरीक्षित
मार्गकृतेशविशुद्धे ॥

श्रीमत्परमपूज्यायुर्वेदार्णवकर्णधारशिरोमणेः
श्रीगुरुवर्य कविराज नरेन्द्रनाथ मित्रमहोदयस्य
करकमलयुगले
समर्प्यते
इयं
रसतरङ्गिणी

तथा च—

यदेव सततं मया ह्यधिगतं भवद्भ्यः पुरा
तदेव खलु साम्प्रतं बत समर्पयेयं कथम् ।
तथापि विनयानतो लघुनिबन्धरूपेण तत्
भवद्धृदयतुष्टये किमिव नार्पयेयं मुदा ॥

इति निवेदयति
घिल्डियालोपाह्वः सदानन्दशर्मा



मित्रान्वयावतंसः सन्मानसैकहंसः ।
जयति क्षमासनाथः श्रीमान्नरेन्द्रनाथः ॥

ॐ

# ❀ समर्पणम् ❀

गुणिगणभूषण
परमविचक्षण
लब्धसुशिक्षणकीर्ते ।
प्रणयपरीक्षण
सदयनिरीक्षण
मधुरमनोहरमूर्तेः ॥
मित्रकुलोद्भव
सज्जनवैभव
वैद्यविकस्थितबुद्धे ।
रसनिगमोदित
सुबहुपरीक्षित
मार्गकृतेशविशुद्धे ॥

श्रीमत्परमपूज्यायुर्वेदार्णवकर्णधारशिरोमणे
श्रीगुरुवर्य कविराज नरेन्द्रनाथ मिश्रमहोदयस्य
करकमलयुगले
समर्प्यते
इयं
रसतरङ्गिणी

तथा च—

यदेव सततं मया ह्यधिगतं भवद्भ्यः पुरा
तदेव खलु साम्प्रतं यत समर्पयेयं कथम् ।
तथापि चिनयानतो लघुनिबन्धरूपेण तत्
भवद्धृदयतुष्टये किमिव नार्पयेयं मुदा ॥

इति निवेदयति
घिल्डियालोपाह्वः सदानन्दशर्मा

# भूमिका

अयि आयुर्वेदार्णवकर्णधारधुरीणा ! रसनिगमपारावारपारीणा !! प्राणाचार्यशिरोमणय !!! विदिततरमेवेतत्सर्वेषा तत्र भवता भवता यत्सुरभारतीसाहित्यस्य गौरवास्पदभूतासु रसमूलिकाशस्त्राभिधेयासु तिसृष्वपि चिकित्सासु रसचिकित्साया एव प्राधान्यम् ॥

अत एव आमनन्त्येव वृद्धवैद्या —

"उत्तमो रसवैद्यस्तु मध्यमो मूलिकादिभि ।
अधम शस्त्रदाहाभ्याम्"

अपि च रसचिकित्सकचूडामणिना श्रीगोपालकृष्णेन रसेन्द्रसारसग्रहनामकस्वसगृहीतग्रन्थोपक्रमेऽपि समर्थितमस्य प्राशस्त्यम्। तथाहि—

"अल्पमात्रोपयोगित्वादरुचेरप्रसङ्गत ।
क्षिप्रमारोग्यदायित्वादौषधेभ्योऽधिको रस ॥"

एतावतैवास्या रसचिकित्साया प्राशस्त्यमध्यवसीयते यदियमादिदेवेन महादेवेन शतसहस्रपद्यनिबद्धसहितात्मकतया सर्वप्रथममाविष्कृतेति।

अपि च समुपेयसुखावहपदार्थप्रधानभूतस्य पुरुषार्थचतुष्टयस्योपजनकत्वेन कियदुपादेयत्वमस्येति सुधीभिरेव भिषग्भिर वधेयम्।

पुरुषार्थचतुष्टयोपजनकत्व चास्य सुविदितमेव सर्वेषा वैद्यविद्याविदाम्। तथा हि-नि शुल्कौषधदानरोगिनिरीक्षणादिना आर्तत्राणरूप, सन्निपातात्यथिकामयेषु प्राणप्रदत्वेन नवजीवनदानरूपश्च धर्म, प्रचुरार्थराशिशालिना धनपतिविरुदभाजा चिकित्सनेन अर्थोदय, निरुक्तरीतिसमुपार्जितधनेन कामश्च म्मुल्लसतीति निर्विवादम्।

आयुर्वेदाङ्गभूतस्य रसशास्त्रस्य मोक्षाभिधायकत्व च रसार्णवादिप्राचीनार्षग्रन्थेषु षड्दर्शनादिविलक्षणलक्षणतया प्राधान्येनैव

प्रतिपादितम्। मन्यन्ते च प्राचीना रसायनाचार्याः प्रधानप्रयोजनं रसशास्त्रस्य मोक्षप्राप्तिसाधनम्। तथा हि–

श्रीदेव्युवाच —

त्वत्प्रसादान्महेशान सर्वमेतदवधारितम्।
यदि नोऽस्मदनुग्राह्या वद देव यथातथम्॥

श्रीभैरव उवाच–

साधु साधु महाभागे! साधु पर्वतनन्दिनि।
साधु पृष्टं त्वया देवि भक्तानां हितकाम्यया॥
अजरामरदेहस्य शिवतादात्म्यवेदनम्।
जीवन्मुक्तिर्महादेवि देवानामपि दुर्लभा॥
पिण्डपाते च यो मोक्षः स च मोक्षो निरर्थकः।
पिण्डे तु पतिते देवि गर्दभोऽपि विमुच्यते॥
षड्दर्शनेऽपि मुक्तिस्तु दर्शिता पिण्डपातने।
करामलकवत्सापि प्रत्यक्षं नोपलभ्यते॥
देवानामपि देवेशि! दुर्लभं पिण्डधारणम्।
किं पुनर्मानुषाणां तु धरणीतलवासिनाम्॥
तेन पिण्डो महादेवि रक्षणीयः प्रयत्नतः।
॥
यावन्न हरबीजं तु भक्षयेत्पारदं रसम्।
तावत्तस्य कुतो मुक्तिः कुतः पिण्डस्य धारणम्॥
[रसार्णव प्रथम पटल]

श्रीमद्गोविन्दभगवत्पादाश्चैवमामनन्ति—
इति धनशरीरभोगान् मत्वाऽनित्यान्सदैव यतनीयम्।
मुक्तिस्तस्य ज्ञानात् तच्चाभ्यासात् स च स्थिरे देहे॥
स्थिरदेहोऽभ्यासवशात् प्राप्य ज्ञानं गुणाष्टकोपेतम्।
प्राप्नोति ब्रह्मपदं न पुनर्भवत्रासदुःखानि॥
नहि देहेन कथंचिद् व्याधिजरामरणदुःखविधुरेण।
क्षणभङ्गुरेण सूक्ष्मं तद् ब्रह्मोपासितुं शक्यम्॥
अस्मिन्नेव शरीरे येषां परमात्मना न संवेदः।
देहत्यागादूर्ध्वं तेषां तद् ब्रह्म दूरतरम्॥

तस्माज्जीवन्मुक्तिं समीहमानेन योगिना प्रथमम्।
दिव्या तनुर्विधेया हरगौरीसृष्टिसंयोगात्॥
[रस० हृ० त० प्र० अ०]

अस्याश्च रसचिकित्सायास्तन्त्रकाराः —श्रीशङ्कर-नन्दीश्वर-भैरव-ब्रह्म-विष्णु-दत्तात्रेयप्रभृतयो देवाः, अगस्त्य-कपिल-भालुकि व्याडि-माण्डव्याद्या महर्षयः, चन्द्रसेन-लङ्केश-विशारद-भास्कर-सुरसेन-रत्नकोश-स्वच्छन्दभैरव-मन्थानभैरव-काकचण्डीश्वर-नरवाहन-कापालिक-रसेन्द्रतिलक-सुरानन्द-यशोधन गोमुख-नरेन्द्र-मैथिल-स्कन्द-भगवद्गोविन्दपादप्रभृतयः प्राचीना रससिद्धाः, नागार्जुन-भैरवनाथ-सोमनाथ-सिद्धनाथ-आदिनाथ-चर्पटीनाथ-गोरक्षनाथ-मत्स्येन्द्रनाथादयश्च प्रसिद्धा बहवो रस सिद्धाः समजायन्त।

रसतन्त्रेषु च—रसेन्द्रसंहिता-दत्तात्रेयसंहिता-अगस्त्यसंहिता नासत्यसंहिता-गोरक्षसंहिता-रुद्रयामलतन्त्र-महारसायनतन्त्र-कामधेनुतन्त्र-दत्तात्रेयतन्त्र-सिद्धलक्ष्मीश्वरतन्त्र-लम्पटतन्त्र-स्वच्छन्दभैरवतन्त्र-मन्थानभैरवतन्त्र-काकचण्डीश्वरतन्त्र-हरीश्वरतन्त्र-महादेवतन्त्र-नागार्जुनतन्त्र-वालतन्त्र-चन्द्रसेनसिद्धान्त लङ्केशसिद्धान्त-कपिलसिद्धान्त-ब्रह्मसिद्धान्त-रसरत्नाकर-रसरत्नप्रदीप-रसपारिजातप्रभृतयोऽसङ्ख्या रसग्रन्था श्रूयन्ते नाम मात्रेण साम्प्रतम्।

हन्त!!! यस्या रसविद्याया इतः सहस्रवर्षपूर्वं भारतेऽपरिगणनीया आचार्याः, ग्रन्थाश्च लब्धप्रतिष्ठा लब्धप्रचाराश्च आसन् तस्या एव अङ्गुलिगणनीया ग्रन्था दृष्टिसरणिमुपयान्तीति महान् खेदः। रसतन्त्राचार्याश्च न दृश्यन्ते नाममात्रेण क्वापि। उपलब्ध रसतन्त्राणामप्यतिदुर्बोध्यतया विरला एवोपलभ्यन्ते तदर्थज्ञा रसवैद्याः। ये केचन रसायनाचार्यम्मन्या रसवैद्या क्वचिद् दृश्यन्ते ते रसतन्त्रार्थजातं स्वकीयं पैतृकं धनमिति मन्यमाना देशजात्यादि साम्यभेदजनितमात्सर्यमलकलुषितस्वान्ताः पठनकर्मणि व्ययीकृतानेकवर्षेभ्योऽनन्यभक्तेभ्यः शिष्येभ्योऽपि गोपयन्त्येव। श्रुतश्चित् समधिगतनिशाशकलोऽपि मूर्धिन्यश्चिकित्सकत्वेनात्मानं सम्भावयतीति लोकश्रुतिं प्रत्यक्षीकारयन्ति।

अपि च इदानीन्तना ये केचन वैद्या प्राचीनाचार्यप्रणीतान्यपि पुस्तकानि धृताश्रितगृहाद्वा समधिगच्छन्ति तानि सूर्यदेवमपि नोपदर्शयन्ति किं पुनर्मुद्रणालयान् ।

हन्त ! यस्यायुर्वेदशास्त्रस्य विविधदेशागत ऋषिमहर्षिसिद्धाचार्यसम्मेलनसाहाय्येनैव पुरा प्रादुर्भाव समजनि, सम्मिलिता ऋषय सिद्धा आचार्याश्च समस्तविश्वमङ्गलकाम्यया स्वानुभवपथमुपगतमायुर्वेदतत्त्व निरवशेष सदसि समभिधाय आयुर्वेदकल्पतरु प्रत्यहमुत्तरोत्तरमतिवेल परिपोषयामासुस्तस्यैव साम्प्रतिकी कीदृशी दुरवस्थेति पर परिभवस्थान भारतीयभिषजाम् ।

इमामेव दशामवलोकयद्भि श्रीमद्भिर्गुरुवर्यै कविराज नरेन्द्रनाथ महोदयैराज्ञापितोऽहं पद्यनिबद्धग्रन्थ स्वानुभूतरसशास्त्ररहस्य भारतीयभिषजा करकमलेषु उपायनीकर्तुम् ।

एतादृशदुष्करकर्मणि अशक्तस्यापि मादृशस्य मन्दमते गुर्वादेशस्य शिरोधार्यतया कृतोऽयं प्रयत्नश्चेद् भारतीयभिषजा किञ्चिदप्युपकार जातमुपजनयेत्तदात्मान सफलपरिश्रम मन्येयम् ।

अस्मिंश्च ग्रन्थे पारदस्य स्वानुभूता अष्टावेव संस्कारा प्रतिपादिता न तु स्वानुभवपथबहिर्भूता सर्वे (अष्टादश) संस्कारा । अस्यां च रसतरङ्गिण्यां क्वचित्पूर्वाचार्यपद्धतिरेवानुसृता क्वचिच्च नव्यरसायनतन्त्रोक्तसिद्धान्ता एवानुमता मया । तथाहि—

"गन्धाश्मगैरिककाशीसकाङ्क्षीतालशिलाञ्जनम् ।
कङ्कुष्ठं चेत्युपरसाश्चाष्टौ पारदकर्मणि ॥"

इत्यत्र पूर्वाचार्यैरुपरसत्वेन स्वाम्नातानां गैरिककाशीसाञ्जनकङ्कुष्ठानां मध्ये गैरिकं लोहांशविशिष्टतया, काशीसं च रूपान्तरीभूतलोहांशसमन्वितत्वेन, उपधातुषु परिगणितं ग्रन्थेऽस्मिन् । अञ्जनञ्च सीसकादिधात्वंशाभिश्रितत्वेन मिश्रकधातुषु परिसङ्ख्यातम् । कङ्कुष्ठश्च वनौषधिविशेषतया नेह प्रदर्शितम् ॥

कम्पिल्लश्चपलो गौरीपाषाणो नवसादर ।
कपर्दो वह्निजारश्च गिरिसिन्दूरहिङ्गुलौ ॥
मृद्दारशृङ्गमित्यष्टौ साधारणरसा स्मृता ।
रससिद्धिकरा प्रोक्ता नागार्जुनपुरःसरै ॥

इत्यत्र नागार्जुनादिभि सिद्धै साधारणरसत्वेन समाम्नातानां कम्पिल्लनवसारकपर्दवह्निजारगिरिसिन्दूरमृद्दारश्टङ्गाना मध्ये कम्पिल्लो वनौषधिविशेषतया साधारणरसेषु न परिगणित (परित्यक्त एव, निघण्टुग्रन्थैरेव तत्प्रतिपादनीयत्वात्)। नवसारश्च क्षारविशेषात्मकतया इह क्षारविशेषेषु निर्दिष्ट । कपर्दश्च मृतजलजन्तुकीकसविशेषतया जान्तवपदार्थेषु पृथक् परिगणित । वह्निजारस्तु जन्तुविशेषजतयापि प्रायशो रसौषधेष्वप्रयुक्तत्वात् नेह प्रदर्शित । गिरिसिन्दूरमृद्दारश्टङ्गे च सीसकधात्वात्मकतया उपधातुषु परिगणिते।

तार्प्य च विमला तुत्थं कास्य पित्तलकं तथा।
सिन्दूर शैलनिर्यास स्मृता सप्तोपधातव ॥

इत्यत्र उपधातुत्वेन समाम्नातानां कास्यपित्तलशैलनिर्यासानां मध्ये कास्य ताम्रवङ्गाशमिश्रितत्वेन, पित्तल ताम्रयशदाशसमिश्रितत्वेन, शिलाजतु च लोहादिधातुमिश्रितत्वेन मिश्रकधातुषु परिगणितम्।

क्वचिच्च रसतन्त्रनिर्दिष्टानां मृगश्टङ्गसमुद्रफेनादिकानां शोधनमारणादिविधानत्वात् वराटकादिजान्तवपदार्थसमतया जान्तवपदार्थेषु समाम्नान विहितम्। तथा च प्राचीनरसागमेषु सामान्यतया प्रतिपादितानां विषोपविषाणां तत्तद्रसेषु प्रधानाङ्गतया सुसूक्ष्मभावेनावश्यज्ञातव्यतया च पृथगेव परिगणन कृत सविस्तर गुणनिरूपणपूर्वकम्।

क्वचिच्च प्राचीनरसतन्त्रेषु नाममात्रेणाप्यश्रुतानां नव्यरसायनतन्त्रप्रसिद्धानां निम्बूकाम्ल-टङ्कणाम्ल-सोरकाम्लीयरजत-क्षारनालीयकसीसक्रय-गन्धकाम्लीययशदादीनामत्युपयोगिनां विषयाणां संनिवेश कृत ।

अपि च रसोपरसधातूपधात्वादिकानामवश्यप्रतिपत्तव्या स्वानुभूता शास्त्रसमताश्च मात्राभेदा, गुणा, पूर्वाचार्यैरनिरूपिता विशिष्टा गुणा, नवीनव्याधिहरा शास्त्रदृष्टाश्चामयिकप्रयोगा निर्दिष्टा स्तत्र तत्र निर्व्याजम्। इहोक्ताश्च रसोपरसादिकानां शोधनमारणादिविधय प्रायश स्वानुभूता सुखसाध्या एव वा सविस्तर तथा प्रतिपादिता यथा सुकुमारमतयोऽपि शास्त्ररहस्यमधिगन्तु शास्त्रोक्तक्रियाज्ञानायासेनैव साधयितु प्रभवेयु ।

एतद्ग्रन्थनिर्माणे श्रीमद्भिर्गुरुवर्यैः कविराज नरेन्द्रनाथ मित्र महोदयैर्यन्मदत्साहाय्यमनुष्ठितम्, तदुपकारभारं वहामि सादरमवहितचेतसा । यच्च मदीयपरमसुहृद्भिर्विद्यालङ्कारविरुदविभूषितैः श्रीजयदेवशर्ममहोदयैः मुद्रणपत्रसंशोधनादिकर्मणि साहाय्यं सम्पादितं, तदपि कृतज्ञतापूर्वकमभिनन्दनीयम् ।

अन्ते तु—

वर्णयोजकदोषेण ह्यज्ञानाद्वा प्रमादतः ।
कुत्रचित्स्खलनं जातं वर्णान्यत्वादिरूपकम् ॥
संशोधयन्तु सततं सन्तस्तदनुकम्पया ।
स्खलनं यच्च कुत्रापि स्यान्मे पुरुषदोषतः ॥
सयुक्तिकं सूचनीयं श्रीमद्भिस्तद्विशेषतः ।
द्वितीयमुद्रणावृत्तौ तत्सर्वं शोधयिष्यते ॥

इति निवेदयति—
भिषजां वशंवद
सदानन्दशर्म्मा
घिल्डियालोपाह्व ।

मेषार्कांशे ९
विक्रमाब्दा १९८१

## ❀ तरङ्गानुक्रमणिका ❀

ॐ

# * रसतरङ्गिणी *

श्री कंसमर्दिन्यै नमः ।

## अथ रसशालाविज्ञानीयः प्रथमस्तरङ्गः

गणेशमुखचुम्बिनी सुरकदम्बकादम्बिनी
दयामृततरङ्गिणी दनुजसङ्घसंहारिणी ।
अघव्रजनिडम्बिनी हरकुटुम्बिनी संततं
भवत्वमरवन्दिता ममहृदन्तरालम्बिनी ॥ १ ॥
ज्योतिः शास्त्रमहाम्भोधिकर्णधारं नमाम्यहम् ।
जीवानन्दं तु पितरं मातरञ्च सरस्वतीम् ॥ २ ॥
क्वाहं विमूढधिषणः क्व च सूततन्त्र-
माकुण्ठितामलधियामपि यत्र बुद्धिः ।
सत्यं तदेतदपि तत्र तथापि यत्नः
साफल्यमेष्यति गुरोरनुकम्पयायम् ॥ ३ ॥
य इह गुरुसमीपे यत्नतोऽब्दत्रयेण
रसनिगमनिगूढग्रन्थितत्त्वावबोधः ।
अपि च गुरुरहस्यं कर्ममार्गोऽप्यकारि
सरलमधुरपद्यैर्ग्रथ्यते सैष एव ॥ ४ ॥
प्राचीनेषु दुरूहेषु रसतन्त्रेषु मुह्यताम् ।
सन्दिग्धास्वतिकष्टासु रसपाकक्रियासु च ॥ ५ ॥

पदे पदे विशेषेण नित्यं व्यामोहितात्मनाम् ।
ग्रन्थसम्पत्तिहीनानां स्वल्पाध्ययनसम्पदाम् ॥ ६ ॥
इदानीन्तनछात्राणां स्वल्पेन श्रमेण तु ।
सुखेन प्रतिपत्त्यर्थं प्रयत्नोऽयं कृतो मया ॥ ७ ॥
विलिटियालापमज्ञेन सदानन्देन शर्मणा ।
निरमायि महायत्नादियं रसतरङ्गिणी ॥ ८ ॥

रसतरङ्गिण्याः परिचयः ।

सशिलापि निराघाता मनागपि भयोज्झिता ।
सुखावगाहा भूयादियं रसतरङ्गिणी ॥ ९ ॥
समन्तापि निराताशा सत्रापापि स्थिरक्रिया ।
सुखावगाहा जयति भृशं रसतरङ्गिणी ॥ १० ॥

रसवैद्यस्य प्रशंसा ।

तत्तत्संस्काररीत्या यदि रसवर शोधितं स्यान्न यावद्
यावद्वा मारितं स्यात्सकृदपि हि न रसो नो कृता स्याद्बुभुक्षा ।
यद्वा नैवाभ्रसत्त्वं खलु कृतमथवा जारितं वा सुवर्णं
प्राणाचार्यः क तावद्भवति हि भिषजां मण्डले मण्डनीयः ॥११॥
कृतिरियमिह दोषैराचिता स्यान्मदीया
यदि तदपि न धीरैः काप्युपेक्षा विधेया ।
कृमिशतपरिपूर्णा कण्टकाकीर्णकाया
स्वनगि नहि नरेन्द्रैरर्च्यते केतकी किम् ॥ १२ ॥

रसशाला ।

निर्मलपवनप्रदेशगां रमणीयां जलयन्त्रशोभिताम् ।
कमनीयगवाक्षसंयुतां जनबाधारहितामसङ्कुलाम् ॥ १३ ॥

निखिलौषधवर्गमण्डिता रससिद्धेश्वरचित्रभूषिताम् ।
निपुलाखिलसाधनान्विता रसशाला विदधीत शोभनाम् ॥१४॥

रसशालायाः कर्मविभागः ।

शङ्करं पूर्वदिग्भागे स्थापयेद्भिषजाग्रणीः ।
आग्नेये वह्निकार्याणि याम्ये प्रस्तरकृत्यकम् ॥ १५ ॥
शस्त्रकृत्यन्तु नैर्ऋत्ये क्षालनादीनि वारुणे ।
वायव्ये शोषणं शस्तमुत्तरे यन्त्ररक्षणम् ॥ १६ ॥
निदध्यादैशिकोणे तु रससाधनमूलकम् ।
मुख्योपकरणं तत्तन्नित्यकृत्यसमागतम् ॥ १७ ॥

रसशालायां उपकरणद्रव्याणि—

द्रोणीरूपा वर्तुलाश्च खल्वाः पाषाणनिर्मिताः ।
आयमाश्चापि सग्राह्यास्तद्योग्याश्चैव मर्दकाः ॥ १८ ॥
काचमृत्काष्ठलोहादिनिर्मितानि वहूनि च ।
पात्राणि कारयेद्धीमान् यत्नतः पात्रमानवित् ॥ १९ ॥
सन्दंशिका कर्तरी च तथा शूर्पमुदूखलम् ।
चालनी वह्निमित्रा च स्थापनीया प्रयत्नतः ॥ २० ॥
दोलायन्त्रादिकानाञ्च सामग्री निखिलामपि ।
सुरक्षिते प्रदेशे तु स्थापयेद्भिषजाग्रणीः ॥ २१ ॥
सुदृढा विविधाकारा कूपिका काचनिर्मिता ।
सपिधाना सिद्धरसस्थापनाय समाहरेत् ॥ २२ ॥
विविधानि सुरूपाणि पित्तलादिकृतानि च ।
मानयुक्तानि वैद्यस्तुलायन्त्राणि रक्षयेत् ॥ २३ ॥
मसृणान्यतिनूत्नानि कागदानि मितानि तु ।

रसौषधप्रदानार्थं प्रशस्यन्ते भिषग्वरैः ॥ २४ ॥
वन्योत्पलानि काष्ठानि तुषाद्यानि तृणानि च ।
शिखित्रान् कोकिलाश्चापि रक्षयेद्भिषजां वरः ॥ २५ ॥
यच्चान्यदुपयोगि स्याद् देशकालाद्यपेक्षया ।
तत्तत्सस्थापयेत्तत्र रसकर्मविशारदः ॥ २६ ॥
प्रत्यहं कारयेद्धीमान् शालाया मार्जनादिकम् ।
भृत्यैः कर्मसु निष्णातैः मलाऽऽतङ्कनिवृत्तये ॥ २७ ॥

परिचारकलक्षणम्

सोद्यमाः सत्यवक्तारो निर्लोभाः शुचयः परम् ।
शूराः पथ्याशिनो ग्राह्या भिषग्भिः परिचारकाः ॥ २८ ॥

रससिद्धानां नामपरिगणनम्

श्रीशङ्करो भैरवश्च नन्दी स्वच्छन्दभैरवः ।
मन्थानभैरवः शम्भुर्ब्रह्मा विष्णुश्च भास्करः ॥ २९ ॥
कापालिकश्च लङ्केशो ह्यगस्त्यो नरवाहनः ।
नागार्जुनो नरेन्द्रश्च काकचण्डीश्वराभिधः ॥ ३० ॥
मत्तो माण्डव्ययोगीन्द्रो नागबोधिर्विशारदः ।
यशोधनो रत्नकोशो व्याडिर्गोरक्षनाथकः ॥ ३१ ॥
सुगृहीताभिधेयास्तु रससिद्धा इमे मताः ।
नामान्येतानि हि पठेत् प्रत्यहं रससिद्धये ॥ ३२ ॥

रसशास्त्राचार्यस्य स्वरूपम्

सदाचारः सुचरितः समदर्शी सदाशयः ।
सत्यवादी सिद्धमन्त्रः सर्वदा शङ्करप्रियः ॥ ३३ ॥
धीरो वीरः स्थिरप्रज्ञो रसकर्मविचक्षणः ।

रसतन्त्रस्वतन्त्रो यः स आचार्यः प्रशस्यते ॥ ३४ ॥

शिष्यस्य स्वरूपम्

सदाशयः सदाचारः स्वकुलाचारदीक्षितः ।
गुरुपूजारतो धीरः सत्यवादी दृढव्रतः ॥ ३५ ॥
आज्ञापरो निरालस्यो कुलीनोऽतिविचक्षणः ।
आयुर्वेदकृताभ्यासः शिष्यः खलु प्रशस्यते ॥ ३६ ॥

शिष्योपनयने वर्जनीयाः

दुराचारा दुश्चरिता अकुलीना मदोद्धताः ।
चौर्यच्छलादिना नित्यं विद्याग्रहणलोलुपाः ॥ ३७ ॥
अज्ञातकुलशीला ये नास्तिका गुरुनिन्दकाः ।
शिष्योपनयने हेया नरा रसविशारदैः ॥ ३८ ॥

इति रसशालाविज्ञानीयो नाम प्रथमस्तरङ्गः ।

---

## अथ परिभाषाविज्ञानीयो द्वितीयस्तरङ्गः ।

परिभाषाविज्ञानफलम्

परिभाषाध्यायमादौ योऽधीते रससाधकः ।
रसतन्त्रार्थविज्ञाने न स मुह्यति कर्हिचित् ॥ १ ॥

परिभाषा लक्षणम्

निगूढानुक्तलेशोक्तसन्दिग्धार्थप्रदीपिका ।
सुनिश्चितार्था विबुधैः परिभाषा निगद्यते ॥ २ ॥

लवणपञ्चकम्

सैन्धवश्चाथ सामुद्रं विडं सौवर्चलं तथा ।
रोमकश्चेति विज्ञेयं बुधैर्लवणपञ्चकम् ॥ ३ ॥

लवणत्रिकम्

सिन्धुजं रुचकं पाक्यमेतत् त्रिलवणं स्मृतम् ।
प्रकीर्तितञ्च लवणत्रिकमुत लवणत्रयम् ॥ ४ ॥

सैन्धवस्य मुख्यत्वम्

तत्रापि सैन्धवं मुख्यं विद्वद्भिः परिकीर्तितम् ।
उक्ते लवणसामान्ये सैन्धवं विनियोजयेत् ॥ ५ ॥

क्षारद्वयं क्षारत्रिकञ्च

स्वर्जिक्षारो यवक्षारः क्षारद्वयमुदाहृतम् ।
सौभाग्येनसमायुक्तं क्षारत्रिकमुदाहृतम् ॥ ६ ॥

क्षारपञ्चकम्

मुष्कक्षारो यवक्षारः किंशुकक्षार एव च ।
सर्जिक्षारस्तिलक्षारः क्षारपञ्चकमुच्यते ॥ ७ ॥

क्षाराष्टकम्

सुधापलाशशिखरिचिञ्चार्कतिलनालजाः ।
स्वर्जिका यावशूकश्च क्षाराष्टकमुदाहृतम् ॥ ८ ॥

मूत्राष्टकम्

सैरिभाजाविकरभगोखराद्विपवाजिनाम् ।
मूत्राणीति भिषग्वर्यैर्मूत्राष्टकमुदाहृतम् ॥ ९ ॥

खरेभोष्ट्रतुरङ्गाणां पुंसां मूत्रं प्रशस्यते ।
गोजाविमहिषाणाञ्च मूत्रं स्त्रीणां हितं मतम् ॥ १० ॥

निखिलेष्वपि मूत्रेषु गोमूत्रं गुणवत्तमम् ।
अतो विशेषानुक्तौ तु गोमूत्रं विनियोजयेत् ॥ ११ ॥

गोरजम्

गोखुरैस्ताडितं गोष्ठे शुष्कं चूर्णोपमञ्च यत् ।

गोमय तत्समाख्यात बुधैर्गोविरसञ्ज्ञकम् ॥ १२ ॥

अम्लवर्ग

जम्बीर निम्बुकश्चैव त्वम्लवेतसमम्लिका ।
नारङ्ग दाडिमश्चैव वृक्षाम्ल बीजपूरकम् ॥ १३ ॥
चाङ्गेरी चणकाम्लश्च कर्कन्धुः करमर्दकः ।
चुक्रिका चेति सामान्यादम्लवर्ग' प्रकीर्तित' ॥ १४ ॥

अम्लपञ्चकम

अम्लवेतसजम्बीरलुङ्गनारङ्गनिम्बुकै ।
फलपञ्चाम्लक ख्यात कीर्तितञ्चाम्लपञ्चकम् ॥ १५ ॥

अपरमम्लपञ्चकम्

कोलदाडिमवृक्षाम्लचाङ्गेरीचिञ्चिकारसै. ।
पञ्चाम्लक समाख्यात त्वम्लपञ्चकमेव च ॥ १६ ॥
सर्वेषामम्लजातीना निम्बूक गुणवत्तमम् ।
अम्लवेतसकञ्चापि त्वम्लिका वा गुणाधिका ॥ १७ ॥

पञ्चतिक्तकम्

गुडूची निम्बमूलत्वक भिषड्माता निदिग्धिका ।
पटोलपत्रमित्येतत् पञ्चतिक्त प्रकीर्तितम् ॥ १८ ॥

पञ्चमृत्तिका

इष्टिका चूर्णक भस्म तथा वल्मीकमृत्तिका ।
गैरिक लवणश्चेति कीर्तिता' पञ्चमृत्तिकाः ॥ १९ ॥

मधुरत्रिकम्

आज्य गुडो माक्षिकञ्च विज्ञेय मधुरत्रिकम् ।
मत त्रिमधुरञ्चापि तथैव मधुरत्रयम् ॥ २० ॥

पञ्चामृतम्

गव्यं क्षीरं दधि घृतं माक्षिकञ्चाथ शर्करा ।
पञ्चामृतं समाख्यातं रसकर्मप्रसाधकम् ॥ २१ ॥

पञ्चगव्यम्

गव्यं क्षीरं दधि घृतं गोमूत्रं गोमयं तथा ।
एकत्र योजितं तुल्यं पञ्चगव्यमिहोच्यते ॥ २२ ॥

क्षीरत्रयम्

रविक्षीरं वटक्षीरं स्नुहीक्षीरन्तथैव च ।
क्षीरत्रयमिति ख्यातं मारणादौ प्रशस्यते ॥ २३ ॥

दुग्धवर्गः

करिणी घोटिका धेनुस्त्वविका छागिकोष्ट्रिका ।
महिषी गर्दभी नारी काकोदुम्बरिका सुधा ॥ २४ ॥
दुग्धिकोदुम्बरश्चार्को न्यग्रोधोऽश्वत्थतिल्वकौ ।
एषां दुग्धं समाख्यातो दुग्धवर्गः समासतः ॥ २५ ॥

तैलवर्गः

तिलसर्षपकोन्मत्तभल्लातैरण्डनिम्बजम् ।
उमादीनाञ्च तैलैस्तु तैलवर्गोऽत्र सम्मतः ॥ २६ ॥

कज्जलीस्वरूपम्

निर्द्रवैर्धातुभिश्चाथ गन्धादिभि-
पेषितः पारदः श्लक्ष्णतां प्रापितः ।
कज्जलाभो यदा जायतेऽसौ तदा-
नामतः कोविदैः कज्जलीत्युच्यते ॥ २७ ॥
कज्जली कज्जलश्चैव मता कज्जलिका च सा ।
रससम्पादनादौ च विशेषात्मा विधीयते ॥ २८ ॥

रसपङ्कस्य लक्षणम्

सद्रवैर्गन्धकाद्यैश्च धातुभिः पेषितो रसः ।
सुश्लक्ष्णः पङ्कसङ्काशो रसपङ्क इति स्मृतः ॥ २९ ॥

पिष्टिका

सूत निमर्द्य गन्धेन दुग्धाद्यैस्तु द्रवैस्तथा ।
पेषणात् पिष्टता नीता मता पिष्टी च पिष्टिका ॥ ३० ॥

हिंगुलाकृष्टो रस

ऊर्ध्वपातनयन्त्रेण हिंगुलादुत्थितो रसः ।
हिङ्गुलोत्थः स्मृतश्चैव हिङ्गुलाकृष्ट उच्यते ॥ ३१ ॥

धातुसत्वलक्षणम्

कोष्ठ्या ध्मातस्य यत्नादेद्द्रावकौषधिभिः समम् ।
सारो यो निर्गत सोऽत्र सत्वमित्यभिधीयते ॥ ३२ ॥

वनौषधिसत्वलक्षणम्

बाष्पस्वेदनयन्त्रेण वनौषधिसमुद्भवः ।
सार सत्त्वमिति प्रोक्त रसतन्त्रविचक्षणैः ॥ ३३ ॥

सिक्थतैलस्य लक्षणम्

सिक्थक तिलतैलञ्च युक्तमानविमिश्रितम् ।
विपक्व नवनीताभ सिक्थतैल प्रकीर्तितम् ॥ ३४ ॥

द्रावको गण

गुञ्जा मधु गुड सर्पि सौभाग्य गुग्गुलुस्तथा ।
पूर्वाचार्ये कीर्तितोऽय धातूना द्रावको गण ॥ ३५ ॥

ढालनम

सद्रावितस्य द्रव्यस्य द्रवे निक्षेपणन्तु यत् ।
ढालन तत्समुद्दिष्ट रसकर्मविशारदैः ॥ ३६ ॥

मित्रपञ्चकम्

आज्य गुञ्जाथ सौभाग्य क्षौद्र च पुरसञ्ज्ञकम् ।
एतत्तु मिलित विज्ञैर्मित्रपञ्चकमुच्यते ॥ ३७ ॥

निनिधाना तु लोहाना द्रावणाय निक्षिपेत् ।
रसतन्त्रेषु निक्षेपः प्रयुज्यत मिनपञ्चकम् ॥ ३८ ॥

आवापलक्षणम्

द्रव्यान्तरानिनिक्षेपो द्रुते वङ्गादिके तु यः ।
क्रियेत स प्रतीवाप आवापश्च निगद्यते ॥ ३९ ॥

निर्वापलक्षणम्

धात्वादेर्वह्नितप्तस्य जलादौ यन्निषेचनम् ।
स निर्वापः स्मृतश्चापि निषेकः स्नपनञ्च तत् ॥ ४० ॥

शुद्धावर्तलक्षणम्

यदा तु ज्वलनो ज्वालाकुलः शुभ्रमुत्थितिः ।
सत्वनिर्गमकाल स शुद्धावर्त इति स्मृत ॥ ४१ ॥

पर्पटी स्वरूपम्

सद्राविता कज्जलिकाग्नियोगात्
रम्भापलाशे चिपिटीकृता च ।
रसागमेषु खलु पर्पटी सा
प्रकीर्तिता पर्पटिका च सैव ॥ ४२ ॥

ताडनम्

यत् श्लिष्टलोहयोरेकतरस्य परिणाशनम् ।
अपरस्य च लोहस्य भवेच्च परिमार्जनम् ॥ ४३ ॥
आध्मानाद् वङ्कनालेन ताडन तदिहोच्यते ।
सञ्जातताडनं लोहं ताडित परिकीर्तितम् ॥ ४४ ॥

घोषाकृष्टताम्रम्

ताडित वङ्कनालेन सौषध घोषकं यदा ।
स्यान्मुक्तरङ्ग तत्ताम्रं घोषाकृष्टमिहोच्यते ॥ ४५ ॥

वङ्कनालम्

करप्रमाण यन्नाल पित्तलादिविनिर्मितम् ।

वह्नौ फूत्कारदानाय वङ्कनालं तदुच्यते ॥ ४६ ॥

स्वाङ्गशीतस्य लक्षणम्

ज्वलनास्थितमेवेह शीतलत्वमुपैति यत्।
स्वाङ्गशीतं तदुद्दिष्टं स्वतःशीतश्च तन्मतम् ॥ ४७ ॥

बहिःशीतलक्षणम्

वह्नेर्बहिः समानीय यद् द्रव्यं याति शीतताम्।
बहिःशीतं तदुद्दिष्टं नाह्यशीतश्च तन्मतम् ॥ ४८ ॥

भावनालक्षणम्

यच्चूर्णितस्य धात्वादेर्द्रवैः सम्पेष्य शोषणम्।
भावनं तन्मतं विज्ञैर्भावना च निगद्यते ॥ ४९ ॥

भावनाया द्रवपरिमाणम्

द्रवेण यावता द्रव्यं चूर्णितं स्यार्द्रतां व्रजेत्।
तावतैव द्रवो देयो भिषग्भिर्भावनाविधौ ॥ ५० ॥
भाव्यद्रव्यमितः क्वाथ्यो जलमष्टगुणं ततः।
वस्वशशेषितः क्वाथो देयः क्वाथेन भावने ॥ ५१ ॥

शोधनम्

उद्दिष्टैरौषधैः सार्द्धं क्रियते पेषणादिकम्।
मलविच्छित्तये यत्तु शोधनं तदिहोच्यते ॥ ५२ ॥

वारितर लक्षणम्

मृतं लोहं विनिक्षिप्तं यदा तरति वारिणि।
रसतन्त्रसुनिष्णातैस्तद् वारितरमीरितम् ॥ ५३ ॥

मृतलोहम्

तर्जन्यङ्गुष्ठसंघृष्टं विशेद्रेखान्तरं तु यत्।
निरिष्टश्च वह्निनाति मृतलोहं तदुच्यते ॥ ५४ ॥
मृतं लोहं पुटे ध्मातं ताराज्यमधुसंयुतम्।
न त्यजेत्स्वारमानस्वा मृतलोहं तदुच्यते ॥ ५५ ॥

अपुनर्भवलक्षणम्

सामिरपञ्चक घ्मात प्रकृति नैति यत् पुन ।
अपुनर्भवमुक्त तन्निरुत्थ च तदीरितम् ॥ ५६ ॥

निरुत्थलक्षणम्

अपुनर्भवसञ्ज्ञ यल्लोह तारसमान्वितम् ।
यदा तारेण लगति तन्निरुत्थमिहोच्यते ॥ ५७ ॥

अमृतीकरणम्

लोहादीना मृताना वै शिष्टदोषापनुत्तये ।
क्रियते यस्तु सस्कार अमृतीकरण मतम् ॥ ५८ ॥

परिस्रुतसलिलम्

यन्त्रेण नाडिकाख्येन वह्निसतापयोगत ।
विन्दुशो यत्स्रुत नीर तत्परिस्रुतमुच्यते ॥ ५९ ॥

मानपरिभाषा

मानमादौ परीक्षेत योगान्निर्मापयेत्तत ।
योगनिर्माणसिद्ध्यर्थं मान निर्दिश्यतेऽधुना ॥ ६० ॥
षड्भिस्तु सर्षपैर्गौरैर्यवस्त्वेक प्रकीर्तित ।
त्रिभिर्यवैश्च गुञ्जका मता सैवेह रक्तिका ॥ ६१ ॥
वसुसख्योन्मिताभिश्च रक्तिकाभिस्तु माषक ।
माषकै रविसख्यातैस्तोलक परिकीर्तितम् ॥ ६२ ॥
वटक क्षुद्रकश्चैव द्रक्षणश्च प्रकीर्तित ।
तोलकद्वितयेनेह कर्ष स्यात्सैव तिन्दुक ॥ ६३ ॥
अक्ष स एव कथितो बिडालपदक तथा ।
करलग्रहमज्ञश्च सुवर्णश्च निगद्यते ॥ ६४ ॥
कर्षद्वय स्यदर्द्धपल स्यात्शुक्तिश्च निगद्यते ।
सवा चाष्टमिका सैव पलार्द्धञ्च प्रकीर्तितम् ॥ ६५ ॥

शुक्तिभ्यान्तु पल ज्ञेय मुष्टिः षोडशिका च सा ।
चतुर्थिका च बिल्वश्च प्रकुञ्चश्च निगद्यते ॥ ६६ ॥
पलाभ्या प्रसृत ज्ञेय प्रसृतिश्च निगद्यते ।
प्रसृतिभ्या समाख्यात' कुडवश्चाञ्जलिः स्मृतः ॥ ६७ ॥
कुडवाभ्या शराव' स्यात् मानिकाच निगद्यते ।
तदष्टाष्टपल ख्यात रसतन्त्रे विचक्षणै' ॥ ६८ ॥
दशभिश्च पलैरत्र सेरस्त्वाधुनिकः स्मृतः ।
अशीतितोलकमित' स एव सेरकः स्मृत' ॥ ६९ ॥

धन्वन्तरिभाग —

अर्द्धं सिद्धरसादीना तथैव घृततैलयो ।
पादस्तु मृतधात्वादेरवलेहस्य चाष्टम' ॥ ७० ॥
भागस्तुरीयोऽरिष्टादेश्चूर्णादीनाञ्च सप्तमः ।
भिषग्वराय लोकेऽस्मिन् स्वास्थ्यमङ्गलकाम्यया ॥ ७१ ॥
धन्वन्तरिं विनिर्दिश्य रोगिभिर्दीयते तु यः ।
पूर्वाचार्यैः समाख्यातो भागो धन्वन्तरेस्तु स. ॥ ७२ ॥

विश्वासघातको वैद्य

भागाद्धन्वन्तरेर्लोभादधिक यो हरेद्भिषक् ।
दद्याच्च भेषज दुष्ट स वै विश्वासघातकः ॥ ७३ ॥
इयमिह रसतन्त्रागाधरत्नाकराद्या
परिचितपरिभाषामूल्यरत्नानि चित्वा ।
रुचिरतरनिवेशा गुम्फिता कण्ठमाला
भवतु विबुधकण्ठालम्बिनी सा नितान्तम् ॥ ७४ ॥

इति परिभाषाविज्ञानीयो नाम द्वितीयस्तरङ्ग' ।

## अथ मूषादिविज्ञानीयस्तुरीयस्तरङ्गः ।

### मूषानामानि

मूषा हि कुमुदी ख्याता प्रोक्ता कुमुदिका च सा ।
क्रौञ्चिका वह्निमित्रा च पाचनी च निगद्यते ॥ १ ॥
मुष्णाति दोषान् यस्मात्सा तस्मान्मूषा प्रकीर्तिता ।
कुमुदाकारसादृश्यात् कुमुदी च निगद्यते ॥ २ ॥
वह्निर्मित्रं यतस्तस्या वह्निमित्रा ततः स्मृता ।
द्रव्यपाचनयोगाच्च पाचनी समुदीरिता ॥ ३ ॥

### पिधानम्

द्रव्यगुप्तिमूषादेः द्रव्यपातनिवृत्तये ।
आच्छादकं भवेद् यत्तु पिधानं तदिहोच्यते ॥ ४ ॥

### सन्धिबन्धनम्

मूषादीनां तु यः सन्धौ क्रियार्थं स्याद्विलेपनम् ।
तत्सन्धिलेपनं स्यात्तु तथोक्तं सन्धिबन्धनम् ॥ ५ ॥

### मूषानिर्माणोचिता मृत्तिका

सशर्करा पाण्डुरा च वह्नितापसहा चिरम् ।
स्थूला च मृत्तिका या स्यात् मूषार्थं सा मतोत्तमा ॥ ६ ॥

### सामान्यमूषा

शिखित्रकैर्दग्धतुषैः शणेन
मलद्दिका दण्डसुकुट्टिता च ।
या मृत्तिका तद्विहिता तु मूषा
सामान्यमूषा कथिता रसज्ञैः ॥ ७ ॥

### वज्रमूषा

त्रयो भागा मृदो द्वौ तु शणलद्दिकयोस्तथा ।
भागो दग्धतुषादेश्च किट्टस्त्वर्ध एव च ॥ ८ ॥

एभिः कृता तु या मूषा वज्रमूषा तु सा मता ।
प्रयुज्यते विशेषेण सत्वपातनकर्मणि ॥ ९ ॥

योगमूषा

तुषाद्यैश्च निडाद्यैश्च कृता चापि निर्लेपिता ।
सूतसिद्धिकरी चैषा योगमूषा निगद्यते ॥ १० ॥

वज्रद्रावणिका मूषा

समैर्भूनागगाराद्यैस्तुषाद्यैश्चापि निर्मिता ।
क्षीरैश्च माहिषैर्मूषा वज्रद्रावणिका मता ॥ ११ ॥
वज्रद्रावणिका मूषा वज्रसत्वप्रसाधिका ।
यामद्वयमपि ध्माता नासौ द्रवति कर्हिचित् ॥ १२ ॥

गारमूषा

दग्धपङ्गुणगारेण मृदा चामितया तु या ।
विधीयते च किट्टाद्यैर्गारमूषा तु सा मता ॥ १३ ॥
यामयुग्ममपि ध्माता नासौ द्रवति निश्चितम् ।
ढालनार्दौ विशेषेण रसज्ञैः सा प्रयुज्यते ॥ १४ ॥

गोस्तनीमूषा

सपिधाना शिखोपेता गोस्तनाकारसन्निभा ।
सत्वद्रावणशुद्ध्यर्थं सा मूषा गोस्तनी मता ॥ १५ ॥[1]

मल्लमूषा

सम्पुटाकारता नीता मल्लद्वितययोजनात् ।
मल्लमूषा समाख्याता पर्पट्यादिप्रसाधिका ॥ १६ ॥

महामूषा

वर्तुला चिपिटा मूले स्थूला चायामविस्तरा ।

---

1 इयमेव मूषा रसार्णवे अन्धमूषाख्यया प्रतिपादिता । तथा हि—
"अन्धमूषा तु कर्तव्या गोस्तनाकारसन्निभा ।
पिधानकसमायुक्ता किञ्चिदुन्नतमस्तका ॥ १ ॥
[चतुर्थपटल ]

निस्सृतास्या च या मूषा महामूषा तु सा मता ॥ १७ ॥
लोहाभ्रनाप्यसत्वादे पुटनाय भिषग्वरैः ।
प्रयुज्यते महामूषा स्थूलमूषा च सा स्मृता ॥ १८ ॥

वृन्ताकमूषा

धत्तूरपुष्पाकारेण सच्छिद्राष्टाङ्गुलेन च ।
नालेन तूर्ध्वतः श्लिष्टा सुदृढा द्वादशाङ्गुला ॥ १९ ॥
वृन्ताकसदृशाकारा मूषा वृन्ताकमूषिका ।
साधयेत्खर्परादीनां सत्त्वं वै मूषयाऽनया ॥ २० ॥

मूषाप्यायनम्

द्रव्ये द्रवोन्मुखे जाते मूषाया वह्नियोगतः ।
निष्कासनं क्षणं यत्तु तन्मूषाप्यायनं मतम् ॥ २१ ॥

अङ्गारधानिका

अङ्गारधानिका ख्याता हसन्ती च हसन्तिका ।
अङ्गारशकटी चापि हसनी च निगद्यते ॥ २२ ॥
अङ्गारधानिका ह्येषा मृदुद्रव्यप्रसाधिका ।
वङ्गादीनां ढालनादौ विशेषेण प्रयुज्यते ॥ २३ ॥

कोष्ठिका

सत्त्वादिपातनार्था या द्रव्यढालनसाधिका ।
वह्निसन्धानिका या तु कोष्ठिका सा निगद्यते ॥ २४ ॥

अङ्गारकोष्ठिका

रूपहस्तमितोत्सेधे तदर्धायामनिम्नगा ।
मध्यतश्चतुरस्रा च मृदा च परिलेपिता ॥ २५ ॥
चतुरङ्गुलमानेन रन्ध्रेण परिशोभिता ।
नालिकां समकोणाश्च रन्ध्रे तिर्यङ् निवेशयेत् ॥ २६ ॥
नालिकाया मुखे चैव भस्त्रानक्रं निवेशयेत् ।

आपूर्य कोकिलैः कोष्ठी द्रव्यमूषान्विता धमेत् ॥ २७ ॥
अङ्गारकोष्ठिका ख्याता द्रव्यढालनसाधिका ।
सत्त्वानां पातने चेयं विशेषाद्विनियुज्यते ॥ २८ ॥

पातालकोष्ठिका

वितस्तिविस्तृतं गर्तं भूमौ कुर्याद्विधानतः ।
तन्मध्ये वर्तुलं छिद्रं निम्नदेशे प्रकल्पयेत् ॥ २९ ॥
गर्तमध्यगते छिद्रे तिर्यङ् नालं निवेशयेत् ।
नालवक्त्रे च भस्त्राया मुखं सम्यङ् निरोधयेत् ॥ ३० ॥
द्रव्यमूषां कोष्ठिकायां निधाय भस्त्रया धमेत् ।
पातालकोष्ठिका चैषा मृदुद्रव्यप्रसाधिका ॥ ३१ ॥

अथ पुटलक्षणम्

रसोपरसलोहादेः पाकमानप्रमापकम् ।
उत्पलाद्यग्निसंयोगात् यत्तदत्र पुटं स्मृतम् ॥ ३२ ॥

पुटप्रयोजनम्

भवेद्यतः पुटादेव दोषहानिर्गुणोदयः ।
रसोपरसलोहानां पुटपाकस्ततः स्मृतः ॥ ३३ ॥
पुटपाकेन लोहादेर्निरुत्थरसश्च दीपनम् ।
भवेद्वारितरत्वञ्च पुटपाकस्ततः स्मृतः ॥ ३४ ॥
मृतलोहादिकं यस्माद्गतिशेते मृतं रसम् ।
पुटपाकविधानेन, पुटं तस्मात्प्रशस्यते ॥ ३५ ॥

सामान्यपुटलक्षणम्

मूषागते तु लोहादौ पुटनीये विशेषधा ।
वह्निस्तु स्वानुकूल्येन तथा स्यात्तु पुटक्रमः ॥ ३६ ॥

सूर्यपुटलक्षणम्

द्रव्याणां भावितानान्तु भावनौषधजै रसैः ।
शोषणं सूर्यतापे यत्तत्सूर्यपुटमुच्यते ॥ ३७ ॥

महापुटम्

व्यामार्द्धनिम्ने चतुरस्ररूपे हस्तद्वयायाममिते च कुण्डे ।
वन्योत्पलापूरितगर्भभागे मूषां निदध्यात्पुटनीयपूर्णाम् ॥३८॥
पुनस्तु विन्यस्य वनोपलानि सम्पूरयेत्कुण्डमुखं रसज्ञ ।
सन्दीप्य वह्निं पुटनं ततस्तन्महापुटाख्यं विबुधैः प्रदिष्टम् ॥३९॥

गजपुटम्

नृपकरचतुरस्रे सेधदैर्घ्ये तु कुण्डे
छगणगणभृतार्द्धे मूषिकां स्थापयित्वा ।
पुटनमिह भवेद्यच्छगणपूर्णार्द्धभागे
गजपुटमिह तन्त्रे भाषितं तज्ज्ञमर्त्यैः ॥ ४० ॥

वाराहपुटम्

कुण्डे त्वरत्निमानेन चतुरस्रे तथोन्निम्ने ।
पुटं यद् दीयते तत्तु वाराहपुटमुच्यते ॥ ४१ ॥

कुक्कुटपुटम्

वितस्तिद्वयमानेन निम्ने च चतुरस्रके ।
पुटं यद्दीयते तत्तु मतं कुक्कुटकं बुधैः ॥ ४२ ॥

कपोतपुटम्

वन्योत्पलैरष्टसङ्ख्यैः क्षितौ यद्दीयते पुटम् ।
रसादीनान्तु सिद्ध्यर्थं तत्कपोतपुटं स्मृतम् ॥ ४३ ॥

गोर्वरपुटम्

गोर्वरैर्वा तुषैर्वापि खलु कुण्डेऽथवा क्षितौ ।
पुटं यद्दीयते विज्ञैस्तद् गोर्वरपुटं स्मृतम् ॥ ४४ ॥

भाण्डपुटम्

मूषागर्भे तुषापूर्णे स्थूले भाण्डेऽभियोजनात् ।
दीयते यत्पुटं विज्ञैस्तद् भाण्डपुटमुच्यते ॥ ४५ ॥

वालुकापुटम्

प्रतप्तवालुकागर्भे न्यस्य मूषादिकं दृढम् ।
यद् दीयते पुटं तत्तु वालुकापुटमुच्यते ॥ ४६ ॥

भूधरपुटम्

भूमिगर्भे क्षुमुदिकां विन्यस्य व्यङ्गुलोपरि ।
यद् दीयते पुटं तत्तु पुटं भूधरसञ्ज्ञकम् ॥ ४७ ॥

लावकपुटम्

गोर्वरैर्वा तुषैर्वापि वितस्त्यूर्ध्वं पुटन्तु यत् ।
मृदुद्रव्यप्रसिद्ध्यर्थं तल्लावकपुटं मतम् ॥ ४८ ॥

पुटमानानुक्तौ पुटप्रदानप्रकारः

पुटनाम्नामनिर्देशे वीक्ष्य द्रव्यबलाबलम् ।
पुटेष्वन्यतमं दद्यात् यत्स्याद्युक्ततमं भृशम् ॥ ४९ ॥

उपलनामानि

उपलं चोत्पलं ख्यातं गिरिण्डं पिष्टकन्तथा ।
छाणश्च छगणश्चैव करीषश्च निगद्यते ॥ ५० ॥

इति मूषादिविज्ञानीयो नाम तृतीयस्तरङ्गः ।

---

## अथ यन्त्रविज्ञानीयश्चतुर्थस्तरङ्गः ।

यन्त्रलक्षणम्

रसोपरसलोहाद्या मारणाद्यर्थसिद्धये ।
यन्त्र्यन्तेऽनेन यस्मात्तु तस्माद् यन्त्रं प्रकीर्तितम् ॥ १ ॥

दोलायन्त्रलक्षणम्

सूतादिकं स्वेदनीयं निक्षिपेत् त्रिगुणाम्बरे ।
स्फोटकेन निरुध्याथ पोट्टलीं कारयेद् भृशम् ॥ २ ॥

पूरितार्द्धोदरे भाण्डे द्रवैस्तन्मुखपार्श्वयोः ।
रन्ध्रद्वयं विधायाथ तत्र दण्डं विनिक्षिपेत् ॥ ३ ॥
दण्डमध्ये तु सुदृढं बध्नीयाद् द्रव्यपोट्टलीम् ।
गुरुदर्शितमार्गेण वह्निं प्रज्वालयेदधः ॥ ४ ॥
स्वेदयेच्च ततश्चैतद् दोलायन्त्रमिति स्मृतम् ।
द्रव्याणां शोधनाद्यर्थं विशेषेण नियुज्यते ॥ ५ ॥

ऊर्ध्वपातनयन्त्रम्

द्वादशाङ्गुलमुखी सुवर्तुला सुदृढा च खलु गर्भविस्तृता ।
अङ्गुलद्वयमितोष्ठसंयुता पातने भवति निम्नगा घटी ॥ ६ ॥
उत्कसर्जगुणसंयुता तले छिद्रयुक्तदृढवृत्तिकान्विता ।
ऊर्ध्वगा च जठरोज्झला घटी तूर्ध्वपातनविधौ प्रशस्यते ॥ ७ ॥
निम्नगायां रसं क्षिप्त्वा मेलयेदनयोर्मुखम् ।
सम्यक् शोषयेत् सन्धिं चुल्ल्यामारोपयेत्ततः ॥ ८ ॥
नलिकां वृत्तिकाछिद्रे न्यस्य सन्धिं प्रलेपयेत् ।
वृत्तिमध्ये क्षिपेत्तोयं नलिकामुखमार्गतः ॥ ९ ॥
तप्तं निष्कासयेत्तोयं शीतलञ्च विनिक्षिपेत् ।
रसज्ञैः कीर्तितमिदमूर्ध्वपातनयन्त्रकम् ॥ १० ॥

अधःपातनयन्त्रम्

ऊर्ध्वपात्रान्तरे सूतं क्षिप्त्वाधःपात्रके जलम् ।
निक्षिप्य भूमौ गर्तञ्च विधाय विन्यसेद् दृढम् ॥ ११ ॥
प्रदीप्तैश्छगणैस्तत्र वह्निं प्रज्वालयेद् भृशम् ।
रसज्ञैः कीर्तितमिदमधःपातनयन्त्रकम् ॥ १२ ॥

तिर्यक्पातनयन्त्रम्

नतनालं घटे दीर्घं रसराजं विनिक्षिपेत् ।
तन्नालं योजयेदन्यकुम्भगर्भे प्रयत्नतः ॥ १३ ॥

रोधयेदथ यत्नेन रसगर्भघटीमुखम् ।
ततो रसघटस्याधो वह्निं प्रज्वालयेद् भृशम् ॥ १४ ॥
पूरयेच्च घटं त्वन्यं निर्मलैः शीतलैर्जलैः ।
यन्त्रमेतत्समाख्यातं तिर्यक्पातनसंज्ञकम् ॥ १५ ॥

भस्मयन्त्रम्

मृन्निर्मितं पात्रमिहाहरेद् दृढं
वितस्तिगम्भीरमथोऽतिनूतनम् ।
भूत्या तदर्धं परिपूर्य यत्नात्
तालादिगोलान् क्रमशो निदध्यात् ॥ १६ ॥
निर्दिष्टभूत्यैव तदूर्ध्वभागं
प्रपूर्य समुद्र्य च भाण्डवक्त्रम् ।
चुल्यां निधायाग्निमथ प्रदद्या-
देतन्मतं वै खलु भस्मयन्त्रम् ॥ १७ ॥

कच्छपयन्त्रस्य स्वरूपम्

जलपूरितभाजनमध्यगतं
घटखर्परके विनिधाय रसम् ।
नलिमध्यगतं कुमुदीनिहितं
चषकेन भृशं पिदधीत ततः ॥ १८ ॥
कृतसन्धिविलेपनमम्बुमृदा
खलु खादिरकोकिलकैर्ज्वलनम् ।
परिदीप्य भृशं सुपचेद् गदितं
किल कच्छपसंज्ञकयन्त्रमिदम् ॥ १९ ॥
बलिजारणसिद्ध्यर्थं यन्त्रं कच्छपसंज्ञकम् ।
समाख्यातं रसाचार्यैः रससिद्धिप्रदायकम् ॥ २० ॥

भूधरयन्त्रम्

वालुकाचितसर्वाङ्गां कुमुदीं कुण्डगां पचेत् ।

आच्छाद्य दीप्तिरुपलैर्यन्त्र भूधरसञ्ज्ञकम् ॥ २१ ॥

मृदङ्गयन्त्रम्

मृदङ्गसदृशाकारं शून्यगर्भञ्च सुदृढम् ।
पात्रं निर्मापयेद् युक्त्या रसतन्त्रविचक्षणः ॥ २२ ॥
स्थावर्तनापिधानेन संयुक्तं स्वैकपार्श्वतः ।
परिभ्रामणशीलौ च चारङ्गौ पार्श्वयोस्तथा ॥ २३ ॥
कार्येच्च ततो युक्त्या सूतं गन्धञ्च निक्षिपेत् ।
स्थावर्तनापिधानञ्च सुदृढं सन्निवेशयेत् ॥ २४ ॥
ततो नरोत्सेधमितौ स्तम्भौ भूमौ तु विन्यसेत् ।
सम्मुखीनतया तत्र निधानज्ञो भिषग्वरः ॥ २५ ॥
ततः प्रलम्बयेद् यन्त्रं स्तम्भयोर्दण्डसंश्रितम् ।
मृदङ्गयन्त्रकमिदं रसज्ञैः परिकीर्तितम् ॥ २६ ॥
निर्मातुं कृत्रिमं म्लेच्छ रसतन्त्रविचक्षणैः ।
मृदङ्गयन्त्रमधुना विशेषेण प्रयुज्यते ॥ २७ ॥

स्थालीयन्त्रम्

स्थाल्यां संस्थाप्य लोहादि मल्लेनाच्छ्रणुयान्मुखम् ।
स्थाल्यधो ज्वालयेदग्निं स्थालीयन्त्रमिदं स्मृतम् ॥ २८ ॥

वालुकायन्त्रम्

सप्तवस्त्रकुट्टितमृदा लिप्ताङ्गीञ्च निशापिताम् ।
रसादिपूर्णजठरां काचकूपीन्तु विन्यसेत् ॥ २९ ॥
स्थाल्यां मृत्तलरन्ध्रायां सुदृढायां प्रयत्नतः ।
आकण्ठं कूपिकान्तत्र वालुकाभिः प्रपूरयेत् ॥ ३० ॥
भाण्डाधो ज्वालयेदग्निं यथाकालं यथाक्रमम् ।
एतद्बुधैः समाख्यातं वालुकायन्त्रसञ्ज्ञकम् ॥ ३१ ॥

### लवणयन्त्रम्

लवणस्य च निक्षेपादेव लवणयन्त्रकम् ।
प्रकीर्तितं भिषग्वर्यैर्मृगाङ्कादिरसार्थकम् ॥ ३२ ॥

### पुटयन्त्रम्

पुटनीयं तु कुम्भादौ विन्यस्याष्ट्रणुयात् पुनः ।
पिधानेन दृढेनाथ निदध्यात्सन्धिबन्धनम् ॥ ३३ ॥
करीषाग्नौ चुल्लिकायां वा पचेदग्निमानवित् ।
लोहादीनां मारणार्थं पुटयन्त्रं प्रशस्यते ॥ ३४ ॥

### बाष्पस्वेदनयन्त्रम्

नीरपूरितगर्भे तु पात्रे पात्रं निवेशयेत् ।
पार्श्वयोः कर्णिकोपेतं द्रव्यक्वाथप्रपूरितम् ॥ ३५ ॥
चुल्लिकायां निधायाथ वह्निं प्रज्वालयेदथ ।
मशोषयेत्ततः क्वाथं यावदायाति चूर्णताम् ॥ ३६ ॥
बाष्पेण स्वेदनं यस्माद् रसतन्त्रविशारदैः ।
तस्माद्यन्त्रमिदं ख्यातं बाष्पस्वेदनसञ्ज्ञकम् ॥ ३७ ॥
वन्यौषधिविशेषाणां सत्त्वनिर्माणसाधकम् ।
यन्त्रमेतत्समाख्यातं भिषजां सुखहेतवे ॥ ३८ ॥

### दर्विकायन्त्रम्

चषकं दर्विकाकल्पं दीर्घहस्तकसंयुतम् ।
दर्विकायन्त्रमेतद्धि गन्धशोधनसाधकम् ॥ ३९ ॥

### पालिकायन्त्रम्

एतदेव हि यन्त्रन्तु नतहस्तकसंयुतम् ।
पालिकायन्त्रमुद्दिष्टं रसतन्त्रविचक्षणैः ॥ ४० ॥

### डमरुकाख्ययन्त्रम्

स्थालिकोपरि विन्यस्य स्थालीं न्युब्जतयापराम् ।
पचेद्यथाक्रमं त्वेतद्यन्त्रं डमरुकाह्वयम् ॥ ४१ ॥

नाडिकायन्त्रम्

घटे तु चुल्लिकामध्ये निक्षिपेत्सलिलादिकम् ।
अधोमुखं घटं त्वन्यं मुखे तस्य निधापयेत् ॥ ४२ ॥
उभयोर्मुखमालिप्य मृदा संशोषयेत्ततः ।
उपरिस्थे ततो भाण्डे नाडिकान्तु निवेशयेत् ॥ ४३ ॥
एनान्तु नाडिका प्राज्ञो यत्नतः कुण्डलीकृताम् ।
जलद्रोण्या विनिक्षिप्य भिरसा चाथ निवेशयेत् ॥ ४४ ॥
काचकूपीमुखे सम्यक्, वह्निं प्रज्वालयेत्तत ।
यावद् घटस्थितद्रव्यमासौ यातीह शून्यताम् ॥ ४५ ॥
एतद्धि नाडिकायन्त्रं भिषग्भिः परिकीर्तितम् ।
परिस्रुताम्बुनिर्माणे विशेषेण प्रयुज्यते ॥ ४६ ॥

पातालयन्त्रम्

भूमौ हस्तमितं निम्नं विदध्याद् गर्त्तमुत्तमम् ।
तस्मिन् पात्रं निधायाथ तद्रूपं पात्रमन्यकम् ॥ ४७ ॥
आददीत ततस्तस्मिन्नौषधानि निधापयेत् ।
आस्यमस्य शरावेण छिद्रगर्भेण रोधयेत् ॥ ४८ ॥
पात्रमेतत्तु गर्तस्थे पात्रे यत्नेन विन्यसेत् ।
विदध्यान्नयोर्यत्नात् सुदृढं सन्धिबन्धनम् ॥ ४९ ॥
मृदा सम्पूर्य गर्तन्तु वह्निं दद्यात् प्रयोगवित् ।
स्वाङ्गशीतं ततो ज्ञात्वा रसतन्त्रविचक्षणः ॥ ५० ॥
उपरिस्थन्तु तं पात्रं शनैः समवतारयेत् ।
अधःपात्रगतं तैलं गृह्णीयात्तु विचक्षणः ॥ ५१ ॥
एतद् बुधैः समाख्यातं यन्त्रं पातालसञ्ज्ञकम् ।
आहृतं गन्धकादीनां तैलमेतत्प्रयुज्यते ॥ ५२ ॥

गर्तयन्त्रम्

चपकोपममत्यन्तं सुदृढं पिच्छिलोपलम् ।

मच्छिलाविहितं पात्रं खल्वयन्त्रमिहोच्यते ॥ ५३ ॥

खल्वयन्त्रस्य प्रयोजनम्

रसोपरसलोहादेः पेषणादिककर्मणि ।
रसतन्त्रक्रियादक्षैः खल्वयन्त्रं प्रयुज्यते ॥ ५४ ॥

खल्वयन्त्रस्य द्वविध्यम्

खल्वयन्त्रं द्विधा प्रोक्तं रसतन्त्रे विशेषतः ।
प्रथमं वर्तुलाकारं द्रोणीरूपं द्वितीयकम् ॥ ५५ ॥

वर्तुल खल्व

विस्तारे तपनाङ्गुलः समतलो नीलाब्जतुल्यप्रभः ।
निम्नत्वे च नवाङ्गुलः सुमसृणो रुद्राङ्गुलोच्छ्रायवान् ॥
भित्त्या द्व्यङ्गुलसम्मितः खलु तथा चेन्द्राङ्गुलो घर्षकः ।
खल्वोऽयं खलु वर्तुलो निगदितः सूतादिसिद्धिप्रदः ॥ ५६ ॥

द्रोणीरूप खल्व

उत्सेधे तुरगाङ्गुलः खलु कलातुल्याङ्गुलश्चायतो
विस्तारे तपनाङ्गुलश्च मसृणो भित्त्या च वै द्व्यङ्गुलः ।
घर्षः स्वर्गमिताङ्गुलः सुविशदो लोहादिभिर्निर्मितः
खल्वोऽयं रससिद्धिकृन्निगदितो द्रोणीनिभोऽस्त्युत्तमः ॥ ५७ ॥

उलूखलयन्त्रम्

दशाङ्गुलन्तु विस्तारे तूत्सेधे षोडशाङ्गुलम् ।
त्रयोदशाङ्गुलश्चैव निम्नत्वेन च सुदृढम् ॥ ५८ ॥
अयसा निर्मितश्चैव मध्येऽतिमसृणीकृतम् ।
विंशत्यङ्गुलदीर्घश्च लोहदण्डः सुशोभनः ॥ ५९ ॥
उलूखलाभिधं यन्त्रं बुधैरेतत्प्रकीर्तितम् ।
ताप्यादीनां कुट्टनार्थं यन्त्रमेतत्प्रयुज्यते ॥ ६० ॥

लघूनि चाथ दीर्घाणि युक्त्या यन्त्राणि कारयेत् ।
द्रव्यमानानुरूप्येण निधानज्ञो भिषग्वरः ॥ ६१ ॥
यन्त्राण्येतानि प्रोक्तानि दिग्दर्शनतया मया ।
अध्येतृणा शिशूनान्तु सुखबोधाय सत्वरम् ॥ ६२ ॥
इति यन्त्रविज्ञानीयो नाम चतुर्थस्तरङ्गः ।

## अथ पारदस्य अष्टसंस्कारविज्ञानीय पञ्चमस्तरङ्गः

अथ पारदस्य नामानि

रसो रसेन्द्र सूतश्च रसेशश्च रसेश्वर ।
चपलो रसराजश्च पारदश्च शिवाह्वय ॥ १ ॥
रसनाद्भ्रकादीना धातूना कीर्तितो रस ।
अभ्रकाद्यधिराजत्वाद्रसेन्द्र इति कथ्यते ॥ २ ॥
देहलोहमयीं सिद्धि सूतेऽस्त सूत उच्यते ।
स्वभावाच्चपलो यस्मात् ततोऽसौ चपल स्मृत ॥ ३ ॥
आतङ्कपङ्कमग्नाना पारदानाच्च पारद ।
अभ्रादिरसराजत्वाद्रसराज स्मृतो बुधै ॥ ४ ॥

विशुद्धाविशुद्धसूतस्य स्वरूपम्

शुद्ध सूतो मतस्त्वन्त सुनीलो बहिरुज्ज्वल ।
सूर्यप्रभश्चाविशुद्धो धूम्रो वा परिपाण्डुर ॥ ५ ॥

अविशुद्धसूतस्य हेयत्वम्

सदोषो रसराजस्तु निदध्याद्विविधान् गदान् ।
तस्माद् दोषविहीनन्तु योगेषु विनियोजयेत ॥ ६ ॥

अथ पारदस्य नैसर्गिका दोषा

नागवङ्गौ वह्निमलौ चापल्य गरल गिरि ।
असह्याग्निश्च विज्ञेया दोषा नैसर्गिका रसे ॥ ७ ॥

'नागाद् व्रण भवेत्कुष्ठ वङ्गाच्चापोऽग्निदोपत' ।
मलाज्जाड्य तु चापल्याद् बीजनाशो विषान्मृतिः ॥ ८ ॥
गिरेः स्फोटोऽथ मोरश्च ह्यमह्यामैः प्रजायते ।
एतैर्दोषैर्विहीनश्च रसेन्द्रमिह योजयेत् ॥ ९ ॥

पारदस्य सप्तकञ्चुका

भेदी द्रावी मलकरी ध्वाङ्क्षी पर्पटिका च सा ।
अन्धकारी पाटनिका कञ्चुका सप्त कीर्तिता' ॥ १० ॥

सप्तकञ्चुकाना परिचय

धातवो रससश्लिष्टा यदा विष्णुपदामृतम् ।
गृह्णन्ति हि तदा तेषा कश्चिद् भागोऽवशीर्यते ॥ ११ ॥
ततश्चूर्णत्वमापन्ना रसमाच्छादयन्ति ते ।
तेनावरणसाम्येन धातव स्रुतसगता ॥ १२ ॥
कञ्चुकाख्या भजन्तीति प्राच्यपाश्चात्त्यसमति• ।
कैश्चिदेते कञ्चुकाख्या दोषा औपाधिकाः स्मृता' ॥ १३ ॥

पारदशोधनस्यावश्यकता

नैसर्गिकास्तु ये दोषा ये चान्ये कञ्चुकाह्वया' ।
तेषान्तु परिहाराय सामान्य शोधन स्मृतम् ॥ १४ ॥
विशुद्धो रसराजस्तु सत्य पीयूषसोदर' ।
सदोषस्तु रसो नैर्ऽयमोऽयमपर स्मृत ॥ १५ ॥
तस्मात्तद्विशुद्ध्यर्थं युक्त सुपरिचारकै ।
सर्वामादाय सामग्रीं रसशुद्धिं समारभेत् ॥ १६ ॥

शोधनार्थ रसपरिमाणम्

पलाना शतक श्रेष्ठं तदर्धाधमथापि वा ।

---

1 Impure mercury when shaken with air yields a black powder caused by the oxidation of the metallic impurities and the film of the oxide incloses a small globule of the liquid metal

(Chemistry by H E Roscoe and C Schorlemmer F R S)

पलानां दशकं वापि पञ्चकं वा पलोन्मितम् ॥ १७ ॥
पलान्न्यूनो न सग्राह्यः संस्कारार्थं रसो बुधैः ।
बहुप्रयाससाध्यत्वाल्लाभाभावाच्च निश्चितम् ॥ १८ ॥

अथ रससंशोधनम्

शुद्दिने शुभनक्षत्रे स्वेष्टदेवञ्च शङ्करम् ।
गुरवञ्चापि सम्पूज्य रसकर्म समाचरेत् ॥ १९ ॥

अथ रसपूजनम्

अघोरेण च मन्त्रेण खल्वे संस्थापितं रसम् ।
गन्धधूपादिभिः प्राज्ञः पूजयेद्भिषजां वरः ॥ २० ॥

अथ रसस्य साधारणशोधनम्

आधिव्याधिविनाशार्थं प्रयोगार्थं रसेषु च ।
सामान्यशोधनं शस्तं रसतन्त्रविशारदैः ॥ २१ ॥

प्रथमः शोधनप्रकारः

धूमेष्टिकाहट्टविलासिनीनां गोणस्तु चूर्णं परिमर्द्य सूतम् ।
प्रक्षालयेदम्लजलेन सम्यक् ततो रसो मुञ्चति नागदोषम् ॥२२॥
मृगेक्षणाङ्कोलनिशोत्थचूर्णैः सूतो जहातीह तु वङ्गदोषम् ।
चित्रोऽग्निदोषं विनिहन्ति शीघ्रं दोषं मलोत्थं खलु राजवृक्षः ॥२३॥
चापल्यहारी खलु कृष्णधूर्तो विषापहर्त्री त्रिफला प्रशस्ता ।
दोषं गिरेस्त्वूषणमाशु हन्यात् त्रिकण्टको वह्न्यसहत्वदोषम् ॥२४॥
चूर्णं कलांशप्रमितं तु सूतात् सकन्यकं भावितमपजानाम् ।
विमर्दयेत्खल्वगतं दिनैकं प्रक्षालयेच्चापि ततोऽम्लतोयैः ॥ २५ ॥
रीत्यानया शोधित ईदृशः सन् सत्यं भवेत्कञ्चुकदोषहीनः ।
इत्थं विशुद्धं खलु सूतराजं नियोजयेद्वैद्यवरो रसेषु ॥ २६ ॥

द्वितीयः शोधनप्रकारः

रसेश्वरं समसुधारजसा मर्दयेत् त्र्यहम् ।
ततो द्विगुणरस्नान्तर्गलितं स्वरसके न्यसेत् ॥ २७ ॥

रसोन निस्तुप तुल्यं तदर्धं लवण हरेत ।
तत्कल्के मर्दयेत्सूत यावदायाति कृष्णताम् ॥ २८ ॥
कृष्ण कल्क परित्यज्य तथा प्रक्षाल्य युक्तितः ।
एवमेकेन वारेण रसेन्द्र शुद्धिमाप्नुयात् ॥ २९ ॥
श्रीमद्गुरुमुखोद्गीत' कृतश्च बहुशो मया ।
सौकर्यार्थं प्रयोगेषु प्रकारोऽयम्प्रकाशितः ॥ ३० ॥

तृतीय शोधनप्रकार

कुमारिकाचित्रकरक्तसर्षपै' कृतै' कषायैर्बृहतीविमिश्रितै' ।
फलत्रिकेणापि विमर्दितो रसो दिनत्रय सप्तमलैर्विमुच्यते ॥ ३१ ॥

चतुर्थ शोधनप्रकार

गुडस्त्रिकटु यामिनी लवणपञ्चक पावकः'
फलत्रिकयवाग्रजौ खलु सुवर्चिकाटङ्कण ।
तथा सितवसर्षपौ खलु समस्तु विशांशकै'
विशुद्ध्यति विमर्दितो रसवरोऽश्मवर्ग्यैर्दिनैः ॥ ३२ ॥
श्रीमद्गुरुमुखोद्गीत' कृतश्च बहुशो मया ।
अनुभूतश्च योगेषु प्रकारोऽय निरूपित ॥ ३३ ॥

पञ्चम शोधनप्रकार

नागवल्लीदलरसैस्तथा चार्द्रकजै रसैः ।
क्षारत्रययुतैश्चापि रसराज विमर्दयेत् ॥ ३४ ॥
ततस्तेभ्य. पृथक् कृत्वा सप्तदोषविवर्जितम ।
मुक्ताफलसमाकार रसराज प्रयोजयेत् ॥ ३५ ॥

षष्ठ शोधनप्रकार

निमर्द्य सुधया सप्तदिन धूमनिशार्द्रकै ।
त्रिदिन मर्दयेत्सूत काञ्जिके क्षालयेत्तत' ॥ ३६ ॥
यस्य चतुर्गुण कृत्वा ग्रत नि'सारयेत्तत ।

सप्तकञ्चुकनिर्मुक्तो जायते निर्मलो रसः ॥ ३७ ॥

इति रसस्य सामा यशो.धनम्

अथ हिङ्गुलोत्थितपारदस्य निर्माणप्रकार

हिंगुलं पारिभद्रस्य रसैः सम्पेषयेद् बुधः ।
चाङ्गेर्या वा रसेनैव द्रवैर्जम्बीरजैस्तथा ॥ ३८ ॥
ऊर्ध्वपातनयन्त्रेण सप्तकञ्चुकवर्जितम् ।
गृह्णीयान्निर्मलं सूतं रसतन्त्रविशारदः ॥ ३९ ॥
षोडशांशं निशाचूर्णं ततस्तं पेषयेद् बुधः ।
लवणाम्लविनिक्षिप्तं स्थापयेद्वा दिनद्वयम् ॥ ४० ॥
यत्र चतुर्गुणीकृत्य ततो नि मारयेद्रसम् ।
योगेषु योजयेद्वैद्यो रसराजं सुनिर्मलम् ॥ ४१ ॥
गुरुदर्शितमार्गेण यन्त्रमानं प्रकल्पयेत् ।
मानामाराद्रसेन्द्रस्य लेखितुं नैव शक्यते ॥ ४२ ॥

अथ पारदस्य अष्टौ सस्काराः

रसायनप्रयोगेषु रसागमविशारदः ।
रसराजं प्रयुञ्जीत कर्माष्टकविशोधितम् ॥ ४३ ॥
स्वेदनं मर्दनञ्चैव मूर्च्छनोत्थापने तथा ।
पातनत्रितयञ्चाथ रोधनं सुनियामनम् ॥ ४४ ॥
सुप्रदीपनमित्यष्टौ प्रोक्ताः सर्वोपयोगिनः ।
संस्कारा रसराजस्य रसशास्त्रविशारदैः ॥ ४५ ॥

स्वेदनलक्षणम्

दोलायन्त्रे स्थापयित्वा रसेन्द्रं यौररम्लैरौषधैर्वा कषायैः ।
युक्त्या यत्स्यात्पाचनं स्वेदनं तत् प्रोक्तं रुक्तं दोषशैथिल्यकारि ॥४६॥

प्रथम स्वेदनप्रकार

पिप्पलीमरिचचित्रकार्द्रकैर्विश्वसैन्धवफलत्रिकान्वितैः
षोडशांशकमितैर्दिनत्रयं स्वेदयेद्रसवरं सकाञ्जिकैः ॥ ४७ ॥

नूतन कल्कमादाय नातितीक्ष्णेन वह्निना ।
प्रत्यह स्वेदयेद्धीमान् रसतन्त्रविशेषवित् ॥ ४८ ॥

द्वितीय स्वेदनप्रकार

त्र्यूषण मूलकासुर्यौ पट्कार्द्रकनद्वय' ।
तत्कल्कैः काञ्जिके सूत स्वेदयेद्दिनसत्रयम् ॥ ४९ ॥

तृतीय स्वेदनप्रकार

पिप्पली मरिचविश्वभेषजे शृङ्गवेरलशुनार्द्रकात्रय' ।
मेघनादलवणौ महानला चुल्लिकालवणभाजशृङ्गिका ॥५०॥
आसुरी खलु गनेधुका वरा प्रक्षिपेद्रमकलाशक पृथक् ।
तत्समस्तमथ व्यस्तमेव वा काञ्जिकेन सह मर्दयेद् बुधः ॥ ५१ ॥
कल्कतामुपगतेन तेन वै वस्त्रमङ्गुलिमित प्रलेपयेत् ।
निक्षिपेद्रसवर तदन्तरे स्फीतकेन सुदृढ निरोधयेत् ॥ ५२ ॥

दोलिकायन्त्रके स्थापयेत्पोट्टली
नातितीक्ष्णानल ज्वालयेत्सततम ।
नूतन काञ्जिकं प्रक्षिपेत्प्रत्यह
स्वेदयेत्पारद वासराणा त्रयम् ॥ ५३ ॥

मर्दनस्वरूपम्

क्षाराद्यैरौषधैर्या यत खल्वे सूतस्य पेषणम् ।
तन्मर्दन बुधै' प्रोक्त बहिर्मलनिवृत्तये ॥ ५४ ॥

मर्दनस्य प्रथम प्रकार

सैन्धव मदनधूमआसुरी यामिनी लशुनमार्द्रक वरा ।
षोडशाशमिह निक्षिपेद्रसान्मर्दयेद्रसवर दिनत्रयम ॥ ५५ ॥

मर्दनस्य द्वितीय प्रकार

इष्टिकाचूर्णक सैन्धव यामिनी गेहधूमो गुडश्चासुरी नागरम् ।
षोडशाश क्षिपेत्सर्वमेतद्रसान्मर्दयेत पारद वासराणा त्रयम ॥५६॥

मूर्च्छनस्वरूपम्

गृहकन्यादिभिर्द्रव्यैर्नष्टपिष्टत्वसाधनम् ।
दोषत्रयनिवृत्त्यर्थं तन्मूर्च्छनमिहोच्यते ॥ ५७ ॥
स्वरूपत्यागसहितं पिष्टित्वकरणं हि यत् ।
रसशास्त्रितत्त्वज्ञैः सा नष्टपिष्टि उदाहृता ॥ ५८ ॥

मूर्च्छनस्य प्रथमः प्रकारः

कुमारिका मलं हन्ति वरा दहननाशिनी ।
चित्रमूलं विषं हन्ति तस्मादेभिः प्रयत्नतः ॥ ५९ ॥
मर्दितः सूतकः द्रव्यैः सप्तवाराणि मूर्च्छयेत् ।
एवं सम्मूर्च्छितः सूतो दोषैः सर्वैः प्रमुच्यते ॥ ६० ॥

मूर्च्छनस्य द्वितीयः प्रकारः

यवाग्रजं स्वर्जिका च तथा लवणपञ्चकम् ।
अम्लौषधानि त्रिवृतं प्रक्षिप्य सूतकं दृढम् ॥ ६१ ॥
तावत्सुपेषयेद्यावत्सूतपिष्टत्वमाप्नुयात् ।
इत्थं सम्मूर्च्छितः सूतो विमुञ्चति मलत्रयम् ॥ ६२ ॥

उत्थापनस्वरूपम्

स्वेदाद्यैर्यद्रसेन्द्रस्य मूर्च्छाव्यापत्तिनाशनम् ।
पुनः स्वरूपकरणं तदुत्थापनमीरितम् ॥ ६३ ॥

उत्थापनस्य प्रथमः प्रकारः

सौभाग्यलवणक्षौद्रैः पारदं पेषयेद् भृशम् ।
तद्गोलकं विधायाथ पोट्टल्यान्तु विनिक्षिपेत् ॥ ६४ ॥
क्षाराद्यैः स्वेदयेत्सम्यक् दोलायन्त्रे भिषग्वरः ।
एवं वारत्रयं कुर्यादुत्थितो जायते रसः ॥ ६५ ॥

द्वितीयः प्रकारः

अथवा काञ्जिकेनैव रसेन्द्रं स्वेदयेद् बुधः ।
अम्लैः प्रक्षालयेत् सम्यगुत्थितो रसराड् भवेत् ॥ ६६ ॥

तृतीयः प्रकार

रसेन्द्र काञ्जिकेनेह याममात्रं विमर्दयेत् ।
सलिलै क्षालयेत्सम्यगुत्थितो जायते रसः ॥ ६७ ॥

चतुर्थ प्रकार

जम्बीरमातुलुङ्गाद्यै पेषयेदातपे रसम ।
वसनात्सारयेत्सम्यगुत्थितो जायते रसः ॥ ६८ ॥

पातनात्रितयस्वरूपम्

उत्क्षेपधं रसवरस्य विमर्दितस्य
यन्त्राहितस्य यदिहोर्ध्वमधश्च तिर्यक् ।
निष्कासन तदिह पातनमङ्गमुक्त
वगाहिदोषयुगल शमयत्यनल्पम ॥ ६९ ॥

तत्र ऊर्ध्वपातनस्य प्रथम प्रकार

स्वर्जिका खलु यवाग्रज तथा
रामठ लवणपञ्चकान्वितम् ।
अम्लवर्गगदितैस्तु भेषजै
मयुत रसवर विमर्दयेत् ॥ ७० ॥
स्थापयेदिह सुयुक्तितो भिषक्
पारद निहितकल्कसयुतम् ।
ऊर्ध्वपातनकयन्त्रमागत
पातयेदिह रसेश्वर भिषक् ॥ ७१ ॥

द्वितीय प्रकार

तुत्थकं विमलहेममाक्षिकं
निक्षिपेत्खलु रसेन्द्रमुज्ज्वलम् ।
मर्दयेद् गृहकुमारिकारसै-
र्यावदेति खलु नष्टपिष्टताम् ॥ ७२ ॥
कारयेच्च तदन्तर भिषक्

स्थालिकातलगतं रसेश्वरम् ।
ऊर्ध्वपातनकयन्त्रपातित-
मादधीत विमलं रसेश्वरम् ॥ ७३ ॥

तृतीय प्रकार

त्रयो भागा ग्राह्या खलु रसवरस्येह विबुधै
रेकः भागो विधिविहितशुद्धेः कृतदल ।
सम मर्द्य मर्द्य भृशमिह हि जम्बीरजरसै
रसः पात्यो युक्त्या खलु डमरुयन्त्रे बुधवरैः ॥ ७४ ॥

अथ पातनस्य प्रथम प्रकार

वलिमस्खलित रसेश्वर सुचिर वैद्यवरः सुपेषयेत् ।
विधिना च विधाय कज्जलीमथजम्बीररसैः सुमर्दयेत् ॥७५॥
शिखी च शिग्रुबीजक तथासुरी च सैन्धवम् ।
तथा च मर्कटी बुध समं समं विनिक्षिपेत् ॥ ७६ ॥
पिष्टेनानेन तु प्राज्ञो लेपयेदूर्ध्वभाजनम् ।
ऊर्ध्वपातनयन्त्रे च गृह्णीयान्निर्मलं रसम् ॥ ७७ ॥

द्वितीय प्रकार

हरीतकी विभीतकस्तथासुरी च सैन्धवम् ।
शिखी च शिग्रुज समं समं सुपेषयेद्रसम् ॥ ७८ ॥
यदा स नष्टपिष्टतामियात्तदा भिषग्वरः ।
निरुक्तयन्त्रकर्मणा रस निपातयेदधः ॥ ७९ ॥

तिर्यक्पातनम्

उद्दिष्टौषधैः साकं रसराज सुपेषयेत् ।
तिर्यक्पातनयन्त्रे च गृह्णीयान्निर्मलं रसम् ॥ ८० ॥

बोधनलक्षणम्

मदनादिकयोगेन जातक्लैब्यस्य शूलिनः ।
क्लैब्यापहं तु यत्कर्म कथ्यते बुधैः ॥ ८१ ॥

बोधनस्य प्रथम प्रकार

भूर्जपत्रे निधायाथ रसराज निरोधयेत् ।
प्रक्षिप्य सैन्धव तोये दोलायन्त्रे पचेद् बुध. ॥ ८२ ॥
एव सस्वेदित' सूतः भृशमाप्यायितो भवेत् ।
जातवीर्यप्रकर्षो हि षण्ढतामिह मुञ्चति ॥ ८३ ॥

द्वितीय प्रकार

जलसैन्धवसूतपूरिता क्षितिगर्ते खलु काचकूपिकाम ।
विनिधाय दिनत्रय ततो गतषाण्ढ्यः सबलो रसो भवेत् ॥८४॥

तृतीय प्रकार

सैन्धवेनाम्लपिष्टेन रसेन्द्र कूपिकागतम् ।
गर्ते निधाय चोर्ध्वन्तु देयो लघुपुटो बुध' ॥ ८५ ॥
एव सम्पुटित शीघ्र भृशमाप्यायते रस' ।
जातवीर्यप्रकर्षश्च षण्ढभाव विमुञ्चति ॥ ८६ ॥

नियामनस्य स्वरुपम

बोधनाल्लब्धवीर्यस्य रसस्य स्वेदन हि यत् ।
चापल्यविनिवृत्त्यर्थं तन्नियामनमीरितम् ॥ ८७ ॥

नियामनस्य प्रथम प्रकार

अम्लिकानागिनीभृङ्गवन्ध्याब्दकितवोद्भवै ।
रसैः सस्वेदितः सूतो नियत नियतो भवेत ॥ ८८ ॥

द्वितीय प्रकार

रसोनभृङ्गराजाब्दचिञ्चिकानवमार्गर ।
भृश सस्वेदित' सूतो नियत नियतो भवेत् ॥ ८९ ॥

तृतीय प्रकार

नियामकगणोद्दिष्टै समस्तव्यस्तभेषजै ।
पूर्वदर्शितमार्गेण भिषक् कुर्यान्नियामनम् ॥ ९० ॥

रसस्य नियामकगणः

महानला नागवला यमचिश्चा पुनर्नवा ।
आखुपर्णी सहचरा नागिका काकमाचिका ॥ ९१ ॥
गोक्षुरः शरपुङ्खा च विष्णुक्रान्ता घनध्वनिः ।
मण्डूकपर्णी तुलसी बला च गिरिकर्णिका ॥ ९२ ॥
शतावरी शङ्खपुष्पी श्वेतार्कः स्नुकाह्वयः ।
चक्रमर्दः कर्कोटः मल्लदण्डी शिखण्डिनी ॥ ९३ ॥
गुडूची सैन्धवः पाठा मृगाक्षी सोमवल्लिका ।
नियामकगणो ह्येष प्रोक्तो रसविशारदैः ॥ ९४ ॥

अथ दीपनस्वरूपम्

दोलायन्त्रे स्थापयित्वा रसेन्द्रं धारायैर्यत्पाचनं स्यात्तथायम् ।
ग्रासार्थी वा जारणे च प्रगल्भः शास्त्रैस्तद्दीपनं सम्प्रदिष्टम् ॥९५॥

अथ दीपनस्य प्रथमः प्रकारः

कासीशं मरिचं तथैव तुवरी शोभाञ्जनं काञ्जिकम् ।
सौभाग्यं पटुपञ्चकञ्च दहनो राजी समं मेलयेत् ।
निक्षिप्याथ दिनद्वयं बुधवरो दोलाख्ययन्त्रे पचेत्
ग्रासार्थी खलु जारणे च चतुरः सञ्जायते पारदः ॥ ९६ ॥

अथ द्वितीयः प्रकारः

सौभाग्यं पटुपञ्चकञ्च मरिचं शोभाञ्जनं चासुरी
कासीसं यवजोऽनलश्च तुवरी शेफालिका सर्जिका ।
तुल्यांशैः सुविचूर्णितैर्गृहनले यन्त्रे तु दोलाह्वये
स्विन्नो यामयुगं ततो रसवरो ग्रासाभिलाषी भवेत् ॥ ९७ ॥

तृतीयः प्रकारः

स्वेदयेदामलाम्लेन सहितं याममात्रकम् ।
भिषग्वरः सूतराजं शीघ्रं वीर्यविवृद्धये ॥ ९८ ॥

चतुर्थः प्रकारः

अथवा दहनकार्थस्त्रिदिनं काञ्जिके पचेत् ।
एवं सस्वेदितः सूतो ग्रासार्थी जायते परम् ॥ ९९ ॥

जारणास्वरूपम्

सूते गन्धादिनिक्षेपात्तत्तद्विधिविशेषतः ।
गन्धाद्यं जार्यते यत्तु जारणं तदिहोच्यते ॥ १०० ॥

षड्गुणगन्धकजारणस्य प्रयोजनम्

वसुविधविधिसंस्कृतोऽपि सूतो रसनिपुणैरिह हिङ्गुलोत्थितो वा ।
रसगुणबलिजारणाविहीनो गदगणवारणतां तु नैति नूनम् ॥१०१॥

षड्गुणबलिजारणस्य प्रथमः प्रकारः

निधाय वालुकायन्त्रे चषकं सुदृढं भिषक् ।
रसतुल्यं बलिं तस्मिन्निक्षिपेत् खलु शोधितम् ॥ १०२ ॥
बलिं तु विद्रुतं दृष्ट्वा रसेशं तत्र दापयेत् ।
अर्द्धजीर्णं बलिं ज्ञात्वा पुनर्गन्धं प्रदापयेत् ॥ १०३ ॥
आषड्गुणं क्षिपेदेवमल्पमल्पं समाहितः ।
स्वतः शीतं ततो ज्ञात्वा रसेशं तु समाहरेत् ॥ १०४ ॥

षड्गुणबलिजारणस्य द्वितीयः प्रकारः

कच्छपाख्येन यन्त्रेण रसतन्त्ररहस्यवित् ।
उक्तमार्गमनुसृत्य जारयेत् षड्गुणं बलिम् ॥ १०५ ॥

षड्गुणबलिजीर्णस्य रसराजस्य गुणाः

समे तु गन्धके जीर्णे सामान्यगदनाशनः ।
द्विगुणे तु विशेषेण महारोगनिषूदनः ॥ १०६ ॥
त्रिगुणे तु विशेषेणाक्षय्यपुंस्त्वप्रकाशनः ।
चतुर्गुणे महोत्साहमेधास्मृतिविवर्धनः ॥ १०७ ॥
तथा पञ्चगुणेऽशेषगदसन्तापनाशनः ।
रसेश्वरः षड्गुणे तु विविधाद्भुतकार्यकृत् ॥ १०८ ॥

इति पारदस्याष्टसंस्कारविज्ञानीयो नाम पञ्चमस्तरङ्गः ।

रसस्य नियामको गणः

महाबला नागबला यमचिञ्चा पुनर्नवा ।
आखुपर्णी सहचरा नासिका काकमाचिका ॥ ९१ ॥
गोक्षुरः शरपुङ्खा च विष्णुक्रान्ता घनध्वनिः ।
मण्डूकपर्णी तुलसी बला च गिरिकर्णिका ॥ ९२ ॥
शतावरी शङ्खपुष्पी श्वेतार्कः कनकाह्वयः ।
चक्रमर्दः करञ्जः ब्रह्मदण्डी शिखण्डिनी ॥ ९३ ॥
गुडूची मैन्धवः पाठा मृगाक्षी सोमवल्लिका ।
नियामकगणो ह्येष प्रोक्तो रसविशारदैः ॥ ९४ ॥

अथ दीपनस्वरूपम्

दोलायन्त्रे स्थापयित्वा रसेन्द्रं क्षाराद्यैर्यत्पाचनं स्याद्यथायम् ।
ग्रासार्थी स्यात् जारणे च प्रगल्भः शास्त्रज्ञैस्तद्दीपनं सम्प्रदिष्टम् ॥९५॥

अथ दीपनस्य प्रथमः प्रकारः

कासीसं मरिचं तथैव तुवरी शोभाञ्जनं काञ्जिकम् ।
सौभाग्यं पटुपञ्चकञ्च दहनो राजी समं मेलयेत् ।
निक्षिप्याथ दिनद्वयं तु धवरो दोलाख्ययन्त्रे पचेत्
ग्रासार्थी खलु जारणे च चतुरः सञ्जायते पारदः ॥ ९६ ॥

अथ द्वितीयः प्रकारः

सौभाग्यं पटुपञ्चकञ्च मरिचं शोभाञ्जनं चासुरी
कासीसं यवजोऽनलश्च तुवरी शेफालिका सर्जिका ।
तुल्यांशैः सुविचूर्णितैर्गृहजले यन्त्रे तु दोलाह्वये
स्विन्नो यामयुगं ततो रसवरो ग्रासाभिलाषी भवेत् ॥ ९७ ॥

तृतीयः प्रकारः

मेन्धेनामधाम्लेन मर्दितं यामयामकम् ।
सिपन्नर स्नतरान शीघ्रं रोगनिवृद्धये ॥ ९८ ॥

चतुर्थ प्रकार

अथवा दहनकार्थस्त्रिदिन काञ्जिके पचेत् ।
एव मस्वेदितः सूतो ग्रासार्थी जायते परम् ॥ ९९ ॥

जारणास्वरूपम्

सूते गन्धादिनिक्षेपात्तत्तद्विधिविशेषत' ।
गन्धाद्य जार्यते यत्तु जारण तदिहोच्यते ॥ १०० ॥

षड्गुणगन्धकजारणस्य प्रयोजनम्

वसुविधविधिसंस्कृतोऽपि सूतो रसविबुधैरिह हिङ्गुलोत्थितो वा ।
रसगुणबलिजारणाविहीनो गदगणवारणता तु नैति नूनम् ॥१०१॥

षड्गुणबलिजारणस्य प्रथम प्रकारः

निधाय वालुकायन्त्रे चषक सुदृढ भिषक् ।
रसतुल्य बलिं तस्मिन्निक्षिपेत् खलु शोधितम् ॥ १०२ ॥
बलिं तु विद्रुत दृष्ट्वा रसेश तत्र दापयेत् ।
अर्द्धजीर्णं बलिं ज्ञात्वा पुनर्गन्ध प्रदापयेत् ॥ १०३ ॥
आषड्गुण क्षिपेदेवमल्पमल्प समाहित ।
स्वत-शीत ततो ज्ञात्वा रसेश तु समाहरेत् ॥ १०४ ॥

षड्गुणबलिजारणस्य द्वितीय प्रकार

कच्छपाख्येन यन्त्रेण रसतन्त्ररहस्यवित् ।
उक्तमार्गमनुसृत्य जारयेत् षड्गुण बलिम् ॥ १०५ ॥

षड्गुणबलिजीर्णस्य रसराजस्य गुणा

समे तु गन्धके जीर्ण सामान्यगदनाशन- ।
द्विगुणे तु विशेषेण महारोगनिधूनन' ॥ १०६ ॥
त्रिगुणे तु विशेषेणाक्ष्यपुस्त्वप्रकाशन ।
चतुर्गुणे महोत्साहमेधास्मृतिविवर्धन ॥ १०७ ॥
तथा पञ्चगुणेऽशेषगदसन्तापनाशन ।
रसेश्वर षड्गुणे तु विविधाद्भुतकार्यकृत् ॥ १०८ ॥

इति पारदस्याष्टसंस्कारविज्ञानीयो नाम पञ्चमस्तरङ्ग ।

# अथ मूर्च्छनाविज्ञानीय. षष्ठस्तरङ्गः

अथ मूर्च्छनाया स्वरूपम्

तत्तद्विविधप्रभेदेन रसस्याव्यभिचारित ।
व्याधिघातकता या स्यात् सा मता मूर्च्छना बुधैः ॥ १ ॥

मूर्च्छनाया द्वौ भेदौ

निर्गन्धा च सगन्धा च मूर्च्छना द्विविधा मता ।
निर्गन्धा गन्धरहिता सगन्धा गन्धसयुता ॥ २ ॥
निर्गन्धा रसपुष्पाद्यौ मूर्च्छना परिकीर्तिता ।
सगन्धा तु विशेषेण रससिन्दूरकादिषु ॥ ३ ॥

सगन्धाया ( मूर्च्छनाया ) द्वौ भेदौ

सगन्धा मूर्च्छना ह्यत्र रसतन्त्रविचक्षणै ।
अन्तर्धूमबहिर्धूमभेदेनापि द्विधा मता ॥ ४ ॥

अन्तर्धूममूर्च्छनाया स्वरूपम्

निरुध्यारम्भत कूपीमुख यद्गन्धजारणम् ।
मूर्च्छना सा भिषग्वर्यैरन्तर्धूमाभिधा मता ॥ ५ ॥
जीर्णगन्धे तु यत्कूपीमुखरोधनपूर्वकम् ।
पाचन मूर्च्छना सा तु बहिर्धूमाभिधा मता ॥ ६ ॥
सगन्धमूर्च्छित सूत सुचिर परिशीलित ।
न जातुचिन्न करोतीह विकारान् पारदोत्थितान् ॥ ७ ॥
निर्गन्धमूर्च्छित सूतो गदसत्यकालत ।
अनन्तर शीलनेन विकाराञ्जनयत्युग्रम् ॥ ८ ॥

अथ मुग्धरसस्य निर्माणप्रकार

[ गीतिका ]

गुञ्जागालकप्रमाण निर्मलीकृत रसवरम् ।
द्विगुणा खटीश्च शुद्धा निदधीत खल्वमध्ये ॥ ९ ॥

परिपेषयेत्तु तावद् निधिनतदीयचूर्णम् ।
अवलोक्यते न यावत्खलु चन्द्रिकाविहीनम् ॥ १० ॥
हतचन्द्रिकं तु चूर्णं ह्यनुपुष्य योजयेद्धै ।
विबुधैः स्मृतो रसोऽयं खलु मुग्धनामधेयः ॥ ११ ॥

मुग्धरसस्य गुणाः

उदरामयनुत् वमिहृन्नियतं सहजोत्थफिरङ्गकुरङ्गहरिः ।
शिशुरोगहरस्तु विशेषतया विबुधैरुदितः खलु मुग्धरसः ॥१२॥

मुग्धरसस्य मात्रानिरूपणम्

गुञ्जार्धतः समारभ्य सार्धगुञ्जाद्वयोन्मिता ।
पूर्णमात्रा मता मुग्धरसस्य तरुणोचिता ॥ १३ ॥
गुञ्जाष्टमांशतश्चास्य गुञ्जापादांशसंमिता ।
पूर्णमात्रा मता विज्ञैर्वार्षिकस्यार्भकस्य तु ॥ १४ ॥

मुग्धरसस्य आमयिकप्रयोगः

गुञ्जैकसमितो मुग्धरसस्तु सलिलान्वितः ।
मासमेकं द्वयं वापि यत्नतः परिशीलितः ॥ १५ ॥
गर्भिणीनां चिरोद्भूतां नवजातामथापि वा ।
फिरङ्गजनितां बाधां नाशयत्यविलम्बितम् ॥ १६ ॥
गुञ्जापादोन्मितो मुग्धरसो नीरेण शीलितः ।
शिशूनां विनिहन्त्याशु फिरङ्गं सहजोत्थितम् ॥ १७ ॥
रक्तिकाङ्घ्रिमितो मुग्धरसो वारा नियोजितः ।
विनिहन्त्याशु बालानामतीसारं सुनिश्चितम् ॥ १८ ॥
विज्ञाय रोगोपशमं प्राणाचार्यो भिषग्वरः ।
न योजयेन्मुग्धरसं रसमिन्दूरवद् भृशम् ॥ १९ ॥

अथ रसपुष्पस्य नामानि

रसपुष्पं रससुमं कुसुमं रसपूर्वकम् ।
मतं निरुच्यते कैश्चित्सुधानिधिरसाख्यया ॥ २० ॥

अथ रसपुष्पस्य प्रथमो निर्माणप्रकारः

विशुद्धं रसराजन्तु पञ्चतोलकसम्मितम् ।
तत्समं लवणञ्चैव काशीसं विमलं तथा ॥ २१ ॥
खल्वे सम्पेष्य यत्नेन श्लक्ष्णचूर्णञ्च कारयेत् ।
अथ चूर्णं समादाय हण्डिकायां विनिक्षिपेत् ॥ २२ ॥
मध्ये सच्छिद्रया चान्तर्लिप्तयाऽपरहण्डया ।
आच्छादयेद्धण्डिकया रसकर्मविशारदः ॥ २३ ॥
सन्धिन्तु सम्यगाच्छाद्य लेपयेत्स्वल्पया मृदा ।
न लेपयेदूर्ध्वपात्रं भानुतापेऽथ शोषयेत् ॥ २४ ॥
चुल्ल्यां निधाय विपचेदत्यल्पानलयोगतः ।
ऊर्ध्वपात्रस्थछिद्रेण वाष्पमुद्याति वेगतः ॥ २५ ॥
निर्याते जलबाष्पे तु विधिना परिपाकतः ।
खटीपिधानपिहितं छिद्रं सटया प्रलेपयेत् ॥ २६ ॥
अतिमन्दानलेनैव यामद्वितयमादितः ।
विपाचयेत्प्रयत्नेन स्वाङ्गशीतमथोद्धरेत् ॥ २७ ॥
न्युब्जं कृत्वा समुत्तार्य सन्धिदेशं विलिख्य च ।
शशिप्रभं लम्बमानं रसपुष्पं समाहरेत् ॥ २८ ॥

रसपुष्पस्य द्वितीयो निर्माणप्रकारः

शुद्धं तोलकपञ्चकं रसवरं काशीसकं सैन्धवम् ।
दत्त्वा चैव समं समं सुमसृणे खल्वे ततः पेषयेत् ।
कूपीमध्यगतं पचेत्तु सिकतायन्त्रेऽथ यामद्वयं
नीहारप्रभमूर्ध्वभागनिचितं पुष्पं रसाद्यं हरेत् ॥ २९ ॥
जलीयबाष्पे निष्क्रान्ते पिधानेन पिधाय वै
कूपिकाकण्ठदेशस्थां वालुकामपसारयेत् ॥ ३० ॥
पुष्पवच्छोभते यस्मात्कूपीकण्ठप्रलम्बितम् ।

रसपुष्पमिदं तस्मात्प्राणाचार्यैर्निगद्यते ॥ ३१ ॥

रसपुष्पस्य तृतीयो निर्माणप्रकारः

पुष्पकासीसजं चूर्णं त्वतिमन्दाग्नियोगतः ।
किञ्चिद् भृष्टं नरनीरं पञ्चतोलकसम्मितम् ॥ ३२ ॥
तन्मितामेव दहने पुष्पिता स्फटिकारिकाम् ।
रसेश्वरं सैन्धवं च पृथक्तुल्यं समाहरेत् ॥ ३३ ॥
खल्वे सम्पेष्य यत्नेन श्लक्ष्णचूर्णं तु कारयेत् ।
निश्चन्द्रिकं वीक्ष्य चूर्णं यन्त्रे डमरुकाह्वये ॥ ३४ ॥
अतिमन्दानलेनैवं द्वियामं यततः पचेत् ।
भिषग्वरो विधानज्ञः स्वाङ्गशीतमथोद्धरेत् ॥ ३५ ॥
भास्वद्विभं ततो युक्त्या शरदिन्दुमनोहरम् ।
पुष्पवल्लम्बमानं तु रसपुष्पं समाहरेत् ॥ ३६ ॥
रसतन्त्रमहाम्भोधिकर्णधारधुरन्धरैः ।
मित्रवंशावतंसैस्तु गुरुवर्यमहोदयैः ॥ ३७ ॥
श्रीमन्नरेन्द्रनाथाख्यैस्स्वयमाविष्कृतो विधिः ।
प्रकाशितः खलु मया लोकानुग्रहकाम्यया ॥ ३८ ॥

रसपुष्पस्य परीक्षणम्

महोज्ज्वले लोहपत्रे जलबिन्दुं तु विन्यसेत् ।
रसपुष्पं समादाय जलबिन्दौ विनिक्षिपेत् ॥ ३९ ॥
क्षणादूर्ध्वं जलं विष्पृशा यदि कार्ष्ण्यं न लभ्यते ।
रसपुष्पं तदा शुद्धं जानीयाद्भिषजां वरः ॥ ४० ॥

रसपुष्पस्य गुणाः

रसपुष्पं पित्तहरं मलव्रणदोषहृत् ।
परं विरेचनकरं तथा भूतविषापहम् ॥ ४१ ॥
स्वस्थीकरणमत्यन्तं जलीयाशयशोषणम् ।
पित्ताशयं तु निक्षोभ्य मलपित्तापसारकम् ॥ ४२ ॥

क्रमीन् विशूचिकोद्भूतान् हिकाश्चैव फिरङ्गकम् ।
जलोदरादिकान् रोगान् नाशयत्यनिलम्बितम् ॥ ४३ ॥

रसपुष्पस्य मात्रानिरूपणम्

गुञ्जार्द्धतः समारभ्य सार्द्धगुञ्जद्वयोन्मिता ।
रसपुष्पस्य मात्रा स्यान्मात्राविन्मतसम्मता ॥ ४४ ॥
रेचनाय मता मात्रा सार्द्धगुञ्जद्वयोन्मिता ।
गुञ्जाष्टमांशप्रमिता मात्रा हिक्कामये हिता ॥ ४५ ॥
फिरङ्गरोगाय मता गुञ्जापादांशसम्मिता ।
इयमेव मता मात्रा शिशूनां तु विरेचने ॥ ४६ ॥

रसपुष्पस्य आमयिक प्रयोग

रसपुष्पं सार्द्धगुञ्जाद्वितयं खर्जिकान्वितम् ।
शीलितं रेचयत्येव क्रमं यामद्वयोत्तरम् ॥ ४७ ॥
शीलितं रसपुष्पन्तु रोगिणा गुञ्जपादिकम् ।
निवृत्यास्तु समारम्भे विसूचीकमिमङ्घ्नुत ॥ ४८ ॥
रसागमपरिज्ञानविहीनो भिषगल्पधीः ।
निरन्तरं विशेषेण रसपुष्पं न योजयेत ॥ ४९ ॥

चन्दनादिवटिका

रक्तचन्दनमथोपणं सिता कुङ्कुमं रससुमं लवङ्गकम् ।
नालकेकसितमेव च पृथक् स्याद्दति रसतन्त्रकोविद ॥५०॥
रक्तिकैकमिता वटी कृता प्रत्यहं तु नवनीतयोजिता ।
चन्दनादिवटिकेयमुत्तमा हन्ति दुर्जयफिरङ्गजां व्यथाम्॥५१

अथ रसपुष्पमल्हर

रसपुष्पं चतुर्गुञ्ज मेलयेत्तालकोन्मिते ।
क्षालिते नवनीते तु शतधा विमलाम्भसा ॥ ५२ ॥
मतो मलहरोऽयन्तु रसपुष्पसमाह्वयः ।
लिप्तोऽयं नाशयत्याशु फिरङ्गव्रणजां रुजम् ॥ ५३ ॥

रसपुष्पाद्यमलहरः

रसपुष्पं चतुर्गुञ्जं सिक्थतैलश्च तोलकम् ।
खल्वेऽतिमसृणे क्षुद्रे दत्त्वा यत्नेन मर्दयेत् ॥ ५४ ॥
ततो विशालवक्त्रायां काचकुप्यां तु विन्यसेत् ।
गदितोऽयं मलहरो रसपुष्पाद्यसञ्ज्ञकः ॥ ५५ ॥

अस्य गुणाः

प्रलिप्तोऽयं मलहरः प्रत्यहं स्वल्पमात्रया ।
नाशयत्यचिरादेव फिरङ्गव्रणमुल्वणम् ॥ ५६ ॥
तथा पायुप्रदेशोत्थां स्त्रथवोपस्थदेशजाम् ।
विचर्चिकां चिरोद्भूतां नाशयत्येष निश्चितम् ॥ ५७ ॥
सिध्मादिकान् हन्त्याशु तथा तत्कालसम्भवम् ।
षाण्मासिकं वार्षिकं वा नखदन्तोद्भवं क्षतम् ॥ ५८ ॥

प्रसङ्गात् सिक्थतैलस्य प्रथमो निर्माणप्रकारः

भागैकं विमलं सिक्थं तैलन्तु रसभागिकम् ।
आदाय मृल्लिप्तायां स्थालिकायां निधापयेत् ॥ ५९ ॥
पचेत्तावन्मन्दवह्नौ यावत्सिक्थं द्रवीभवेत् ।
स्थालिकामथ यत्नेन धरिण्यामवतारयेत् ॥ ६० ॥
तावत्प्रचालयेद्दर्व्या यावदेति प्रगाढताम् ।
सिक्थतैलसमायोगात्सिक्थतैलमिदं स्मृतम् ॥ ६१ ॥

द्वितीयो निर्माणप्रकारः

भागैकं विमलं सिक्थं तैलन्तु शरभागिकम् ।
पूर्वोद्दिष्टविधानेन पचेद्रसविशारदः ॥ ६२ ॥
जायते नवनीताभं यावं दर्व्या प्रचालितम् ।
रसज्ञैः कीर्तितमिदं सिक्थतैलं द्वितीयकम् ॥ ६३ ॥

अनयोः प्रयोगः

आद्यं तु शीतसमये ग्रीष्मर्तौ तु द्वितीयकम् ।

रसकर्पूरगुटिका

कुङ्कुमं मरिचं रक्तचन्दनं च लवङ्गकम् ।
जातिपत्री पृथक् सर्वं माषकप्रमितं हरेत् ॥ ८४ ॥
विशुद्धं रसकर्पूरं रक्तिकैकमितं क्षिपेत् ।
समर्द्य निम्बुनीरेण कुर्याद् गुञ्जोन्मितां वटीम् ॥ ८५ ॥
रसकर्पूरगुटिका नामतः परिकीर्तिता ।
शीलिता नवनीतेन फिरङ्गं हन्त्यसंशयम् ॥ ८६ ॥

बाह्यप्रयोगार्थं भूतघ्नचक्रिका

रसं कर्पूरनामानं गुणपर्वतभागिकम् ।
निम्बुकाम्लञ्च विशदं वसुपात्रकसंमितम् ॥ ८७ ॥
समादाय विधानज्ञो मेलयेदतियत्नतः ।
चक्रिकाः कारयेद्वैद्यो गुञ्जषट्कमिताः पृथक् ॥ ८८ ॥
रसज्ञैस्तु समाख्याता नाम्ना भूतघ्नचक्रिका ।
न जातु विकृतिं याति भूतसङ्घविपापहा ॥ ८९ ॥

प्रसङ्गाद्विम्बुकाम्लस्य निर्माणप्रकारः

निम्बुकलुङ्गकादीनां निर्मलं रसमाहरेत् ।
काचलिप्ते तु मृत्पात्रे हसन्त्या क्वाथयेद्भिषक् ॥ ९० ॥
क्वथितश्च समालोक्य मृत्पात्रमवतारयेत् ।
कठिनीचूर्णकं दद्यात् यावद्बाष्पोद्गमो भवेत् ॥ ९१ ॥
अनन्तरं गन्धकाम्लं क्षिपेत्तावच्छनैः शनैः ।
चूर्णं कुन्देन्दुसङ्काशं यावद्याति तलस्थताम् ॥ ९२ ॥
तलस्थं तं सुविज्ञाय मारयेत्पृथुरामसा । ~
अवशिष्टञ्च वमने पदार्थं सन्त्यजेद् बुधः ॥ ९३ ॥
पानीयं मारितं काचपात्रे सस्थाप्य शोषयेत् ।
जायते शशिसङ्काशं चूर्णं पात्रतलस्थितम् ॥ ९४ ॥

अयमेव भिषग्वर्यैर्निम्बूकाम्ल इति स्मृतः ।
स्वजातिप्रभवास्तस्य गुणाः सर्वे भवन्ति हि ॥ ९५ ॥

रसकर्पूरद्रवस्य निर्माणप्रकारः

भूतप्रचक्रिकामेकां षष्टितोलकसम्मिते ।
जले क्षिपेत् निद्रुतायां द्रवं तु विनियोजयेत् ॥ ९६ ॥
रसकर्पूरमानात्तु द्विसहस्रगुणाम्भसा ।
द्रवोऽप्ययमेव निर्दिष्टो यथायोगं प्रयोजयेत् ॥ ९७ ॥

प्रकारान्तरेण रसकर्पूरद्रवस्य निर्माणप्रकारः

द्वात्रिंशद्गुञ्जकामितं रसकर्पूरमञ्जकम् ।
सार्द्धद्वितोलकमिते सारे कोहलपूर्वके ॥ ९८ ॥
द्रावयेद्रसतन्त्रज्ञः कुप्यामथ निधापयेत् ।
द्रवस्यास्य समादाय त्वष्टमाशमितं द्रवम् ॥ ९९ ॥
मेलयेत्सलिले शुद्धे षष्टितोलकसम्मिते ।
द्रवोऽयमपि सद्वृत्तो द्विसहस्रगुणाम्भसा ॥ १०० ॥

रसकर्पूरद्रवस्य गुणाः

फिरङ्गस्फोटनिपहृत् सपूयव्रणशोधनः ।
हस्तपादस्रावागारगेहादिगतभूतनुत् ॥ १०१ ॥
सङ्क्रामकगदोत्थानभूतस्तु विशेषतः ।
रसाम्बुसमाख्यातो रसकर्पूरजो द्रवः । १०२ ॥

रसकर्पूरद्रवस्य प्रयोगः

फिरङ्गजानां स्फोटानां व्रणानां विविधात्मनाम् ।
क्षालनार्थं विशेषेण सहस्रगुणिताम्भसा ॥ १०३ ॥
व्रणेषु तु चिरोत्थेषु द्विसहस्रगुणाम्भसा ।
कृतं द्रवं प्रयुञ्जीत शल्यतन्त्ररहस्यवित् ॥ १०४ ॥
हस्तपादादिकाङ्गानां गेहादीनाञ्च धावने ।
कृतं द्रवं प्रयुञ्जीत सहस्रगुणिताम्भसा ॥ १०५ ॥

योन्याग्निकोमलाङ्गानां क्षालनार्थं प्रयोजयेत् ।
सहस्रपञ्चकगुणनीरनिष्पादितं द्रवम् ॥ १०६ ॥

अथ कज्जलिकायाः स्वरूपम्

अर्द्धसमानद्विगुणमिताद्वा गन्धकचूर्णात् पारदकस्य ।
मर्दनजन्या मसृणकाया कज्जलरूपा कज्जलिका सा ॥ १०७ ॥

कज्जलिकायाः प्रयोगेषु विधानम्

योगेषु यत्र निर्दिष्टौ समौ गन्धकपारदौ ।
तन्मानां कज्जलीं तत्र योजयेद्भिषजां वरः ॥ १०८ ॥
उक्ते पारदमात्रे तु प्रयोगेषु सुनिश्चितम् ।
योजयेद्रससिन्दूरं रसतन्त्रविशारदः ॥ १०९ ॥
गन्धः स्यादधिकः सूतात् यावान् योगेषु मानतः ।
गन्धं तावन्तमेवेह विधानज्ञो विनिक्षिपेत् ॥ ११० ॥
रसाऽधिकः स यत्र गन्धकस्य प्रमाणतः ।
आदावेव विनिश्चित्य तन्मानां तत्र कज्जलीम् ॥ १११ ॥

कज्जलिकाया गुणाः

मद्यपानानुपानानां वैशिष्ट्यादिह कज्जली ।
सर्वामयहरा वृष्या मता दोषत्रयापहा ॥ ११२ ॥

तस्या आमयिकः प्रयोगः

कज्जली समसुगन्धनिर्मिता द्राक्षिडीमरिचचन्द्रतोयदैः ।
देवपुष्पबदरास्थिसंयुतैश्चूर्णितैश्च मधुना वमिं हरेत् ॥११३॥
कज्जली द्विगुणगन्धनिर्मिता चन्द्रनालकमरीचशैलजैः ।
चूर्णितैस्तु समितैश्च भक्षिता दारुणामपि तथा वमिं हरेत् ॥११
वरुणादिकषायेण कज्जली परिशीलिता ।
वातान्तविद्रधिं घोरं विनिवारयति द्रुतम् ॥ ११५ ॥
द्विभागगन्धककृता कज्जली खलु भक्षिता ।

कारवेल्लीदलरसैर्वीसर्पं दारुणं हरेत् ॥ ११६ ॥
द्विगुणितनालियोगा कज्जली श्लक्ष्णचूर्णा
सततमिह हि लीढा शिग्रुजत्वग्रसेन ।
मधुजमधुसमेता विद्रधिं हन्ति बाह्या
त्वपनयति तथान्तर्विद्रधिश्चातिघोराम् ॥ ११७ ॥
कज्जली द्विगुणगन्धनिर्मिता यष्टिकावृषकणाभयाक्षकैः ।
वर्वरीस्वरसभाविता भृश श्वासकासतमकामयापहा ॥ ११८ ॥
समानगन्धनिर्मिता सनिम्बुकाम्लनागरा ।
कणान्विता तु कज्जली हरेदजीर्णमुद्धतम् ॥ ११९ ॥
एलाहिफेनकर्पूरजातीफललवङ्गकैः ।
समैः सुचूर्णिता ख्याता कज्जली स्वप्नमेहनुत् ॥ १२० ॥
शिंशपासारतैलेन नवनीतेन वानिशम् ।
लिप्ता कज्जलिका शीघ्र जीर्णं चर्मदल हरेत् ॥ १२१ ॥
द्विभागधूर्तपत्राढ्या कज्जली मन्थजान्विता ।
चित्रकद्रवसंपिष्टा कण्डूपामादिक हरेत् ॥ १२२ ॥
कज्जली सैन्धवोपेता रविदुग्धेन पेषिता ।
गण्डेषु लेपनादेव नाशयेद् गण्डमालिकाम् ॥ १२३ ॥
वराकौशिकचूर्णेन समुपेता तु कज्जली ।
वातारितैलसयुक्ता सर्वामयविनाशिनी ॥ १२४ ॥
कज्जली द्विगुणगन्धनिर्मिता गव्यमन्थजयुता निषेविता ।
नाशयेत्तु ह्युपदशमुद्धत पथ्यमत्र लवणोज्झित मतम् ॥ १२५ ॥
समगन्धकयोगेन कृता कज्जलिका खलु ।

---

(1) मधुश्चैत्राख्यो म सस्तञ्जातेन मधुना क्षौद्रेण समेतेत्यर्थः । अथवा मधुर्वसन्त, तत्र जातेन ( निष्कासितेन इति यावत् ) वासन्तिकेन मधुना समेता इति योज्यम् ।

लेपनात्त्ववर्तीत गजचर्महरा मता ॥ १२६ ॥
कज्जली सितयोपेता धात्रीस्वरसमयुता ।
शीलिता नाशयत्याशु मरानेर मदात्ययान् ॥ १२७ ॥
धत्तूरबीजस्वरसपेषिता खलु कज्जली ।
मव्योषा नस्ययोगेन सन्निपात निपातयेत् ॥ १२८ ॥

अथ कज्जलिकोदयमलहर

वस्यान्धितोलकमिद सिक्थतैल तु निर्मलम् ।
श्लक्ष्णपिष्टा कज्जलिका तोलकद्वयसमिता ॥ १२९ ॥
शुद्ध मृद्दारशृङ्ग तु युगतोलकसमितम् ।
कम्पिल्लकश्च विमल रसतोलकसमितम् ॥ १३० ॥
माषत्रयोन्मित चैव तुत्थक निर्मलीकृतम् ।
आदाय खल्वे विन्यस्य पेषयेदतियत्नत ॥ १३१ ॥
ततो विशालवक्त्राया काचकुप्या तु विन्यसेत् ।
मतो मलहरोऽय तु नाम्ना कज्जलिकोदय ॥ १३२ ॥
शोधनो रोपणश्चाय व्रणाना तु विशेषत ।
नाडीव्रणहरश्चापि विविधव्रणनाशन ॥ १३३ ॥
व्रणा ये न प्रशाम्यन्ति भेषजाना शतैरपि ।
अचिरादेव शाम्यन्ति भृशमस्य प्रयोगत ॥ १३४ ॥

अथ रसपर्पटिकाया निर्माणप्रकार

ग्रत हिङ्गुलसम्भव हृतमल मोटोरुकार्द्रके[1]
दैत्येन्द्र कचरञ्जनोद्भवजले प्राक् सप्तधा भावितम् ।
अग्नौ कोलककोकिलोज्ज्वलशिखे सम्यग्विलाप्य द्रुत
भृङ्गोत्थे सलिले निषिच्य विमल तुल्य तत पेषयेत् ॥१३५॥
पुत्त्या कज्जलिका निधाय विधुषला लोहदर्व्यां क्षिपेत्

---

१–मोट जयन्ती—मोटा जयन्त्या चुक्रे च तथा हस्वबलाक्षुवे । इति कोष ।

निर्दिष्टैः खलु कोकिलैश्च दहन प्रज्वाल्य दर्वीं न्यसेत् ।
स्तत पङ्कसम विलाप्य रुचिरं पाकक्रियाकोविदः
शीघ्र गोमयमंस्थिते तु कदलीपत्रे ततो निक्षिपेत् ॥ १३६ ॥
निक्षिप्तमात्र कदलीपलाशैराच्छादयेद्व सुचिर रसज्ञः ।
यस्मादिय पर्पटतुल्यरूपा तस्मान्मता पर्पटिकाभिधेया ॥ १३७ ॥

पर्पटिकापाकस्य त्रैविध्यम्

मृदुर्मध्यः खरश्चेति पाकोऽत्र त्रिविधः स्मृतः ।
आद्यौ प्रयोजयेद्वैद्य खरन्तु विषवत्त्यजेत् ॥ १३८ ॥

त्रिविधपाकाना स्वरूपाणि

मृदुपाके न भङ्गः स्यात्तत्मारल्यश्च मध्यमे ।
द्वयोः सचन्द्रिक कार्ष्ण्यं खरे चूर्णश्च लोहितम् ॥ १३९ ॥

पर्पटिकाया गुणा

ग्रहणीगजमर्दनदक्षतरा क्षयकामजलोदरगुल्महरा ।
अतिसारमतिभ्रमदाहहरा ज्वरशोथहरा रसपर्पटिका ॥१४०॥
अर्शोरोग हरति सुतरा कामला शूलकोप
पाण्डुव्याधिं श्वयथुमहित भस्मकञ्चातिभीष्मम् ।
कुष्ठान्यष्टादश भृशमथोत्मेधक सर्वरूप
प्लीहानञ्च प्रवितततरुज त्वामवातानशेषान् ॥ १४१ ॥
अम्लपित्तशमनी हरणीया वृद्धदोषदमनी रमणीया ।
कामशुक्रजननी मदनीया पर्पटी क न भवेत्कमनीया ॥ १४२ ॥

पर्पटीमात्रा

गुञ्जाद्वितयमेवादौ मात्रामस्य प्रकल्पयेत् ।
क्रमवृद्ध्या च वितरेद् गुञ्जादशकमन्तत ॥ १४३ ॥

रसपर्पटिकाया आमयिक प्रयोग

नाकुलीबीजरसा गुञ्जाष्टकमिताशिता ।
रसपर्पटिका माज्यमुन्मादमिह नाशयेत् ॥ १४४ ॥

ब्राह्मीरससमायुक्ता गुञ्जाष्टकमिताशिता ।
रसपर्पटिका काममपस्मारं निवारयेत् ॥ १४५ ॥
रामठेनार्धगुञ्जेन सगुञ्जाष्टकजीरका ।
रसपर्पटिका भुक्ता ग्रहणीं हन्ति दारुणाम् ॥ १४६ ॥
व्योषनिम्बुदलोपेता भक्षिता रसपर्पटी ।
सप्ताहद्वितयेनैव त्वपस्मारं विनाशयेत् ॥ १४७ ॥
वर्धमानकनीजोत्थतैलेन परिशीलिता ।
शूलं, गुग्गुलुना पाण्डुशोफं हन्यात्तु पर्पटी ॥ १४८ ॥
धूर्तबीजसमायुक्ता रसपर्पटिकाशिता ।
गुञ्जापञ्चकमात्रन्तु हन्त्युन्मादं विशेषतः ॥ १४९ ॥
गोमूत्रेण समायुक्ता रसपर्पटिकाशिता ।
मासमात्रप्रयोगेण नाशयेदुदजामयम् ॥ १५० ॥
निम्बपञ्चकभल्लातगडूचीभृङ्गसयुता ।
निहन्ति सर्वकुष्ठानि रसपर्पटिकाशिता ॥ १५१ ॥
दशमूलकषायेण शीलिता रसपर्पटी ।
विनाशयेद्विशेषेण दारुणं वातिकं ज्वरम् ॥ १५२ ॥
शूषणक्वाथसयुक्ता रसपर्पटिकाशिता ।
विनिहन्त्यचिरादेव कामं खलु कफोत्थितम् ॥ १५३ ॥

पर्पटिकाभक्षणसमनन्तरं जलपाननिषेधः

रसवलिपर्पटिकाया भक्षणसमकालमेव दोषज्ञैः ।
नादेयं वा कौपं पानीयं नव पानीयम् ॥ १५४ ॥

पर्पटिकायां पथ्यानि

काकाह्वा च पटोलकं सुविशदं पूगीफलञ्चार्द्रकं,
वास्तूकं कदलीप्रसूनममलं कृष्णञ्च वार्तिङ्गनम् ।
सूक्ष्माश्चाथ पुरातनाः कृमिगणैर्हीनास्तथा शालयः,

पानं गोपयसः सशर्करमल पथ्य बुधैः कीर्तितम् ॥ १५५ ॥

प्रकारान्तरेण पथ्यानि

पुराणाः शालयः शाके वृन्ताक वा पटोलकम् ।
गवा दुग्धन्तु सतत पथ्यमेतच्चतुष्टयम् ॥ १५६ ॥
प्रथमायामवस्थाया दुग्ध सात्म्य न चेद्भवेत् ।
अतीसारप्रवृत्ति. स्यात्तदा तन्नैव योजयेत् ॥ १५७ ॥
लावातित्तिरिकादीना रस तत्र नियोजयेत् ।
अतीसारनिरोधे तु दुग्धमेव प्रदापयेत् ॥ १५८ ॥
शोथे विशेषतो हेय पानीय लवणन्तथा ।
तृषाया वितरेदल्प नारिकेलोदक भिषक् ॥ १५९ ॥
उष्णप्रधानदेशे तु रोगिमङ्गलकाम्यया ।
सशोथेऽपि भिषड् नीर जातु नैव निवर्जयेत् ॥ १६० ॥

रसपर्पटिकाया अपथ्यानि

नाम्ल स्नान शिशिरसलिलैर्नापि वातादिसेवा
कोप चिन्तामहितमतुल नैव सेवेत चोष्णम् ।
तिक्त निम्बादिकमिह गुडानूपमासादिकञ्च
स्त्रीणा सम्भाषणमपि बुधैर्नैव कार्यं कदाचित् ॥ १६१ ॥

अथ रससिन्दूरस्य निर्माणप्रकार

तोलकाष्टकमित रसेश्वर तन्मितञ्च विमल बलि हरेत् ।
खल्वके खलु विमर्द्य कज्जलीं भावयेदथ वटाङ्कुराम्बुभि. ॥१६२॥
मषीपात्रसमाकारा सुकूप्या काचकूपिकाम् ।
मतूलकुट्टितमृदा लेपयत् खलु यत्नत ॥ १६३ ॥
स्थापयेत्कज्जली काचकूप्या ततो यत्नत. पाचयेद्वालुकायन्त्रगाम् ।
अग्निवृद्धिक्रमैर्जीर्णगन्धे रसे रोधयेद्युक्तित' काचकूपीमुखम् ।१६४।
वालुकायन्त्रके काचकूपीमुखात् रोचनामन्निभो नैति धूमो यदा ।

घृतपाकक्रियाज्ञानदक्षैर्बुधैर्वेदितव्यस्तदा जीर्णगन्धो रसः ॥१६५॥
निरुध्य कूप्या खटिकापिधानैः जलेन सम्पेषितया प्रकामम् ।
प्रलेपयेद् गुडचूर्णपिष्ट्या, ततः पचेद्यामयुगं रसज्ञः ॥ १६६ ॥
अवबुध्य तदाङ्गशीततां खलु बालारुणवर्णसन्निभम् ।
गलदेशविलग्नमुज्ज्वलं रससिन्दूरमिहाहरेद् बुधः ॥ १६७ ॥

रससिन्दूरस्य निर्माणप्रकारः

( गीतिका )

वसुतोलकप्रमाणं विमलीकृतं रसेन्द्रम् ।
विनिधाय खल्वमध्ये समसम्मितञ्च गन्धम् ॥ १६८ ॥
दिनमेकं प्रयत्नादिह पेषयेद्विधिज्ञः ।
नवनीलनीरदाभां भवतु कज्जलीं विदध्यात् ॥ १६९ ॥
अथ भावयेद्विधानात् वटाङ्कुरोत्थरागैः ।
लघुशाल्मलीशिफार्थैः सलिलैस्तु वा त्रिवारम् ॥ १७० ॥
सविधानकोपमार्द्रां मलिना तु काचकूपीम् ।
जलतूलमृत्तिकाभिः परिलेपयेन्निकामम् ॥ १७१ ॥
विनिधाय तां तु कूपीमथ वालुकाख्ययन्त्रे ।
क्रमवृद्धवह्नियोगाद्विपचेद्रसं रसज्ञः ॥ १७२ ॥
मृदुवह्निना च पूर्वं विबुधा द्वियाममात्रम् ।
विधिना विधानवित्तः खलु जारयेत्तु गन्धम् ॥ १७३ ॥
अनलोऽस्य जीर्णगन्धे रसपाकविद्विशेषम् ।
पिदधीत काचकूपीवदनं पिधानकेन ॥ १७४ ॥
गुडचूर्णवारिपिष्ट्या सुविधाय वक्त्ररोधम् ।
अथ तीव्रवह्नियोगाद्विपचेद् द्वियाममात्रम् ॥ १७५ ॥
स्वत एव शीतलाङ्गीं तु विभिद्य काचकूपीम् ।
अरुणोत्पलप्रकाशं रसमाहरेत्क्रमेण ॥ १७६ ॥

अथ अर्द्धगन्धकजीर्ण रससिन्दूरम्
तोलकाष्टकमितो रसेश्वरः कर्षकद्वयमितश्च गन्धकः ।
नव्यसार इह कर्षसमितः पेषयेदथ च लुङ्गवारिभिः ॥१७७॥
कूपिकागतमथ प्रबुद्धधीः सम्पचेत् सिकतयन्त्रके भिषक् ।
शास्त्रवित्खलु निभिद्य कूपिका हिङ्गुलाभमिह सूतमाहरेत्॥१७८॥

अथ समानगन्धकजीर्ण रससिन्दूरम्
पामारिं खलु निर्मलं पलमितं तत्तुल्यमानं रसं
तत्पादप्रमितं नृसारममलं दत्त्वाऽथ सम्पेषयेत् ।
कूपीमध्यगतं निधाय सिकतायन्त्रे पचेद्युक्तितः
राजीवोपममूर्ध्वभागगरसं कूपीं विभिद्याहरेत् ॥ १७९ ॥

अथ द्विगुणगन्धकजीर्ण रससिन्दूरम्
पामारिं विमलं पलद्वयमितं सूतं पलैकोन्मितम्
सम्मर्द्याथ विभावयेद्धि कुसुमैः रक्ताभकार्पासजैः ।
कूपीमध्यगतं पचेच्च सिकतायन्त्रे त्वहोरात्रकम्
राजीवोपममूर्ध्वभागनिचितं सिन्दूरकञ्चाहरेत् ॥ १८० ॥

अथ त्रिगुणादिगन्धकजीर्णस्य रससिन्दूरस्य विधानम्
अनेनैव विधानेन गन्धकं वर्द्धयन् क्रमात् ।
रसकर्मविशेषज्ञो रससिन्दूरमुद्धरेत् ॥ १८१ ॥
जीर्णगन्धे रसे जाते क्रमागतदिनक्रमैः ।
यामद्वयं ततः प्राज्ञैः रसपाको विधीयते ॥ १८२ ॥

अथ षड्गुणगन्धकजीर्णं रससिन्दूरम्
पामारिर्विमलोऽङ्गसङ्ख्यकपलं सूतस्य चैकं पलं
सम्पेष्याथ विभावयेद्वधरो याम कुमारीरसैः ।
कूपीमध्यगतं विधाय सिकतायन्त्रे ततः सम्पचेत्
गाढं यामरसप्तकञ्च विधिना सिन्दूरकञ्चाहरेत् ॥ १८३ ॥

अथ रससिन्दूरस्य गुणाः

प्रमेहकरिकेशरी प्रनलशूलकालानलो
भगन्दरहर परं खलु महाज्वरेभाङ्कुश ।
समस्तगदतस्कर सकलशोपसशोषको
रसोऽतुलविलासदो विजयते हि सिन्दूरक. ॥ १८४ ॥
अल मलयजानिलै किमिह भेषजाना कुलै.
वृथैव घनशीतलै सरसचन्दनालेपनै ।
सखे मदनजीवन रतिविलासलीलागृह
प्रकामबलकान्तिद भज रस ससिन्दूरकम् ॥ १८५ ॥
गुल्मप्लीहहरो रतिप्रियकरो यक्ष्मेभपञ्चानन
पाण्डुस्थौल्यविधूननो व्रणहरो रौक्ष्याग्निमान्द्यापह. ।
कुष्ठव्याधिनिषूदनो रतिकलाप्रौढाङ्गनारञ्जनः
कान्तामस्तकभूषणो रसपतिर्भूयात्सदा श्रेयसे ॥ १८६ ॥
नियमयति रसेश' पञ्चवाताश्रितान्त
प्रसरति धमनीना स्वक्रिया वातसाम्ये ।
द्रढयति भृशमादौ जालक नाडिकाना
रमयति च ततोऽसौ मानस सेवकानाम् ॥ १८७ ॥
बहिर्गमनशीला ये स्वेदविण्मूत्रमारुता' ।
निरायाम विनिर्यान्ति रसस्यास्य निषेवणात् ॥ १८८ ॥
पित्त नि सारयत्येष न रेचयति कर्हिचित् ।
न च पित्ताशय कोष्ठ विक्षोभयति भक्षित ॥ १८९ ॥
स्फीतता दन्तवेष्टाना मुखपाक क्षतादिकम् ।
लालास्राव प्रदाहञ्च न सूते चिरसेवित' ॥ १९० ॥
विकारानीदृशानन्यान् दारुणान् पारदोत्थितान् ।
न जातु प्रकरोत्येष रस सिन्दूरसञ्ज्ञक ॥ १९१ ॥

दोषत्रितयमत्यर्थप्रवृद्धं शमयत्यलम् ।
प्रकृतिं गमयत्यत्र करणानि विशेषतः ॥ १९२ ॥

अथ सहपानस्य लक्षणम्

यद्योगेन रसादीना विभक्ताः परमाणवः ।
द्रुतमङ्गेषु सर्पन्ति सहपान तदुच्यते ॥ १९३ ॥

अथ अनुपानस्य लक्षणम्

तत्तद्रोगघ्नभैषज्य भेषजस्यानुपीयते ।
यच्च साहाय्यकारि स्यादनुपान तदुच्यते ॥ १९४ ॥
सहपानानुपानाभ्या भेषज परिबृंहयेत् ।
येन रोगहरा शक्तिर्भवेद् गुणवती सदा ॥ १९५ ॥
अलाभेऽत्यर्थमेवात्र सहपानानुपानयो' ।
मधुना वा जलेनैव भैषज्य वितरेद् भिषक् ॥ १९६ ॥

अथ रससिन्दूरस्य आमयिक प्रयोग

जातपुष्पतुलसीदलद्रवै. शृङ्गवेरजरसेन वा सदा ।
नागिनीस्वरसकेन वा भिषक् योजयेद्रसमिम नवज्वरे ॥१९७॥
छिन्नोद्भवापर्पटधान्यकाना क्काथेन तुर्यांशसमाहितेन ।
कान्तालल्लाटाभरण रसेश जीर्णज्वरे वैद्यवरः प्रदद्यात् ॥ १९८ ॥
मेहे गुडूचीस्वरसेन दद्यात्
योषित्प्रियामूलजतोयकैर्वा ।
असृग्दरेऽशोकनलादिकाना
क्काथेन सिन्दूररस प्रयोज्य ॥ १९९ ॥
बालाभयाया' क्काथेन सुधोऽर्शसि नियोजयेत् ।
वचारसेन तच्चूर्णं चापस्मारे प्रयुज्यते ॥ २०० ॥
कूष्माण्डस्वरसेनेह दद्यादुन्मादसज्ञके ।
श्वासे बिभीतकक्काथैर्वासाया. स्वरसेन वा ॥ २०१ ॥

कामलाया वुधो दद्याद् दार्वीक्काथेन संयुतम् ।
पाण्डुरोगे प्रयुञ्जीत रसज्ञो लोहभस्मना ॥ २०२ ॥
सितोपला च सूक्ष्मेला शिलाजञ्च सम समम् ।
एतत्त्रितयचूर्णेन मूत्रकृच्छ्रकुलान्तकः ॥ २०३ ॥
अजीर्णे मधुना वापि मुस्तक्काथजैर्द्रवैः ।
शूले वैद्यवरो दद्यात् त्रिफलाक्काथसंयुतम् ॥ २०४ ॥
कणाचूर्णयुत सूतो मधुना रक्तिकोन्मितः ।
सेवितो नाशयेन्मूर्च्छा पथ्य तोयावगाहनम् ॥ २०५ ॥
वमने वृहदेलाया क्काथेन मधुनापि वा ।
शोथे पुनर्नवायास्तु कषायेण प्रयोजयेत् ॥ २०६ ॥
गुडूचीनिम्बखदिरपुरुहूतफलद्रवैः ।
क्काथैर्वा संयुतश्चन्द्रचातुर्जातकमिश्रितः ॥ २०७ ॥
रस सिन्दूरसंज्ञोऽय प्रयुक्तो रक्तिकोन्मितः ।
विस्फोट दारुण हन्याद्यथा सूर्यस्तमस्ततिम् ॥ २०८ ॥
काकोलीचूर्णसंयुक्त नारिकेलोत्थतैलयुग् ।
सेवित रससिन्दूर हरेद्रोग जरायुजम् ॥ २०९ ॥
मृतवङ्गसमायुक्तो रस सिन्दूरसंज्ञकः ।
क्षौद्रेण भक्षितो हन्ति प्रमेह रतिकालजम् ॥ २१० ॥
सक्षौद्रैस्तु पूगणोपितधान्यजीरकनागरैः ।
सेवितो रससिन्दूरो वान्ति जयति दारुणाम् ॥ २११ ॥
भ्राह्मीनिचोलशङ्खपुष्पीक्षुद्रैलाक्काथसंयुतम् ।
रक्तिकाद्वितय खादेदपस्मारहर परम् ॥ २१२ ॥
धात्रीवयस्याकलिपादपानां
क्काथेन वा जन्तुरिपो समेतः ।
नित्य तु सिन्दूररसो रसज्ञै

भगन्दरेऽप्य विनियोजनीयः ॥ २१३ ॥
मिशिनालाभयाकार्थ्ययवानीचूर्णकेन वा ।
विडारयलचर्णेन गुल्मे वा विनियोजयेत् ॥ २१४ ॥
क्वाथेन दशमूलस्य शिर शूले प्रयोजयेत् ।
व्रणेषु बृहतीनीरगुडूचीनिम्बभेषजैः ॥ २१५ ॥
गुडूचिकाशतावरीकणारसाभयान्वितैः ।
वचाब्दनिम्बभेषजैः कषायकं प्रकल्पयेत् ॥ २१६ ॥
रसोऽत्र तेन संयुतो यथाविधिप्रयोजितः ।
निहन्ति वै चिरोत्थितं प्रकाममामवातकम् ॥ २१७ ॥
शाल्मलीमूलचूर्णेन विदार्यादिगणेन वा ।
प्रयुक्तो रससिन्दूरो वाजीकरण उत्तम ॥ २१८ ॥
भस्मना गगनस्येह काञ्चनेन मृतेन वा ।
उभाभ्यामेव वा युक्तो धातुवृद्धिकरो मतः ॥ २१९ ॥
जातीफलं देवपुष्पं कर्पूरश्चाहिफेनकम् ।
एषां चूर्णेन सहितो स्वप्नमेहहरो मतः ॥ २२० ॥
बलाक्वथिततोयेन सिन्दूररससेवनात् ।
विनश्यति चिरोद्भूतं शीर्षकम्पनमुद्धतम् ॥ २२१ ॥
जरणत्र्यूषणक्षुद्रापथ्याधानेयकैः समम् ।
निषेवितोऽयसिन्दूरो वान्तिशान्तिकरो मतः ॥ २२२ ॥
हिङ्गुदीप्यकशुण्ठीभिश्चव्यधान्यकरुच्यकैः ।
प्रयुक्तो रससिन्दूरो द्रुतं पानात्ययं जयेत् ॥ २२३ ॥
यव्यटङ्कणसंयुक्तः शीलितो दिनसप्तकम् ।
रस सिन्दूरसंज्ञोऽयं पक्तिशूलं विनाशयेत् ॥ २२४ ॥

१-रसा-रास्ना । रसा पृथिव्यां रास्नायां मेदायां मधुधान्यके ॥ इति कोष ॥
२-यव्य -यवक्षार ॥

वासाकषायसहितो लोध्रक्वाथान्वितोऽथवा ।
शीलितो रससिन्दूरो रक्तप्रदरमुद्धरेत् ॥ २२५ ॥
वराक्वाथेन वा गेहनीरेण तु समन्वितम् ।
शीलितो रससिन्दूरो श्वित्रपुण्डल्पमुद्धरेत् ॥ २२६ ॥
नवज्वरं प्रतिश्यायं शिशूनां सुरसारसैः ।
कासे श्वासे च वितरन् कण्टकारीरसेन च ॥ २२७ ॥
परिच्छेदो न निर्णेयः सहपानानुपानयोः ।
प्रकल्पयेद् यथारोगं सिद्धहस्तो भिषग्वरः ॥ २२८ ॥

अथ रससिन्दूरस्य मात्रा

रसहायनदेशीये बालके सौम्य रोगिणम् ।
गुञ्जायाः षोडशो भागस्तत्र मात्रा प्रकल्प्यते ॥ २२९ ॥
तथा द्विपदेशीये सप्तमो भाग इष्यते ।
रसहायनदेशीये तृतीयं भागमाहरेत् ॥ २३० ॥
द्वादशाब्दकदेशीये गुञ्जार्धं परिकल्पयेत् ।
गुञ्जामात्रमिता चास्य पूर्णमात्रा प्रशस्यते ॥ २३१ ॥

अथ मकरध्वजस्य निर्माणप्रकारः

स्वर्णं तोलकमितं मृद्दलं युक्त्या विशुद्धीकृतं
स्वर्णादष्टगुणोन्मितं रसवरं जीर्णान्तमागन्धिकम् ।
संस्कारैरष्टभिर्विशोधितमथो सम्मेल्य सम्पेषयेत्
गन्धं षोडशतोलकं सुविमलं कुर्यात्ततः कज्जलीम् ॥२३२॥
शोणैः कार्पासपुष्पैरथ मृदुविशदाङ्कोटमूलद्रवाद्भि
कन्यानीरैश्च घस्रं रसविधिचतुरो भावयेदामयज्ञः ।
सम्यक् पिष्टं सुशुष्कं त्वपि च रसवरं काचकुप्यां निदध्यात्,
बिल्वादीनाञ्च काष्ठैः सलिलविरहितैस्तापयेच्चाथ विद्वान्।२३३
पूर्वं यामद्वयं प्राज्ञः पचेन्मृद्वग्निना रसम् ।

मध्यमानलयोगाच्च ततो यामद्वयं पचेत् ॥ २३४ ॥
प्रखरेणानलेनाथ पचेद्यामद्वयं भिषक् ।
अवशिष्टद्वियामश्च पुनर्मृद्वग्निना पचेत् ॥ २३५ ॥
यन्त्रे सिकतसंज्ञे च स्वाङ्गशीतमथोद्धरेत् ।
काचकूपीं विभिद्याथ सहकारसमप्रभम् ॥ २३६ ॥
भङ्गे रक्तप्रतीकाशं पिष्टे रक्तोत्पलोपमम् ।
सौवर्णं मूर्च्छितं खलु गृह्णीयाद्भिषजां वरः ॥ २३७ ॥
नानेन जायते यस्मान्मकरध्वजसन्निभः ।
रसज्ञैः स्थापितस्तस्मान्नाम्नाय मकरध्वजः ॥ २३८ ॥

श्री सिद्धमकरध्वज

पूर्वोक्तनिजमानाच्च कनकं चेच्चतुर्गुणम् ।
निर्दिष्टमानप्रमितौ भवतो रसगन्धकौ ॥ २३९ ॥
पूर्वनद्भावयित्वापि पचेत्सिकतयन्त्रके ।
एनन्तु षड्गुणं गन्धं जारयेत्क्रमशो भिषक् ॥ २४० ॥
समर्पितो यतश्चायं सिद्धेभ्यः शूलपाणिना ।
ख्यातस्ततोऽयं जगति श्रीसिद्धमकरध्वजः ॥ २४१ ॥

अथास्य गुणाः

क्षयक्षयकरः परं प्रबलकामकालानलः
प्रमेहकुलकण्डनः प्रवितताम्त्रशोषान्तकः ।
समस्तगदभञ्जनः प्रमदकामिनीरञ्जनः
सदैव मकरध्वजो जियते रसाधीश्वरः ॥ २४२ ॥

अथ सर्वाङ्गसुन्दरो रसः

रसेश्वरं पलमितं गन्धकश्चापि तन्मितः ।
भूधात्रिकाहस्तिशुण्डीद्रवेणाथ निरन्तरम् ॥ २४३ ॥
रसतन्त्रविशेषज्ञः पेषयेद्दिनसप्तकम् ।
संस्थाप्य सम्पुटे सम्यग्वालुकायन्त्रगं भृशम् ॥ २४४ ॥

मन्दानलेन सुपचेदहोरात्रं भिषग्वरः ।
जाते पाके स्वाङ्गशीतं सम्पुटं त्ववतारयेत् ॥ २४५ ॥
सम्पुटोपरि संलग्नं पीतं भस्म समुद्धरेत् ।
पूर्वाचार्यैः कीर्तितोऽयं नाम्ना सर्वाङ्गसुन्दरः ॥ २४६ ॥

अथास्य गुणाः

हृदयप्रीतिजननो जठरामयनाशनः ।
बलवर्णप्रदाता च ज्वरघ्नो रक्तशोधकः ॥ २४७ ॥
वातव्याधिहरश्चैव जाठराग्निप्रदीपनः ।
शूलघ्नपाण्डुघ्नः शीघ्रं प्रकामं कामवर्द्धनः ॥ २४८ ॥
सहपानादिकञ्चास्य यथारोगं भिषग्वरः ।
रसमिन्द्रगणस्यैव वीक्ष्य दोषं प्रकल्पयेत् ॥ २४९ ॥

इति मूर्च्छनाविज्ञानीयो नाम षष्ठस्तरङ्गः

---

## अथ पारदमारणविज्ञानीयः सप्तमस्तरङ्गः

सामान्येन मारणस्य लक्षणम्

विविधक्रमयोगेन गन्धकाद्यौषधैः सह ।
रसादीनाञ्च धातूनां रोगापनयनक्षमम् ॥ १ ॥
गन्धकादियुतं वापि यदम्लरसुधान्वितम् ।
भस्मत्वापादनं यत्तु मारणं तदिहोच्यते ॥ २ ॥

अथ मृतपारदस्य लक्षणम्

निर्धूमस्तेजसा हीनो गौरवेण समन्वितः ।
अङ्गारस्थापितो यश्च न प्रयाति निरूपताम् ॥ ३ ॥
न च लाघवमायाति चापल्यं विजहाति च ।
आधिव्याधिहरो यश्च मृतः सूतः स उच्यते ॥ ४ ॥

अथ पारदमारणस्य प्रथम प्रकार

सूतः पलद्वयमितः सुतरां विशुद्धः
स्याद्गन्धकश्च विशद. पलसम्मितोऽत्र ।
द्रावेण मारकगणोक्तमहौषधानां
सम्पेषयेद्दिनसमेकमिहामयज्ञः ॥ ५ ॥

मूषापुटे रसवर विनिधाय युक्त्या
सन्धि विलिप्य खलु वह्निमृदा च कामम् ।
मूषा निधाय विपचेत् खलु भूधराख्ये
यन्त्रे रसोऽथ नियत मृतिमेति शीघ्रम् ॥ ६ ॥

अथ वह्निमृत्स्ना लक्षणम्

खटी लवणकिट्टाढ्या महिषीदुग्धमर्दिता ।
वह्नितापमहात्यन्त वह्निमृत्स्ना प्रकीर्तिता ॥ ७ ॥
मूषादीना सन्धिलेपे वह्निमृत्स्ना प्रशस्यते ।
न गन्तु क्षमते सूतो निरुद्धो वह्निमृत्स्नया ॥ ८ ॥

अथ पारदस्य मारको गण

विष्णुक्रान्ता देवदाली सर्पाक्षी सहदेविका ।
लाक्षा पुनर्नवा सूर्य सूर्यभक्ता च लाङ्गली ॥ ९ ॥
चाण्डालिनीकन्दसज्ञ' काकमाची विदारिका ।
नला समन्तदुग्धा च जयन्ती हस्तिशुण्डिका ॥ १० ॥
रम्भा कोपातकी शुण्ठी शशिलेखा निशाद्वयम ।
काकजङ्घा काकनासा सुरसा वङ्गपुत्रिका ॥ ११ ॥
आखुकर्णी ब्रह्मदण्डी दूर्वा च शरपुङ्खिका ।
चक्रमर्दो नीपकणा वर्षाभू' कटुतुम्बिका ॥ १२ ॥
इन्द्रवारुणिका हसपादी च शङ्खपुष्पिका ।
जाती मूर्वा च लज्जालु सर्षपस्तिलपर्णिका ॥ १३ ॥

वन्ध्याकर्कोटकी पूता गुञ्जा गिरिकर्णिका ।
प्रसारणी भृङ्गराजो रामठं गोमनार्द्री ॥ १४ ॥
शोभाञ्जनं पलाशश्च मत्स्याक्षी यमचिञ्चिका ।
मण्डूकपर्णी ज्वलनः शेफाली मुसली घना ॥ १५ ॥
पूर्वाचार्यैः कीर्तितोऽयं रसस्य मारको गणः ।
तत्तद्विधिप्रभेदेन सूतमारणसाधकः ॥ १६ ॥

अथ पारदस्य द्वितीयो मारणप्रकारः

विष्णुक्रान्तां देवदालीमारनालेन मर्दयेत् ।
तयोरेव द्रवेणाथ मारयेत् सप्तधा रसम् ॥ १७ ॥
मूर्च्छितश्च गुटिकाय पारदं खर्परे न्यसेत्
दीप्तानलायां चुल्ल्यां च स्थापयेदथ खर्परम् ॥ १८ ॥
वारं वारं तयोस्तत्र द्रवं शीघ्रं विनिक्षिपेत् ।
एवं रसो दिनैकेन समुपैतीह पञ्चताम् ॥ १९ ॥

अथ पारदमारणस्य तृतीयः प्रकारः

अङ्कोलमूलसलिलैः सूतं खल्वे विमर्दयेत् ।
सूतमानोन्मितं गन्धं शुद्धं तत्र विनिक्षिपेत् ॥ २० ॥
संस्थाप्य सूतं मूषायां पिदध्याद् वह्निमृत्स्नया ।
सन्धिलेपं ततः प्राज्ञः प्रदीप्तोपलपावके ॥ २१ ॥
यन्त्रे भूधरसंज्ञे च पचेद्यामचतुष्टयम् ।
एवं रसेश्वरः शीघ्रं नियतं याति भस्मताम् ॥ २२ ॥

अथ पारदमारणस्य चतुर्थः प्रकारः

अपामार्गस्य बीजानि नूतनानि विचूर्णयेत् ।
कल्कीकृत्य पुनस्तेन मूषायुग्मं प्रकल्पयेत् ॥ २३ ॥
अरिमेदः कृमिरिपुः द्रोणपुष्पीसुमं समम् ।
संचूर्ण्य चूर्णमेतेषां मूषामध्ये निधापयेत् ॥ २४ ॥

काकोदुम्बरिकादुग्धे सूत यत्नेन मर्दितम् ।
चूर्णोपरि तु संस्थाप्य पुनश्चूर्णं प्रदापयेत् ॥ २५ ॥
प्रलिप्य रसगोलश्च मूषाया स्थापयेत्ततः ।
सन्धिलेप तत' कुर्यादवश्य वह्निमृत्स्नया ॥ २६ ॥
सशोष्य चातपे मूषा पुटेद् गजपुटे भिषक् ।
एकेनैव पुटेनैव रसो यातीह भस्मताम् ॥ २७ ॥

पारदमारणस्य पञ्चम प्रकार

भुजङ्गरक्तरीरस रसेश्वर निमर्दयेत
ततश्च कर्कटीभव सुपेषयेत्तु कन्दकम् ॥ २८ ॥
विधाय कल्कमुत्तम क्षिपेद्रस तदन्तरे
निधाय सम्पुटे पुटेत्पुटे तु वारणाह्वये ॥ २९ ॥

अथ पारदस्य (अनुभूत) षष्ठो मारणप्रकार

काकोदुम्बरिकादुग्धैर्भावयेद्रामठ भिषक् ।
तत्कल्केन पुनः प्राज्ञो मूषायुग्म प्रकल्पयेत् ॥ ३० ॥
तद्दुग्धमर्दितश्चैव सूत तत्र विनिक्षिपेत् ।
मुद्रा कृत्वा सूतगोल मृण्मूषाया निधापयेत् ॥ ३१ ॥
सन्धि निलेपयेद्वह्निमृत्स्नया चाथ शोषयेत् ।
पचेल्लघुपुटे सूत स्वाङ्गशीत समुद्धरेत् ॥ ३२ ॥
मूषासन्धि विलिप्याथ कालाञ्जनसमप्रभम् ।
लाघवादिगुणोपेत गृह्णीयाद् भस्मसूतकम् ॥ ३३ ॥

अथ पारदमारणस्य (अनुभूत) सप्तम प्रकार

सूत हिङ्गुलसम्भव पलमित तुल्य बलिश्चाहरेद्
युक्त्या कज्जलिका विधाय वटजक्षीरैस्ततः पेषयेत् ।
मृद्भाण्डे विनिधाय तत्र नवभूदण्डेन सचालितो

मूढभ्रो दिनपाचितो रसवरो याति ध्रुवं भस्मताम् ॥ ३४॥

रसेश्वरं सुमसृणं कृष्णाञ्जनसमप्रभम् ।
निर्धूमादिगुणोपेतं गृह्णीयाद् भस्मतां गतम् ॥ ३५ ॥

अथ मृतपारदस्य गुणाः

ग्रहणीगदकर्षणदक्षतरं
त्वतिमाग्रहरं भयशोपहरम् ।
जठरानलमान्द्यविनाशकरं
परिशीलय सूतमयं भणितम् ॥ ३६ ॥

प्रमदामदमर्दनगर्वधरं
बलवीर्यविलाससमृद्धिकरम् ।
निजसेवकरक्षणदक्षतरं
परिशीलय सूतभवं भणितम् ॥ ३७ ॥

क्षयं क्षीणक्षेत्रं क्षपयति च दीप्तिं वितनुते
स्मृतिं सूते कामं द्रढयति च देहं द्रुततरम् ।
जरां वपकेन न्यपनयति मशीलितमिदं
गुणान् को वा वक्तुं प्रभवति रसेशस्य नियतम् ॥ ३८ ॥

रतिकेलिकला भृशमुज्ज्वलयेच्छलितं ललनाकुलमाकुलयेत् ।
हृदि चोत्कलिकां कलयेत् कलितो रतिरागरतामयमेव सदा॥३९॥

शृङ्गारस्य हि सर्वस्वं सुरतस्याधिदैवतम् ।
वशीकरणमन्त्रश्च प्रमदानां मृतो रसः ॥ ४० ॥

अथ मृतसूतस्य आमयिकः प्रयोगः

पांशुमुस्तकषायेण सुरसाक्वथितेन वा ।
कणाक्वाथेन वा युक्तो मृतः सूतो हरेज्ज्वरम् ॥ ४१ ॥
लाक्षया वा हरीतक्या तथा सिंहिकयान्वितः ।

१-पांशु -पपटम्—पांशु पपटके धूलौ पुमाने शालिमम्बके । इति कोषः ।

माक्षिकेणापि वा युक्तो रक्तपित्त व्यपोहति ॥ ४२ ॥
व्याघ्रीक्वाथेन कणया चापि कामकुलान्तकः ।
वरानिशाकपायेण पाण्डुरोग विनाशयेत् ॥ ४३ ॥
क्षीरिवृक्षकपायेण पञ्चपल्लवजेन वा ।
क्वाथेन शृतशीतेन हन्त्यतीसारमुद्धतम् ॥ ४४ ॥
रसालजम्बूदलजद्रवेण गुडान्वितेनाथ सुपाचितेन ।
बालेन बिल्वेन सनागरेण प्रवाहिका हन्ति मृतो रसेश ॥४५॥
हिङ्गुना सकणेनेह विपूचीं हन्ति दारुणाम् ।
पथ्यया काञ्जिकेनापि त्वजीर्णं हरति क्षणात् ॥ ४६ ॥
तैलसैन्धवमयुक्तपुटपाचितसूरणैः ।
अर्शांसि नाशयत्याशु दीर्घकालोद्भवान्यपि ॥ ४७ ॥
बीजपूराम्लरुचकैः हिकापश्वकनाशनः ।
सितालाजजलक्षौद्रैश्छर्दि दाहञ्च नाशयेत् ॥ ४८ ॥
अजादुग्धविपक्वेन वैदेहीपाचितेन च ।
घृतेन मन्थकेनापि मक्षत क्षपयेत् क्षयम् ॥ ४९ ॥
गोक्षुरादिकषायेण मसूरक्वथितेन वा ।
क्षौद्रेणापि युतः सूतो मूत्रकृच्छ्र व्यपोहति ॥ ५० ॥
सव्योपेण तिलक्वाथेनामशूल व्यपोहति ।
शम्बूकक्षारसहित' पक्तिशूलनिवर्हण· ॥ ५१ ॥
मूत्रयुतः कटुतिक्तकविश्व-
क्वाथयुतो हरतीह हि शोफम् ।
दारुनिशात्रिफलाक्वथिताढ्यः
कामलिना खलु मङ्गलकारी ॥ ५२ ॥
नवोद्धृतस्नुहीक्षारद्रवभावितया भृशम् ।
हरीतक्या युतः सूतो जठरामयनाशनः ॥ ५३ ॥

त्रिकटुत्रिफलामरिचप्रमितस्त्रिपुटीफलतैलयुत. पुरकः ।
मृतसूतयुतो नियत त्वचिरात् चिरजा विनिहन्ति हि तुन्दिलताम्॥५४
रसोनसिद्धेन तिलोद्भवेन तैलेन सार्द्धन्तु रसो निपीत. ।
वातोद्भवानत्र वहून् विकारान् निहन्ति घोरानपि वा चिरोत्थान्॥५५
हरीतकी गुडूचिका जल गुड समं समम् ।
विचूर्णितेन योजितो हरेत्समीरशोणितम् ॥ ५६ ॥
विश्वभेषजरुवृकसस्कृतक्षीरकेण विनियोजितो रस' ।
गृध्रसीं हरति दीर्घकालजामन्धकारपटलीं यथा रविः ॥ ५७ ॥
शशाङ्कलेखया तथा फलत्रिकेण सयुत' ।
समार्कवो मृतो रसो निहन्ति वै किलासकम् ॥ ५८ ॥
कृमिघ्ननिम्बदाडिमत्रिपर्णचूर्णसयुत ।
ससाक्षिकस्तु पारदो मृतो हरेत्कृमीन् द्रुतम् ॥ ५९ ॥
राजिकानलरसोननीलिकाभृङ्गराजमृदुपल्लवै समम् ।
नीरवृक्षफलसयुत पचेत्तैलमत्र पयसा समन्वितम् ॥ ६० ॥
अनेन तैलेन युतो रसेश कुष्ठान्यशेषाणि निहन्ति शीघ्रम् ।
यथा मृगेन्द्रो वनमध्यचारी मृगालुपेतानिह निर्विशङ्क ॥ ६१ ॥
वरीबलावाजिगन्धामोचामूलकषायकै ।
रसेश्वरो हरेत्कार्श्यं मासद्वयनिषेवित ॥ ६२ ॥
सौवर्चलव्यूषणहिङ्गुसैन्धवपाचितेनेह घृतेन युक्त ।
रसेश्वर सप्तदिनप्रयोगात् सर्वानपस्मारगदान्निहन्ति ॥ ६३ ॥
मधूकसारजतविड्युतेन मन शिलाया खलु चूर्णकेन ।
रसोऽञ्जनात्तारणलक्षणाद्वाप्युन्मादरोगान्विनिहन्ति शीघ्रम्॥६४॥
मृत रसेश मधुना विलिह्य क्षौद्रान्वित कोष्णजल पिबेद्य' ।
स्थौल्यात्तु मेद'प्रभवाश्रितान्त चिरोत्थितान्चापि विमुच्यतेऽसौ॥६५
वरागिरिजतु योपि भृङ्गस्वरसभावित ।

मृतः सूतो हरेत्तस्य प्रमेहान् सकलानपि ॥ ६६ ॥
मूर्वास्वरससंयुक्तो मृतः सूतोऽतिदारुणाम् ।
मसूरिका निहन्त्येव लेपनाद् भक्षणादपि ॥ ६७ ॥
कन्यामूलरसेनाथ तण्डुलीयजलेन वा ।
मृतः सूतो द्रुत हन्याद् विष स्थावरजङ्गमम् ॥ ६८ ॥
तण्डुलोदकसंयुक्तो यथाविधि मृतो रसः ।
नस्ये पाने विशेषेण विषार्तस्य प्रशस्यते ॥ ६९ ॥
गोपुरीषसलिलेन भावयेत् सप्तधेह घनसारमुत्तमम् ।
तद्युत खलु मृतो रसेश्वर स्थावरादिविषभेदनाशन ॥ ७० ॥
नृमूत्रपिष्टेन पुनर्नवाया बीजेन मूलेन समान्वितेन ।
मृतो रसेश' खलु लेपनेन विष सदा वृश्चिकज निहन्ति ॥७१॥
वन्ध्याकर्कोटकीमूलफलेनापि समान्वित ।
सूत' सुदारुण हन्ति विष स्थावरजङ्गमम् ॥ ७२ ॥
कपित्थफलसयुतोऽथ खलु देवदालीयुत·
सधूममदनोऽथवा तु शरपुङ्खबीजान्वित' ।
मृत' खलु रसेश्वरो ह्यविरत प्रलेपादिना
निहन्ति भृशदारुण प्रमदमूषिकाणा विषम् ॥ ७३ ॥
नागिनीरसपिष्टेन नागरेणेह कासके ।
समन्वितो रसो हन्याद् वृश्चिकार्ति सुदारुणाम् ॥ ७४ ॥

अथ रसायनादौ पारदसेवनविधि

यदाधिव्याधिविध्वसि वयस स्थापकन्तथा ।
मेध्य वृष्य तथा नेत्र्य भेषज्य तद्रसायनम् ॥ ७५ ॥
क्षेत्रीकृत्य निज देह सेवेतेह रसायनम् ।
विधिना मितपथ्याशी देहसिद्धिं हि विन्दति ॥ ७६ ॥
रसायन य कुरुते क्षेत्रीकरणमन्तरा ।

देहसिद्धिर्न तस्य स्यात् प्रत्युत क्षयकृद्भवेत् ॥ ७७ ॥
सुबीजमपि सम्कृत कृपिविधानदक्षैरिह
प्ररोहति न कर्हिचित् सुविततोषरासु यथा ।
तथैव सुभिषग्वरैरकृतपञ्चकर्मक्रमे
नरे हि न रसायनं फलति जातु सयोजितम् ॥ ७८ ॥

क्षेत्रीकरणस्य स्वरूपम्

सञ्जातपञ्चकृत्यस्य जेत्रयेद् गदनाशनम् ।
रसायनादौ तत्प्राज्ञैः क्षेत्रीकरणमुच्यते ॥ ७९ ॥

क्षेत्रीकरणप्रक्रिया

आदौ तु पञ्चकर्माणि कारयित्वा भिषग्वरः ।
पश्चात्सिद्धौषधैर्यत्नाद्रोगशान्तिं प्रकल्पयेत् ॥ ८० ॥
यदि बाल कृशः क्षीणः स्याद्रसायनसेवकः ।
तदा तु पञ्चकर्माणि कारयेन्न भिषग्वरः ॥ ८१ ॥
समयगस्तदा युक्त्या रेचनं कारयेन्नरम् ।
ततस्तु सिद्धभैषज्यैर्नीरुजश्चापि कारयेत् ॥ ८२ ॥
सिद्धौषधप्रयोगाच्च रोगशान्तिर्यदा भवेत् ।
मृताभ्रमुख्ययोगाश्च तदा सयोजयेद्भिषक् ॥ ८३ ॥
क्षेत्रीकृतनिजकायः कामं शाल्योदनादिपथ्याशी ।
लब्धबलो रसभोक्ता निर्दधीत रसायनं प्रातः ॥ ८४ ॥

रसायनोचितो रसः

हिरण्यजीर्णो घनसत्त्वजीर्णो
वज्रादिजीर्णोऽप्यथवा मृतश्च ।
रसायनार्थं हि रसो नितान्तं
प्रशस्यते ह्यत्र रसागमज्ञैः ॥ ८५ ॥

रसभक्षणकाल

प्रत्यूषे भक्षयेत्सूतं पथ्यं यामे तथादिमे ।

द्वितीययामे मतिमानश्नीयाद् भोजनं हितम् ॥ ८६ ॥

अथ मात्राभेदः

हिरण्यजीर्णसूतस्य गुञ्जार्धं वितरेद्भिषक् ।
जीर्णवैक्रान्तकस्यापि तथा मात्रां प्रकल्पयेत् ॥ ८७ ॥
जीर्णवज्ररसेशस्य गुञ्जापादः प्रशस्यते ।
गुञ्जिका तु तदन्येषां मात्रा प्राज्ञः प्रकल्पयेत् ॥ ८८ ॥

अथ रसायनसेवनेऽपथ्यानि

मिथ्याहारविहारपानसलिलक्रीडातिनिद्रादिकं
कोपं दुःखमतिस्पृहामतिमुदं स्नानं तथोद्वर्तनम् ।
स्त्रीणां नित्यमतिप्रसङ्गमनिशं चिन्तामसूया तृषां
क्षुत्क्रोधश्च मदं रसायनसुधासेवी सदा वर्जयेत् ॥ ८९ ॥

रससेवने पथ्यम्

शृङ्गवेराज्यधानेयजीरकैः परिसंस्कृतम् ।
नातिपक्वं पटोलञ्च तण्डुलीयञ्च वास्तुकम् ॥ ९० ॥
शाकं पौनर्नवञ्चापि पद्ममूलादिकन्तथा ।
पुराणाः शालयो गव्यं दुग्धं दधि घृतन्तथा ॥ ९१ ॥
गोधूमो मुद्गयूषश्च तथा हंसोदकं हिमम् ।
रसेन्द्रस्य बुधैः प्रोक्तं पथ्यमेतत्समासतः ॥ ९२ ॥

अथ रससेवनेऽपथ्यम्

कूष्माण्डं कमठं कलिङ्गकफलं कोलं कुलत्थास्तथा
कर्कोटीं कतकं कपित्थकफलं वै काञ्चनीयं सुमम् ।
कङ्गुं काञ्जिककारवेल्लकमलं कर्कोटकः कर्कटी
कौसुम्भश्च कपोतकं खलु गणः प्रोक्तः ककारादिकः ॥ ९३ ॥
ककारादिगणाख्यानि भेषजानि कदाचन ।
रसायनफलाकाङ्क्षी रससेवी न भक्षयेत् ॥ ९४ ॥
माषं मसूरकं तैलं कलायञ्च सुरासवान् ।

नारङ्ग नारिकेलञ्च धान्याम्ल निम्बुकादिकम् ॥ ९५ ॥
आनूपमास वेत्राग्र नाश्नीयात्कृषदाम्तथा ।
रम्भादले भोजनञ्च तत्र भक्त गुरुर्जलम् ॥ ९६ ॥
कांस्यपात्रे न चाश्नीयाद् गुरु विष्टम्भि भोजनम् ।
कट्वम्लतिक्त तीक्ष्णोष्ण भोजनन्तु भृश त्यजत् ॥ ९७ ॥
कुङ्कुमालेपन जह्यात् घनसारञ्च सर्वथा ।
मध्याह्ने पर्यटनञ्चैव न कुर्याद् वादजल्पनम् ॥ ९८ ॥

केषाञ्चिन्मते ककाराष्टकनिषेध

कलिङ्ग कारवल्लञ्च कदली काकमाचिका ।
कुसुम्भिका च कर्कोटी कूष्माण्ड कर्कटी तथा ॥ ९९
ककाराष्टकमेतद्धि प्रोक्त रसविशारदै ।
वर्जयेद्रससवी च नित्यमेतत्प्रयत्नत ॥ १०० ॥

अथ रसवेदना सुखाचार

शिशिरसलिलसेकस्तापमन्तप्तकाये
मलयजघनलेपश्चोत्तमाङ्गे निकामम् ।
सुरभिहिममर्मरे मन्दमन्दप्रचारो
हिमकरकरसङ्ग काव्यगाथाप्रसङ्ग ॥ १०१ ॥
उरसि भवति तापे शीततोयावगाहो
मनसि मलिनतायामासवारिष्टपानम् ।
अनिशमिह तपाया नारिकेलीयनीर
त्वपि हि झटिति सेव्य शीतल यच्च पथ्यम् ॥१०२॥
गुडूचिकोशीरकधान्यकानां मधुस्रवापर्पटचन्दनानाम् ।
तुगासिताचूर्णयुत कषायो रसोद्भव तापगद निहन्यात् ॥१०३॥
विद्रुमो रङ्गक तुल्यमेतद् द्वय
रङ्गपादोन्मित काञ्चन मौक्तिकम् ।

वशजातन्त्रिकामत्वयुक्त मम
भक्षयेद्वारिभिस्तत्र कूष्माण्डजैः ॥ १०४ ॥

अमूर्च्छितामृतसूतभक्षणजन्यक्लेशे गन्धकनिषेवनम्

आज्यदुग्धोपधं· शोधित गन्धक
मात्रया, युक्तितो नागवल्लीरसैः ।
पारदक्लेशितो भक्षयेत्सतत
यान्ति दोषा द्रुत शान्तिमेकान्तत ॥ १०५ ॥

कूष्माण्डादिगण

कूष्माण्डस्तुलसी लाक्षा खण्डश्च शतपुष्पिका ।
लवङ्ग वत्सनागश्च तण्डुलीयस्य मूलकम् ॥ १०६ ॥
कूष्माण्डादिगणो ज्ञेय पूर्वाचार्यनिरूपितः ।
अमूर्च्छितामृतरसविकारकुलकण्डन ॥ १०७ ॥
कूष्माण्डादिगणोद्दिष्टैर्जैरेकेन गन्धकम् ।
माषद्वय भक्षयित्वा ततो गव्य पयः पिबेत् ॥ १०८ ॥
पारदस्य विकारा ये भेषजाना शतैरपि ।
शान्ति न यान्ति तत्रेम योग दद्याद्भिषग्वर· ॥ १०९ ॥
काकमाचीरस पीत' प्रत्यह तोलकोन्मित ।
निहन्ति मासमात्रेण विकारान् दुष्टसूतजान् ॥ ११० ॥
नागिनीदलकल्केन युक्तेन सुरसाद्रवै' ।
गात्रलेपाय वितरेद् गन्ध रसचिकित्सक ॥ १११ ॥

इति पारदसंस्कारविधानविधिर्नाम सप्तमस्तरङ्ग

# अथ गन्धकविज्ञानीयोऽष्टमस्तरङ्गः

### अथ गन्धकनामानि

गन्धको गन्धपाषाणो गन्धी च रसगन्धकः ।
सुगन्धिको गन्धिकश्च गन्धः सौगन्धिकस्तथा ॥ १ ॥
पूतिगन्धोऽतिगन्धश्च पामारिः कीटनाशनः ।
बलिर्बलिरसाग्र्यश्च कुष्ठारिः शरभूमिजः ॥ २ ॥
शुल्वारिर्नवनीतश्च दैत्येन्द्रो गन्धमादनः ।
कीटघ्नः क्रूरगन्धश्च स एव परिकीर्तितः ॥ ३ ॥

### अथ गन्धकस्वरूपम्

निर्मलस्तु रजनीसमप्रभो दीप्तिमांश्च नवनीतकोमलः ।
कीर्तितो ह्यमलसारसंज्ञको गन्धको रसरसायने वरः ॥४॥

### अशोधितगन्धकदोषनिरूपणम्

अशोधितः सुगन्धिकस्तनौ तनोति तापकम् ।
भृशञ्च चित्तविभ्रमं करोति रक्तजान् गदान् ॥ ५ ॥
प्रसन्नतां सुरूपतां शरीरबन्धचारुताम् ।
प्रभां बलञ्च नाशयत्यतो विशोधयेत्तु तम् ॥ ६ ॥

### अथ गन्धकशोधनस्य प्रथमः प्रकारः

दीप्तानलायां सुचिरं ह्यमन्त्यां संस्थापयेन्निर्मललोहपात्रम् ।
आज्यं विशुद्धं त्वथ गन्धतुल्यं विनिक्षिपेत्तापयितुं रसज्ञ ॥७॥
आज्यं सुतप्तं तु विलोक्य तस्मिन् क्षिपेत्समानं खलु गन्धचूर्णम् ।
मन्दानलेनाथ विपच्यमानं विद्रावयेद् गन्धकमामयघ्नम् ॥८॥
दुग्धपूर्णोदरं पात्रं तनुवस्त्रेण रोधयेत् ।
विद्रुतं गन्धकञ्चाथ तनुवस्त्रोपरि क्षिपेत् ॥ ९ ॥
सारयेद्विधिना गन्धं दुग्धमध्ये यथा पतेत् ।
दुग्धमध्यगतं गन्धं सम्यक् प्रक्षालयेत्ततः ॥ १० ॥

एव वारद्वय पक्त्वा दुग्धेऽन्यस्मिन् पुनः क्षिपेत ।
एव विचार सशुद्धो गन्धको विमलो भवेत् ॥ ११ ॥
अनेनैव विधानेन शतवार विशोधितः ।
गन्धको निजगन्धन्तु जहातीह न सशय' ॥ १२ ॥

द्वितीय शोधनप्रकार

दुग्धपूर्णोदरार्द्धे तु घृत पात्रे विनिक्षिपेत् ।
तन्मुख तनुवस्त्रेण त्वहतेनाथ रोधयेत् ॥ १३ ॥
चूर्णीकृत गन्धकञ्च वसनोपरि विन्यसेत् ।
आच्छादयेच्च विधिना खर्परेणाथ गन्धकम् ॥ १४ ॥
मलवस्त्रकुट्टितमृदा तयो सन्धि निरोधयेत् ।
आकण्ठ भाजन गर्ते निधाय भिषजाग्रणी ॥ १५ ॥
वन्योपलैस्तु ज्वलन ज्वालयेद् भाण्डमूर्धनि ।
एव तु विद्रुतो गन्धो दुग्धे पतति तत्क्षणात् ॥ १६ ॥
गन्ध शीत सुविज्ञाय क्षालयेत्सलिलै. भृशम् ।
एवमेकन वारेण गन्धको निर्मलो भवेत् ॥ १७ ॥

तृतीय शोधनप्रकार

सार्षप तिलज वापि कौसुम्भ तैलमुत्तमम् ।
कटाहे निक्षिपेद्युक्त्या वह्नि प्रज्वालयेदध ॥ १८ ॥
तैल सुतप्त विज्ञाय तत्सम गन्धचूर्णकम् ।
तैले विनिक्षिपेत्प्राज्ञ पचेन्मन्दाग्निना बलिम् ॥ १९ ॥
विद्रुत तु बलिं ज्ञात्वा द्रुत क्षीरे विनिक्षिपेत् ।
प्रक्षालयेच्चतत्तोयैर्विशुद्धो जायते बलिः ॥ २० ॥

चतुर्थ शोधनप्रकार

विधाय चूर्ण गन्धस्य द्रावयेल्लोहभाजने ।
भृङ्गराजरसे क्षिप्त्वा क्षालयेच्चाथ वारिभि. ॥ २१ ॥

अनेनैव विधानेन सप्तवारं विशोधयेत् ।
भोक्तुं पृथक् त्रिवारन्तु योगार्थं भिषजा नरः ॥ २२ ॥

पञ्चम शोधनप्रकार

स्वल्पे सौगन्धिकं क्षिप्त्वा दृढं सम्पेषयेत्ततः ।
श्लक्ष्णचूर्णं ततो ज्ञात्वा चतुष्पलमितं नलिम् ॥ २३ ॥
यन्त्रे डमरुसंज्ञे च पचेद्यामचतुष्टयम् ।
ऊर्ध्वलग्नं नलिं पीतं यत्नतो ह्यवतारयेत् ॥ २४ ॥
एवं सशोधितो गन्धः शुद्धिमायात्यनुत्तमाम् ।
पाषाणादिकदोषाश्च सर्वथा विजहात्ययम् ॥ २५ ॥

षष्ठ शोधनप्रकार

दग्धचूर्णोपलस्याह भागमेकं समाहरेत् ।
त्रिगुणे सलिले चाथ युक्त्या निर्वापयेद् भिषक् ॥ २६ ॥
भागद्वयं गन्धकस्य त्रयोदश जलस्य च ।
भागान् सगृह्य चुल्ल्याश्च निधाय द्रावयेद्धुतम् ॥ २७ ॥
कपिलाभं ततो ज्ञात्वा मारयेत्प्रयुगामसा ।
मृत्पात्रे काचलिप्ते वा काचपात्रे निवापयेत् ॥ २८ ॥
शीतलञ्चाथ विनाय लवणद्रावकं भिषक् ।
शनैः शनैः क्षिपेद्यावद् गन्धकस्तु पतत्यधः ॥ २९ ॥
अधःस्थं गन्धकं ज्ञात्वा जलाशमन्यभाजने ।
स्थापयित्वा ततो गन्धं क्षालयेत्सलिलैर्भृशम् ॥ ३० ॥
सौगन्धिकं विशोष्याथ श्लक्ष्णचूर्णं तु कारयेत् ।
एवं सशोधितं गन्धं वीतशङ्कं प्रयोजयेत् ॥ ३१ ॥

अथ सुधालवणम्

पृथक् केन चलाशन्तु सशोष्याथ विचूर्णयेत् ।
सुधालवणमित्युक्तं रक्तस्रुतिहरं परम् ॥ ३२ ॥

अथ गन्धकस्य गन्धनाशनप्रकार

सुगन्धिक निचूर्णित पचेत्तु दुग्धमध्यगम् ।
यदा घनत्वमाप्नुयात्तदा सुवस्त्रचेलारमम ॥ ३३ ॥
क्षिपेदथो पुन पचेन्छनैः शनैर्भिषग्वरः ।
जले फलत्रिकोद्भवे विनिक्षिपेत्ततो बुध' ॥ ३४ ॥
स्वगन्धमत्र गन्धको जहात्यशेषतो द्रुतम ।
चिराशनार्थमीदृश बलि नियोजयद्भिषक् ॥ ३५ ॥

अथ विशुद्धगन्धकस्य गुणा

गन्ध शुद्धो गरविषहर क्षुद्रकुष्ठेभसिंह
काम श्वास हरति नितरा दद्रुदावानलश्च ।
आधिव्याधिप्रशमनपटु' कासमाम निहन्यात्
दिव्या दृष्टिं वितरतितरा जाठराग्निं प्रसूते ॥ ३६ ॥
सुगन्धिक सुनिर्मल. सरो रसायनोत्तम' ।
कटूष्णवीर्यपाचनो रसेन्द्रवीर्यवर्द्धन' ॥ ३७ ॥
विकारान्नागत्याश दुष्टसूत शनोत्थितान् ।
दुष्टाहिभक्षणोत्थाश्च शिरोदाहादिकानपि ॥ ३८ ॥

अथ शुद्धगन्धकस्य मात्रा

रक्तिकात' समारभ्य रक्तिकाष्टकमर्मितम ।
प्राणाचार्य प्रयुञ्जीत गन्धक तु विशोधितम् ॥ ३९ ॥

अथ शुद्धगन्धकस्य आमयिक प्रयोग

विशोधित सुगन्धिको निहन्ति बाह्यलेपत ।
प्रकाममामवातक चिरोत्थिताञ्च गृध्रसीम् ॥ ४० ॥
सुगन्धिक' सुनिर्मलो वराकषायसयुत ।
हरेदिहोर्ध्वगान गदान् तथाग्निमान्द्यनाशन ॥ ४१ ॥
सिंहपर्णकषायेण श्वय हन्ति चिरोत्थितम् ।

काथेन कण्टकार्याश्च कास श्वास व्यपोहति ॥ ४२ ॥
रम्भापक्वफलेनेह चर्मदोष विनाशयेत ।
वह्निचूर्णेन महिनो निहन्ति वलहीनताम् ॥ ४३ ॥
विशोधित गन्धक तु तिलचूर्णेन शीलितम् ।
गुदामयोत्थ पायुस्थ विदर नाशयत्यलम् ॥ ४४ ॥
यष्टी खण्ड स्वर्णपत्री मिश्रेया च सम समम् ।
चूर्णनानेन वा युक्त पायुस्थविदरान्तक ॥ ४५ ॥
मर्काशिक सुगन्धिक फलत्रिकेण सयुत ।
द्विमासमात्रसेवित कफोत्थरोगनाशन ॥ ४६ ॥
ज्योतिष्कारीजतैल खलु विधिविहित श्लक्ष्णचूर्ण वचाया
गव्यश्चाज्य नवीन दधिभरममल तुल्यमेतत्त्रय स्यात् ।
पामारिर्नष्टगन्धस्त्रितयपरिमित सेवितो मासमात्रम्
यक्ष्माणञ्चान्त्रशोष हरति हि चपल गण्डमालाञ्च भीष्माम् ॥४७॥
दिव्यादृष्टि सतत वीर्यधृष्टिश्चित्ते तुष्टिर्निर्भर देहपुष्टि ।
शौर्योत्कर्षो जायते वज्रमुष्टिर्नष्टातङ्का मासमात्रप्रयोगात् ॥४८॥
मृद्दारशृङ्ग सौभाग्य कर्पूर गन्धकन्तथा ।
सर्वमेतत्सम ग्राह्य चूर्णमेषा प्रकल्पयेत् ॥ ४९ ॥
नारिकेलस्य तैलेन परिलिप्त स्तनान्तरम् ।
पामा नश्यति सप्ताहाच्चिरजापि सुदारुणा ॥ ५० ॥
सौभाग्य शालनिर्यास स्फटिका च सुगन्धिक ।
सर्व सम समादाय चूर्णयेद्धिपजाग्रणी ॥ ५१ ॥
निम्बूकस्वरसेनाथ सतत परिलेपनात् ।
विद्रावयति दद्रूणि द्रुत नास्तीह सशय ॥ ५२ ॥
शाल्मलीलघुमूलस्य चूर्णेन विमल वलिम् ।
भक्षयेन्मासमेकन्तु शौर्यं वीर्यं विवर्धयेत् ॥ ५३ ॥

विशोधितं गन्धकं तु मधुना परिशीलितम् ।
धात्रीरसानुपानेन गलत्कुष्ठं निहन्त्यलम् ॥ ५४ ॥

दद्रुविद्रावणमलहर

सिक्थतैलं तु निर्मलं भानुतोलकसम्मितम् ।
विशोधितं गन्धकं च तोलकैकमितं शुभम् ॥ ५५ ॥
सुपुष्पितं तु सौभाग्यं चक्रमर्दस्य बीजकम् ।
वृक्षामयरजः स्वच्छं तोलकार्द्धमितं पृथक् ॥ ५६ ॥
अतिमन्दाग्निना पक्वं शीतं कुप्यां तु विन्यसेत् ।
मतो मलहरोऽयं तु दद्रुविद्रावणाह्वयः ॥ ५७ ॥
प्रलिप्तोऽयं मलहरो दिनसप्तकमात्रतः ।
उन्मूलयति दद्रूणि समूलं नेह संशयः ॥ ५८ ॥

गन्धकाद्यमलहर

सिक्थतैलं सुनिर्मलं रसतोलकसम्मितम् ।
गन्धकं गिरिसिन्दूरं तोलकार्द्धमितं पृथक् ॥ ५९ ॥
टङ्कणं घनसारं च पृथक् माषद्वयोन्मितम् ।
दत्वा सम्मेल्य यत्नेन काचकुप्यां निधापयेत् ॥ ६० ॥
मतो मलहरोऽयं तु गन्धकाद्यसमाह्वयः ।
विनाशयत्याशु भृशं पामामत्यर्थदारुणाम् ॥ ६१ ॥

प्रथमो गन्धककल्पः

विशोधितः सुगन्धिको वराज्यभृङ्गसंयुतः ।
समाक्षिको विधानतस्त्रिमासमात्रसेवितः ॥ ६२ ॥
निहन्ति दारुणान् गदान् चिरोत्थितानपि द्रुतम् ।
करोति लोचनद्वयं विकाशि गृध्रनेत्रवत् ॥ ६३ ॥
दुग्धं सशर्करं कोष्णं रसौदनं षष्टिकोद्भवम् ।
शीतवीर्यं सनेह्यं पथ्यमेतन्समासतः ॥ ६४ ॥

द्वितीयो गन्धककल्पः

नवनीताह्वयं शुद्धचूर्णमामलकोद्भवम् ।
तुल्यमेतद्द्वयं ग्राह्यं मसृणं विधानतः ॥ ६५ ॥
रसेन भावयेद् धात्र्याः शाल्मल्याश्च द्रवैस्तथा ।
शर्करामधुसंयुक्तं लिहेदनु पयः पिबेत् ॥ ६६ ॥
गगनानलमासनिषेवनतः
स्थविरोऽपि मनोजशराभिहतः ।
सुरतैर्निरतः खलु विह्वलयन्
रमयेद्रमणीशतकं सगमः ॥ ६७ ॥

तृतीयो गन्धककल्पः

माषार्द्धं निर्मलं गन्धं कोष्णेन पयसा पुमान् ।
भक्षयेत्प्रत्यहं मासं वीर्यवृद्धिः प्रजायते ॥ ६८ ॥
षण्माससेवनाच्चास्य दिव्या दृष्टिस्तु निर्दिशति ।
सुवर्णवर्णसंकाशा दीप्तिं संतनुते तनौ ॥ ६९ ॥

चतुर्थो गन्धककल्पः

माषार्द्धं गन्धकं शुद्धं तिलतैलेन भक्षयेत् ।
नित्यं चोष्णजलेनेह पामादीनवसेचयेत् ॥ ७० ॥
सप्ताहत्रितयादेव पामाद्याः सकला रुजः ।
हरेत् सुवर्णवर्णाभः कायः संजायते नृणाम् ॥ ७१ ॥

पञ्चमो गन्धककल्पः

गन्धकं निर्मलं मागधीगर्भितं पथ्यया संयुतं तुल्यमेतत् त्रयम्
सर्पिषा माक्षिकेनेह माषद्वयं भक्षयेद् यत्नतस्तत्र मासत्रयम् ॥ ७२ ॥
भोजनादौ सदा यन्त्रणावर्जितं
शीलयेत्प्रत्यहं ब्रह्मचारी नरः ।
तप्तचामीकरोद्भासिरम्याननः
शौर्यवीर्यान्वितो दिव्यदृष्टिर्भवेत् ॥ ७३ ॥

षष्ठो गन्धककल्प

तैलसंशोधित गन्धक चूर्णित
माषकार्द्धं लिहेत् क्षौद्रमध्यस्थितम् ।
नाशयेत्सत्वर क्षुद्रकुष्ठोत्थिता
वेदना दारुणा दीर्घकालोत्थिताम् ॥ ७४ ॥
मरिच गन्धक पश्चात्तैलेनेह सुपेषयेत् ।
अपामार्गजलेनापि ततो देह प्रलेपयेत् ॥ ७५ ॥
घर्मे सशोषयित्वाथ स्नान कुर्यात् सुभेषजैः ।
सप्ताहद्वितयेनैव क्षुद्रकुष्ठ व्यपोहति ॥ ७६ ॥

सप्तमो गन्धककल्प

सौगन्धिक तु विमल गृह्णीयाद् भिषजा वरः ।
ततो गव्येन पयसा त्रिवार खलु भावयेत् ॥ ७७ ॥
ततः फलत्रिकेणाथ चतुर्जातद्रवैस्तथा ।
गुडूच्या भृङ्गनीरेण शृङ्गवेररसेन च ॥ ७८ ॥
अष्टवार पृथग युक्त्या भावयेद् रसकोविद ।
सिद्धे रसायने तुल्या सिता सयोज्य योजयेत् ॥ ७९ ॥
प्रत्यह सेवितो गन्धो माषमात्रप्रमाणत. ।
मासमात्रप्रयोगेण निहन्ति विविधान् गदान् ॥ ८० ॥
धातुक्षयोत्थितान् रोगान् तथा कोष्ठसमाश्रितान् ।
प्रमेहान् शीर्षजान् रोगान् शूल कुष्ठादिकानपि ॥ ८१ ॥
क्षाराम्ललवणादीनि कोपादीन् वनितासुखम् ।
द्विदलानि च शाकानि गन्धसेवी न भक्षयेत् ॥ ८२ ॥

अष्टमो गन्धककल्प

विशुद्धसौगन्धिकचूर्णमादौ
विभावयेद् भृङ्गरसैस्त्रिवारम् ।

ततो घृतक्षौद्रहरीतकीभि-
र्भजेत नित्यं खलु मासमात्रम् ॥ ८३ ॥
विधिना मितपथ्याशी मासद्वयनिषेवणात् ।
स्थविरोऽपि सगक्रान्तो निर्भरं तरुणायते ॥ ८४ ॥

नवमो गन्धकयोगः

स्नुक्कनलगयुतं मरीचिको वरान्वितं ।
विशुद्धपारदान्वितं सुगन्धिका निषेवितं ॥ ८५ ॥
निहन्ति मासमात्रतो भृशं कफोत्थितान् गदान् ।
समीरजांश्च पैत्तिकान् चिरोत्थितानपि द्रुतम् ॥ ८६ ॥
दृशा खगेश्वरोपमो बलेन भीमसन्निभः ।
रतिप्रभस्तु तेजसा भवेत् स वज्रविग्रहः ॥ ८७ ॥

दशमो गन्धकयोगः

फलत्रिकं भृङ्गराजो विमलश्च सुगन्धिकः ।
एषमेतत्समं ग्राह्यं श्लक्ष्णचूर्णं प्रकल्पयेत् ॥ ८८ ॥
दिव्यदृष्टिर्वज्रकायो मासेनैकेन जायते ।
षण्मासमात्रयोगाच्च वलीपलितनाशनः ॥ ८९ ॥

अथ गन्धकतैलम्

आवर्तमाने पयसि क्षिपेद्धि
विशुद्धसौगन्धिकजं हि चूर्णम् ।
तदुद्भवक्षीरसमुत्थमाज्यं
गन्धस्य तैलं वितरेत्प्रतप्तम् ॥ ९० ॥
सुगन्धतैलं विनिहन्ति शीघ्रं
क्षुद्राणि कुष्ठानि विशेषतो वै ।
हरेद्विसर्पादिकरोगसङ्घं
विलेपनाद्वाशनतः प्रकामम् ॥ ९१ ॥

गन्धकतैलस्य द्वितीयोनिर्माणप्रकार

'सप्तधा लेपयेदर्कदुग्धेन वै
वस्त्रमच्छं पुनर्नत्रिदुग्धेन च ।
पेपयेद् गन्धकं मन्थजेन तथा
वस्त्रमालेपयेत्तेन युक्त्या भिषक् ॥ ९२ ॥
गन्धलिप्तं पुनर्वस्त्रमापीडयन्
वर्तिकाकारतामानयेत्कोविद' ।
दंशयन्त्रस्थिता निम्नपात्रोन्मुखी
ज्वालयेद्वर्तिका युक्तितो वैद्यराट् ॥ ९३ ॥
हरेत्सुगन्धतैलन्तु पतितं काचभाजने ।
क्षुद्रकुष्ठादिरोगेषु मतिमान् सम्प्रयोजयेत् ॥ ९४ ॥

गन्धकतैलस्य तृतीयो निर्माणप्रकार

फलाशन्युपर्णोपेत निर्मल चूर्णित वलिम् ।
निम्नकीर्योचित वस्त्रे तत' सूत्रेण वेष्टयेत् ॥ ९५ ॥
याम निमज्जयेत्तैले तत मन्दशयन्त्रगाम् ।
वर्ति निम्नमुखीं कृत्वा काचपात्रमधो न्यसेत् ॥ ९६ ॥
तत' प्रज्वालयेद् युक्त्या गन्धो द्रवति विन्दुश
इद सौगन्धिक तैल बुधै' श्रेष्ठतर मतम् ॥ ९७ ॥
विन्दुत्रयमित तैल ताम्बूलीदलसंस्थितम् ।
तत्सम विमल सूत समर्याथ प्रयोजयेत् ॥ ९८ ॥
दिनत्रयप्रयोगेण दीपयत्युदरानलम् ।
आम निवारयत्येन दिनैकमपि योजितम् ॥ ९९ ॥
कासश्वासहर काम ग्रहणीगजकेशरी ।
आमवातादिरोगघ्न' स्नेहोऽस्य गन्धसम्भव' ॥ १०० ॥

गन्धकतैलस्य चतुर्था निर्माणप्रकारः

ब्रह्मबीजोद्भवं श्लक्ष्णचूर्णं क्षिपेच्छागदुग्धे ततः शोषयेद्युक्तितः ।
षोडशांशं गलिं तत्र सम्मेलयेत्काचकुप्यां ततो निक्षिपेत्कोविदः ॥ १०१
ततः पातालयन्त्रेण तैलं ग्राह्यं भिषग्वरैः ।
मन्त्रभूतं गन्धकस्य गन्धतैलं महोत्तमम् ॥ १०२ ॥
रक्तिद्वयं गन्धतैलं ताम्बूलीदलमध्यगम् ।
तैलार्द्धं रसराजन्तु शुद्धं तत्र विमिश्रयेत् ॥ १०३ ॥
अङ्गुल्यग्रेण सम्मद्य कृत्वा कज्जलिकां चरेत् ।
ताम्बूलं शीलयेत्पश्चाद् गन्धतैलस्य सेवकः ॥ १०४ ॥
अम्लं शाकादिकञ्चैव ककाराष्टकमेव च ।
उष्णवीर्यं यदन्यच्च तदपथ्यमिह स्मृतम् ॥ १०५ ॥
योगेनानेन पुरुषो वृद्धोऽपि तरुणायते ।
अश्ववत् प्रतिदिनं रमयेत् रमणीशतम् ॥ १०६ ॥
कामश्वासहरो बल्यो वलीपलितनाशनः ।
शोषमशोषकः कामं क्षयकुञ्जरकेशरी ॥ १०७ ॥
शूलकालानलः सत्यं मेहरोगनिषूदनः ।
एतत्तैलसमं लोके नान्यदस्ति रसायनम् ॥ १०८ ॥

अथ गन्धकद्रावस्य निर्माणप्रकारः

एकस्मिँल्लोहपात्रे तु गलिं शतपलोन्मितम् ।
निक्षिप्य चुल्लिकायाञ्च निधायाग्निं प्रदीपयेत् ॥ १०९ ॥
अपरस्मिन् सोरकञ्च सार्द्धपञ्चपलोन्मितम् ।
निधाय चुल्ल्यामारोप्य वह्निं सन्धुक्षयेत्ततः ॥ ११० ॥
पिधानेनानयोर्युक्त्या भृशं संरोधयेन्मुखम् ।
नलिकाद्वितयं दीर्घं पात्रयोर्योजयेत् पृथक् ॥ १११ ॥
कोष्ठाकारेऽहिपात्रं च मुखं नलिकयोर्न्यसेत् ।

नलिमोरकयोरेव धूम सम्मिश्रयेद्बुध' ॥ ११२ ॥
दशाधिकद्विशतकपलं सलिलमाहरेत् ।
पात्रेऽन्यस्मिश्च संस्थाप्य वह्नौ सन्तापयेद् भृशम् ॥ ११३ ॥
नलिकामुखतो वाष्प नागपात्रेऽथ मेलयेत् ।
वाष्पमयोगतश्चैव शतत्रयपलोन्मित' ॥ ११४ ॥
जायते गन्धकद्रावोपीताभोऽतिमनोहर ।

गन्धकद्रावस्य नामानि

गन्धद्रावो बलिद्रावो गन्धाम्लश्च स कीर्तित' ॥ ११५ ॥

अशुद्धगन्धकद्रावस्य दोषा

विशुद्धो गन्धकद्रावः सुधाधिकफलप्रद' ।
अविशुद्धो दोषकारी तस्माच्च शोधयेद्बुध ॥ ११६ ॥

अथ गन्धकद्रावस्य शोधनप्रकार

गन्धकद्रावक प्राज्ञ' काचकुप्यां निधापयेत् ।
अस्या सयोज्य नलिका मुखमस्या नियोजयेत् ॥ ११७ ॥
अन्यस्या काचकुप्यान्तु पचेन्मृद्वग्निना भिषक् ।
तस्य तृतीयमशन्तु जलांशमधिकं भवेत् ॥ ११८ ॥
तस्माच्च प्रथम यत्नादस्मादपनयेद् भिषक् ।
विशुद्ध गन्धक द्राव तत कुप्यां निपातयेत् ॥ ११९ ॥
पात्रज नागदोष यज्जलांशमधिकञ्च यत् ।
गन्धद्रावो जहात्येव निर्मलश्च पर भवेत् ॥ १२० ॥

पानार्थं सजलगन्धकद्रावस्य निर्माणप्रकार

शीतांशुभागिक शुद्ध गन्धकद्रावक शुभम् ।
परिस्रुते तु सलिले रविभागमिते क्षिपेत् ॥ १२१ ॥
निधाय काचकुप्यां च निर्मलाया भिषग्वर' ।
दृढेनाथ पिधानेन रोधयेत् कूपिकामुखम् ॥ १२२ ॥

ततो निर्दिष्टरोगेषु मात्रयाऽतिप्रयत्नत ।
गन्धद्राव प्रयुञ्जीत रसतन्त्रविशारद ॥ १२३ ॥

मजल्ग-धद्रावस्य मात्रा

आरभ्य शरबिन्दुभ्य शराक्षिबिन्दुमित परम् ।
मजल गन्धकद्राव वीतशङ्क प्रयोजयेत ॥ १२४ ॥

सजल्ग-धद्रावस्य सहपानम्

पल मार्द्रपल नापि पलद्वयमित जलम ।
मनीरगन्धद्रावस्य सहपाने प्रयोजयेत् ॥ १२५ ॥
यवान्या शतपुष्पायास्तथो देवसुमस्य च ।
पृथक परिस्रुत तोय सहपान प्रदीयते ॥ १२६ ॥

अथ गन्धद्रावस्य गुणा

गुल्मप्लीहगनाङ्कुश क्रिमिहर सर्वोदरातङ्कहृत् ।
वीर्याप्णस्तु विसूचिकामयहर' सङ्कोचको निर्भरम् ॥ १२७ ॥
आध्मानज्वररोगरोधनपटू रक्तातिसारान्तक ।
रक्तस्रावहरोऽग्निदीप्तिजननो गन्धोद्भवो द्रावक ॥ १२८ ॥
तृपा विसूचिकोद्भवा हरत्यय विशेषत ।
तथातिघर्मरोधक सदातिसारनाशन ॥ १२९ ॥
विकारान दारुणान् नित्य दुष्टनागाशनोत्थितान् ।
नाशयत्यचिरादेव, तिमिरन्तु यथा रवि ॥ १३० ॥

इति गन्धकविज्ञानीयो नाम अष्टमस्तरङ्ग

---

## अथ हिङ्गुलविज्ञानीयो नवमस्तरङ्गः

### हिङ्गुलस्य नामानि

हिङ्गुलो हिङ्गुलश्चैव हिङ्गलं चेङ्गुलाह्वयम् ।
म्लेच्छं रक्तं सुरङ्गञ्च चित्राङ्गं चूर्णपारदम् ॥ १ ॥
रसोद्भवो रसस्थानं रञ्जनं कपिशीर्षकम् ।
रक्तकायो हंसपादो दरदश्च प्रकीर्तितम् ॥ २ ॥

### हिङ्गुलस्य स्वरूपम्

जपाकुसुमवर्णाभः पेषणे सुमनोहरः ।
महोज्ज्वलो भारपूर्णो हिङ्गुलः श्रेष्ठ इष्यते ॥ ३ ॥

### हिङ्गुलस्य द्वौ भेदौ

प्रथमः खनिजोऽन्यस्तु कृत्रिमो हिङ्गुलो मतः ।
खनिजः खनितो जातः कृत्रिमो रसगन्धजः ॥ ४ ॥

### कृत्रिमहिङ्गुलस्य निर्माणप्रकारः

वसुभागमितं गन्धं सूतं नेत्रयुगोन्मितम् ।
मृदङ्गयन्त्रे संस्थाप्य गारङ्गं भ्रामयेत्ततः ॥ ५ ॥
तस्य सम्भ्रामणादेव श्लक्ष्णचूर्णं प्रजायते ।
व्यावर्तनपिधानञ्च सम्भ्राम्य ह्यवतारयेत् ॥ ६ ॥
चूर्णं धूसरवर्णाभं यन्त्रान्निष्कासयेत्ततः ।
सुदृढाया ततः स्थाल्याः चूर्णमेतन्निधापयेत् ॥ ७ ॥
रेखान्वितमुखी स्थाली ऊर्ध्वस्य प्रशस्यते ।
व्यावर्तनमुखीमन्यां स्थालीं तस्यां निधापयेत् ॥ ८ ॥
स्थालीं सम्भ्राम्य परितो यत्नतो रोधयेन्मुखम् ।
ततः संस्थापयेच्चुल्यां वह्निं दद्याच्छनैः शनैः ॥ ९ ॥
अधःस्थालीकण्ठगतं हिङ्गुलं तु समाहरेत् ।
ऊर्ध्वस्थालीतलस्थश्च पुनः पक्त्वा समाहरेत् ॥ १० ॥

अशुद्धहिङ्गुलस्य दोषा

अशुद्धो हिङ्गुलो मोह प्रमेह चित्तविभ्रमम् ।
आन्ध्य क्लम तथा श्वैण्य कुर्यात्तस्माद्विशोधयेत् ॥ ११ ॥

अथ हिङ्गुलशोधनस्य प्रथम प्रकार

हिङ्गुल चूर्णित खल्वे शृङ्गवेराम्भसा तत ।
सप्तधा भावयेत्प्राज्ञो निर्मलो हिङ्गुलो भवेत् ॥ १२ ॥

द्वितीय शोधनप्रकार

हिङ्गुल चूर्णित खल्वे लकुचस्याम्भसा तत ।
विभाव्य शोषयेद्वैद्यो हिङ्गुल शुद्धिमाप्नुयात् ॥ १३ ॥

तृतीय शोधनप्रकार

सुचूर्णित हिङ्गुलन्तु मेषीदुग्धेन भावयेत् ।
सप्तवार प्रयत्नेन शुद्धिमायात्यनुत्तमाम् ॥ १४ ॥
अम्लवर्गात्कभिपर्ज्यभावित सप्तधा पुन ।
हिङ्गुल परमा शुद्धिमाप्नोतीति किमद्भुतम् ॥ १५ ॥

चतुर्थ शोधनप्रकार

निम्बूकस्वरसेनेह हिङ्गुल श्लक्ष्णचूर्णितम् ।
विभावयेत्सप्तवार क्षालयेदुष्णतोऽम्भसा ॥ १६ ॥
तत सशोषयेद् घर्मे रसतन्त्रविधानवित् ।
एव विशोधित रक्त नीतशङ्क प्रयोजयेत् ॥ १७ ॥

शोधितहिङ्गुलस्य गुणा

लोचनामयहर कफापह पित्तनामयनिपूदन परम् ।
प्लीहकुष्ठगरकामलाहरो जाठराग्निजननोऽथ पाचन ॥१८॥
मेहवर्गपरितापनाशनो देहकान्तिबलबुद्धिवर्द्धन ।
आमवातगनदर्पखण्डनो हिङ्गुलो विजयते ज्वरापह ॥१९॥

शुद्धहिङ्गुलस्य प्रयोग

वलिजातीफलाकृकणाविश्वसमन्वितम् ।
दरदं विनिहन्त्याशु वातं शुक्रसमाश्रितम् ॥ २० ॥
पिप्पलीनिपसयुक्तं दरदं परिशीलितम् ।
मध्वार्द्रकरसेनेह हन्ति वातज्वरं द्रुतम् ॥ २१ ॥
भयोत्थितं ज्वरं वापि पित्तश्लेष्मोद्भवं ज्वरम् ।
नवज्वरायमाणं च त्वामवातोद्भवं ज्वरम् ॥ २२ ॥
जातीफलाकृमुस्तचन्द्रेन्द्रयवसयुतम् ।
दरदं शीलितं हन्ति ह्यामातीसारमुल्वणम् ॥ २३ ॥
जातीफललवङ्गेन्द्रयवटङ्कैन्दुसयुतम् ।
दरदं विनिहन्त्याशु रुजमामातिसारजाम् ॥ २४ ॥

हिङ्गुलाद्यमलहर

सिक्थतैलं सुनिर्मलं भानुतोलकसमितम् ।
सिन्दूरं दरदश्चैव तोलकार्द्धमितं क्षिपेत् ॥ २५ ॥
विमर्द्य मसृणे खल्वे काचकुप्यां तु विन्यसेत् ।
हिङ्गुलाद्यो मलहरः फिरङ्गव्रणरोपणः ॥ २६ ॥

हिङ्गुलामृतमलहर

सिक्थतैलं सुनिर्मलं सूर्यतोलकसमितम् ।
तोलकार्द्धमितं चैव दरदं सुनिचूर्णितम् ॥ २७ ॥
मृद्दारशृङ्ग सौभाग्यं कर्पूरं रसपुष्पकम् ।
स्फटिका गिरिसिन्दूरं पृथक् माषद्वयोन्मितम् ॥ २८ ॥
सम्मेल्य मसृणे खल्वे काचकुप्यां तु विन्यसेत् ।
मतो मलहरोऽयं तु हिङ्गुलामृतसञ्ज्ञकः ॥ २९ ॥
हिङ्गुलामृतसञ्ज्ञोऽयं पूयनिर्हरणं परम् ।
शोधनो रोपणश्चैव विविधव्रणरोपणः ॥ ३० ॥

व्रणपूरणयोगेन नाडीव्रणनिषूदनः ।
भगन्दरहरश्चापि समाख्यातो विशेषतः ॥ ३१ ॥

*अथ हिङ्गुलाद्रससिन्दूरस्य निर्माणप्रकारः*

निम्बूकद्रवसंशुद्धं क्षालितञ्चाथ वारिणा ।
पलोन्मितं तु दरदं शुद्धं गन्धञ्च तत्समम् ॥ ३२ ॥
श्लक्ष्णचूर्णं ततः कृत्वा काचकुप्यां निधापयेत् ।
रसिन्दूरविधिना वालुकायन्त्रगं पचेत् ॥ ३३ ॥
स्वाङ्गशीतं ततो ज्ञात्वा जपाकुसुमसमप्रभम् ।
आहरेद्रससिन्दूरं रसागमविशारदः ॥ ३४ ॥

*अस्य गुणादिनिरूपणम्*

गुणा मात्राप्रभेदश्च प्रयोगश्चानुपानकम् ।
पथ्यापथ्यादिकञ्चापि रससिन्दूरवन्मतम् ॥ ३५ ॥

*श्रीसिद्धदरदामृतम्*

कर्षद्वयमितं खण्डं हिङ्गुलस्य समाहरेत् ।
भृशं कार्पासवस्त्रेण वेष्टयेत्परितो भिषक् ॥ ३६ ॥
निधापयेदम्बरीषे चुल्लिकाधिष्ठिते ततः ।
पलद्वयोन्मितं तत्र पलाण्डुस्वरसं क्षिपेत् ॥ ३७ ॥
रूपकञ्च वटक्षीरं ततोऽग्निं दीपयेद् भृशम् ।
शुष्के जलांशे चुल्लीतोऽम्बरीषमवतारयेत् ॥ ३८ ॥
स्वाङ्गशीतं ततो ज्ञात्वा रक्तखण्डं समाहरेत् ।
अम्बरीषं प्रमृज्याथ चुल्लिकायां निधापयेत् ॥ ३९ ॥
कर्षोन्मितं देवपुष्पचूर्णं तत्र प्रसारयेत् ।
ततो दरदखण्डञ्च निदध्याद् युक्तितो भिषक् ॥ ४० ॥
भल्लातकफलानाञ्च सार्द्धद्वादशकर्षकम् ।
स्तूपाकारतया तस्मिन् निदध्यात्परितो भिषक् ॥४१॥

देवपुष्पस्य चूर्णेन छिद्राण्यत्र प्रपूरयेत् ।
ततः प्रज्वालयेद्वह्निं रसतन्त्रविशारदः ॥ ४२ ॥
दग्धान् भल्लातकान् प्राज्ञो मध्यतश्चापसारयेत् ।
घृतं दशगुणं रक्तात् क्रमशो निक्षिपेत्ततः ॥ ४३ ॥
दग्धे चापि घृते प्राज्ञो हिङ्गुलं त्वनतारयेत् ।
कार्पासखण्डभस्माथ समृज्यापनयेद्भिषक् ॥ ४४ ॥
समर्पितोऽस्य सिद्धेभ्यो यतोऽस्य त्रिपुरद्विषा ।
अनेनेऽसौ ततः ख्यातः श्रीसिद्धदरदामृतः ॥ ४५ ॥

अथास्य गुणाः

ऊरुस्तम्भं त्वामवातं तथा पक्षवधाह्वयम् ।
शीताङ्गमन्नकश्चापि सन्निपातं सुदारुणम् ॥ ४६ ॥
प्लीहोदरं दीर्घकालजातं दोषत्रयोत्थितम् ।
क्लैव्यञ्च नाशयत्याशु श्रीसिद्धदरदामृतः ॥ ४७ ॥
वैशिष्ट्यादनुपानानां करोति विविधान् गुणान् ।
मात्रयोचितया दत्तो रोगसङ्घञ्च नाशयेत् ॥ ४८ ॥

अस्य मात्रा

गुञ्जार्धसमिता त्वस्य पूर्णमात्रा प्रशस्यते ।
बलानलादिकं वीक्ष्य ह्रासयेच्चाथ वर्द्धयेत् ॥ ४९ ॥

हिङ्गुलीयो माणिक्यरसः

निशोधितं हिङ्गुलञ्च तोलकाष्टकसंमितम् ।
सौगन्धिकञ्च तत्तुल्यं तथा शल्लपभूषणम् ॥ ५० ॥
पलाशपुष्पस्वरसैः पेषयेद्दिनसप्तकम् ।
शोषयित्वा रसञ्चाथ विदध्यात् श्लक्ष्णचूर्णकम् ॥ ५१ ॥
काचकुप्यां निधायाथ वालुकायन्त्रमध्यगम् ।
क्रमवृद्धयानलेनात्र पचेद्वै दिनमत्रयम् ॥ ५२ ॥

स्वतः शीत ततो ज्ञात्वा कूपिकाकण्ठसंस्थितम् ।
रसमिन्द्रमङ्काश माणिक्यरसमाहरेत् ॥ ५३ ॥

हिङ्गुलीयमाणिक्यरसस्य गुणाः

ग्रहणीगदवारणदर्पहरस्त्वतिसारनिवारणदक्षतरः ।
रुधिरोत्थितरोगविनाशकरो वलवीर्यशरीरसमृद्धिकरः ॥५४॥
क्षुद्रकुष्ठहरः कामं वयःस्थापनकारकः ।
माणिक्यरसमन्त्रोऽय सर्वामयहरो मतः ॥ ५५ ॥

अस्य मात्रा

यत्नेन तं समादाय यवत्रितयसम्मितम् ।
युञ्जीत रसमाणिक्य वलकालाद्यपेक्षया ॥ ५६ ॥

श्रीसिद्धहिङ्गुलेश्वरः

विशोधितं हिङ्गुलञ्च धत्तूरमूलजद्रवैः ।
विभावयेत्सप्तवार ततः संशोषयेद्बुधः ॥ ५७ ॥
तत्तुल्यं टङ्कणं क्षिप्त्वा श्लक्ष्णं चूर्णं प्रकल्पयेत् ।
रसज्ञैः कीर्तितो नाम्ना श्रीसिद्धहिङ्गुलेश्वरः ॥ ५८ ॥
विश्वमोचरसोपेतं पुरुहूतयवान्वितम् ।
गुञ्जार्द्धप्रमितं दद्याद्रसतन्त्रविशारदः ॥ ५९ ॥
ततोऽनुपाययेच्छीघ्रं धान्यशीतकषायकम् ।
दाहमूर्च्छापिपासादीन् नाशयेद्द्रुतमुपद्रवान् ॥ ६० ॥
पाचनो दीपनश्चाय नाडीगतिनियामकः ।
ज्वरघ्नः क्रिमिसंहारी कफघ्नो मृदुधारकः ॥ ६१ ॥
कोष्ठवातप्रशमनो भृशं वातानुलोमनः ।
नैतत्समो रसो लोके ज्वरातीसारनाशनः ॥ ६२ ॥

इति हिङ्गुलविज्ञानीयो नाम नवमस्तरङ्गः

# अथ अभ्रकविज्ञानीयो दशमस्तरङ्गः

अभ्रकस्य नामानि

अभ्रक गगन मृङ्गमभ्र व्योमाम्बर तथा ।
वज्र घनञ्च गिरिज बहुपत्रमनन्तकम् ॥ १ ॥
आकाशमम्बर शुभ्र त्वमल गरजध्वजम् ।
मेघाख्यमन्तरीक्षञ्च तदेव परिकीर्तितम् ॥ २ ॥

अभ्रकस्य चातुर्विध्यम्

अभ्र सितारुणश्यामपीतवर्णविभेदत' ।
चतुर्विध समाख्यात कृष्ण तत्र गदापहम् ॥ ३ ॥

कृष्णाभ्रकस्य भेदा

पिनाकनागमण्डूकवज्राह्वयविभेदत' ।
चतुर्विधन्तु कृष्णाभ्र मत रसविशारदैः ॥ ४ ॥

पिनाकाभ्रकस्य लक्षणम्

अग्नौ सन्तापित यत्तु दलानि परिमुञ्चति ।
रसतन्त्ररहस्यज्ञैस्तत्तु पिनाक प्रकीर्तितम् ॥ ५ ॥

तस्य दोषा

पिनाकाभ्र मल रुध्वा कुरुते मरण ध्रुवम् ।
कुष्ठादिकान्महारोगान् जनयत्यपि निश्चितम् ॥ ६ ॥

नागाभ्रकस्य लक्षणम्

पावकोत्तापित यत्तु फूत्कार परिमुञ्चति ।
क्रुद्धाहिश्वासवच्छीघ्र नागाभ्र तदिहोच्यते ॥ ७ ॥

तस्य दोषा

नागाभ्र सेवित कुर्यान्महाघोर भगन्दरम् ।
मण्डल वा महाकुष्ठ तद्द्वय वा न सशयः ॥ ८ ॥

मण्डूकाभ्रस्य लक्षणम्

अग्नौ ... [illegible] ... भेकवत्कुरुते रवम् ।

अभ्रकमारणे पुटसङ्ख्यानियमः

त्रिंशत्यादि शतान्तस्तु पुटो रोगनिवृत्तये ।
शतादिस्तु सहस्रान्तः प्रशस्तश्च रसायने ॥ २९ ॥

अभ्रकस्य प्रथमो मारणप्रकारः

धान्याभ्रकं समादाय कासमर्दभवैर्द्रवैः ।
दिनैकं पेषयित्वाथ चक्रिकाकारतां नयेत् ॥ ३० ॥
ततो गजपुटं दद्यात् दशवारं विधानतः ।
रविक्षीरैस्ततो दद्यात्तद्वदेव पुटानि तु ॥ ३१ ॥
एवं तु विंशतिपुटैरेवाभ्रस्य मृतिर्भवेत् ।
सिन्दूरसदृशं भस्म जायते नात्र संशयः ॥ ३२ ॥

द्वितीयो मारणप्रकारः

धान्याभ्रकं समादाय नागिनीदलजैर्द्रवैः ।
तद्वद्वासारसेनापि मीनाक्ष्या स्वरसेन च ॥ ३३ ॥
न्यग्रोधपयसा चापि तद्वदेव पुटेद्भिषक् ।
एवं विंशतिवारेण गगनं पञ्चतां व्रजेत् ॥ ३४ ॥

तृतीयो मारणप्रकारः

धान्याभ्रकं समादाय तण्डुलीयोद्भवैर्द्रवैः ।
दिनत्रयं पेषयित्वा ततश्च कृतचक्रिकम् ॥ ३५ ॥
पुटेद्गजपुटेनैव दशवारं प्रयत्नतः ।
ततः पुनर्वरानीरैस्तद्वदेव पुटेद्भिषक् ॥ ३६ ॥
वटशुङ्गकषायेण तद्वदेव पुटेत्तथा ।
एवं त्रिंशत्पुटैरेवं गगनस्य मृतिर्भवेत् ॥ ३७ ॥

चतुर्थो मारणप्रकारः

धान्याभ्रं पञ्चवारं प्रथममिह पुटेन्मुस्तकक्वाथयोगात् ।
रम्भानीरेण तद्वत्तदनु च सलिलैस्तण्डुलीयप्रसूतैः ॥ ३८ ॥
भृङ्गोत्थेनापि नीरा तदनु खलु वरानीरपूरेण पिष्ट्वा ।

दत्त्वा गन्धश्च तुल्यं सकृदिह पुटितो वारिदो याति मृत्युम् ३९

पञ्चमो मारणप्रकारः

धान्याभ्रकं समादाय रविक्षीरैर्विमर्दयेत् ।
रविमूलद्रवैर्वापि दिनमेकं निरन्तरम् ॥ ४० ॥
ततः संशोषयेद् घर्मे गगनं कृतचक्रिकम् ।
रविपत्रैश्च संवेष्ट्य सप्तवारं विधानतः ॥ ४१ ॥
पुटेद् गजपुटेनैव रसतन्त्रविशारदः ।
ततो न्यग्रोधमूलार्थैः क्वाथैर्दद्यात्पुटत्रयम् ॥ ४२ ॥
तद्वद्रम्भारसेनापि सप्तवारं पुटेद्भिषक् ।
एवं स्वल्पैः पुटैरेव गगनं मृतिमाप्नुयात् ॥ ४३ ॥

षष्ठो मारणप्रकारः

क्षीरत्रयं काकमाची गोक्षुरं खरमञ्जरी ।
वटप्ररोहो गोमूत्रं तुलसी कदलीशिफा ॥ ४४ ॥
एभिरभ्रं विमर्द्याथ दशवारं पृथक् पृथक् ।
पुटेत्पुटविधानज्ञः क्रमेणैव भिषग्वरः ॥ ४५ ॥
शतधा पुटनादेव रक्तोत्पलसमप्रभम् ।
निश्चन्द्रं जायते भस्म सर्वदोषविवर्जितम् ॥ ४६ ॥

सप्तमो मारणप्रकारः

धान्याभ्रकं समादाय पञ्चशगुडसंयुतम् ।
वर्धमानदलद्रावैर्मर्दयित्वा द्वियामकम् ॥ ४७ ॥
वेष्टयेद् वटपत्रैश्च गगनं कृतचक्रिकम् ।
ततः कार्पाससूत्रेण पत्रप्रान्तेषु रोधयेत् ॥ ४८ ॥
ततो गजपुटं दद्यात्सप्तवारं विधानतः ।
निश्चन्द्रिकं भवेद्भस्म गगनस्य न संशयः ॥ ४९ ॥

अष्टमो मारणप्रकारः

धान्याभ्रकं समादाय मूलिकाया द्रवैर्दृढम् ।

पेषयेद्दिनमेकन्तु द्विदिनम्वा भिषग्वरः ॥ ५० ॥
नेट्टयेद्वटपत्रैश्च गगनं कृतचक्रिकम् ।
एकविंशतिवाराणि पुटेदेवं प्रयत्नतः ॥ ५१ ॥
निश्चन्द्रिकं भवेद्भस्म निर्विकारं गुणोत्तरम् ।
एवं मृतं तु गगनं रोगसङ्के प्रयोजयेत् ॥ ५२ ॥

नवमो मारणप्रकारः

वटप्ररोहक्वाथेन धान्याभ्रं परिपेषितम् ।
एरण्डपत्रैरावेष्ट्य पुटयेत्कृतचक्रिकम् ॥ ५३ ॥
दशवारं पुटित्वैवं पुटेत्क्षुद्राकषायतः ।
वासया कलिङ्गस्य क्वाथेन च तथा पुटेत् ॥ ५४ ॥
चत्वारिंशत्पुटैरेव गगनं मृतिमाप्नुयात् ।
निश्चन्द्रिकं भवेद्भस्म क्षयकासादिनाशनम् ॥ ५५ ॥

मृताभ्रकस्य लक्षणम्

निश्चन्द्रश्चारुणं स्वच्छं सुसूक्ष्मं स्पर्शकोमलम् ।
अभ्रं मृतं विजानीयाद्रसतन्त्रविचक्षणः ॥ ५६ ॥

अभ्रकस्य मारको गणः

क्षीरत्रयं काकमाची मुस्ता घृतकुमारिका ।
वटप्ररोहो गोमूत्रं विल्वमूलदले वृषः ॥ ५७ ॥
फलत्रिकमजारक्तं कण्टकारी कदम्बकः ।
अग्निमन्थः शालिपर्णी श्रीपर्णी पाटली गुडः ॥ ५८ ॥
तिलपर्णी पृश्निपर्णी गोक्षुरः खरमञ्जरी ।
शुक्लसिद्धार्थको लोध्रः बृहती द्विलमाचिका ॥ ५९ ॥
धत्तूरः काममदश्च मातुलानी गुडूचिका ।
मारिषस्तुलसी दूर्वा वाजिगन्धा च तिक्तका ॥ ६० ॥
मण्डूकपर्णी मदनः पिण्डी तगरमेव च ।
शङ्खपुष्पी नागवल्ली घोण्टा श्वेतपुनर्नवा ॥ ६१ ॥

आखुपर्णी सप्तपर्ण रम्भाकन्दरसस्तथा ।
भृङ्गराजो देवदारु तालमूली च मालती ॥ ६२ ॥
अगस्त्यपत्र तालीश चित्रक जलकुम्भिका ।
दाडिमस्य दलञ्चैव तण्डुलीयकमेव च ॥ ६३ ॥
एरण्डमूलपत्राणि श्योनाको वस्त्ररञ्जनी ।
पालङ्क्या भद्रमुस्ता च मीनाक्षी कोकिलाक्षकः ॥ ६४ ॥
पूर्वाचार्यै कीर्तितोऽयमभ्रस्य मारको गण ।
यथारोग यथालाभ भेषजै पुटयेद् घनम् ॥ ६५ ॥

अभ्रकभस्मनो लोहितीकरणम्

गाङ्गेरुकी भद्रमुस्ता वटक्षीरन्तथैव च ।
वटमूलजलञ्चापि हरिद्राया द्रवस्तथा ॥ ६६ ॥
समङ्गाक्वथितञ्चैव घनमेभि सुपेषयेत् ।
पुटद्वय त्रयञ्चापि वितरेद्भिषजां नर ॥ ६७ ॥
निश्चन्द्रिकश्च मृदुल रक्तोत्पलदलप्रभम् ।
गगनस्य भवेद्भस्म ततः कार्येषु योजयेत् ॥ ६८ ॥

अभ्रकभस्मनोऽमृतीकरणम्

मारित त्रातियत्नेन दशभागिकमभ्रकम् ।
त्रिफलाक्वथित चैव नवं षोडशभागिकम् ॥ ६९ ॥
नागभागिकमुत्साज्य दत्त्वा लोहस्य भाजने ।
पाचनाज्जायते रम्यममृतीकरण वरम् ॥ ७० ॥

द्वितीय प्रकार

कन्याम्बुमेघगव्याज्यं कलादिकृतपनाशकम् ।
पचेन्मन्दानलेनैतदमृतीकरण वरम् ॥ ७१ ॥

तृतीय प्रकार

मृताभ्रमामितं गव्यमाज्यं दत्वाभ्रक पचेत् ।
अमृतीकृतमेवन्तु घनं कार्येषु योजयेत् ॥ ७२ ॥

मृताभ्रकस्य गुणा

अभ्रं स्निग्धं परमशिशिरं स्वादु चायुष्यमग्र्यं
केश्यं वर्ण्यं रुचिकरमलं दीपनं चातिबल्यम् ।
नेत्र्यं मेधां जनयतितरां स्तन्यमग्न्यर्द्धनञ्च
क्षेत्रे स्थैर्य्यं वितरति परं दीपनं पुष्पकेतो. ॥ ७३ ॥
क्षिप्रं घोरां दलयति महारोगसंघातभीतिं
स्वान्ते प्रीतिं जनयति परं नर्महासे च यूनो ।
देहे शक्तिं वितरतितरां ब्रह्मचर्य्यप्रदात्री
कायालस्यं हरति सुतरामभ्रकं सेव्यमानम् ॥ ७४ ॥

अथ अभ्रकस्य आमयिक प्रयोग

रससिन्दूरसंयुक्तं मृताभ्रं नाशयेज्ज्वरान् ।
सर्भौद्रं सकणञ्चापि जीर्णज्वरविनाशनम् ॥ ७५ ॥
सक्षौद्रं सतरं व्योम दृष्टिशक्तिकरं परम् ।
सव्योषं सघृतञ्चैतद् ग्रहणीं नाशयेत् क्षणात् ॥ ७६ ॥
हरीतकीगुडोपेतं शर्करैलासमन्वितम् ।
मृताभ्रं सेव्यमानन्तु रक्तपित्तहरं परम् ॥ ७७ ॥
सव्योषं ससरञ्चैव चातुर्जातकसंयुतम् ।
सक्षौद्रं क्षपयेदर्शः पाण्डुक्षयहलीमकान् ॥ ७८ ॥
मृताभ्रं रजनीयुक्तं कणया मधुनापि च ।
मासमेकं लिहेत्प्राज्ञो मेहरोगाद्विमुच्यते ॥ ७९ ॥
मृतकाञ्चनसंयुक्तं मृताभ्रं सासमेरितम् ।
धातुवृद्धिकरं पुंसां निशिपातक्षयनाशनम् ॥ ८० ॥
गुडूचीसत्वसंयुक्तं मेहवर्गप्रणाशनम् ।
तारस्वर्णयुतं त्वभ्रं शुक्रसन्तानकारकम् ॥ ८१ ॥
भूधात्रिकागोक्षुरचन्द्रशालामितान्वितं गव्यघृतेन लीढम् ।

समेव्यमान गगनं तु तूर्णं विनाशयेद् दारुणमूत्रकृच्छ्रम् ॥८२॥
क्षाराष्टकयुत त्वभ्र मूत्राघात विनाशयेत् ।
अश्मरी मूत्रकृच्छ्रश्च विशेषादग्निदीपनम् ॥ ८३ ॥
मूर्वाक्वाथसमायुक्त मृताभ्र व्रणनाशनम् ।
पयस्यागव्यदुग्धाभ्या परम बलवर्द्धनम् ॥ ८४ ॥
भल्लातकान्वित व्योम त्वर्शांसि क्षपयेद् ध्रुवम् ।
लवङ्गक्षौद्रसयुक्त धातुवृद्धिकर परम् ॥ ८५ ॥
विजयास्वरसोपेत जातीफलसमन्वितम् ।
मृताभ्र जुषता पुमा शुक्रस्तम्भ' प्रजायते ॥ ८६ ॥
विश्वभेषजकर्षाष्करान्वित
त्रिप्रयष्टितुरगीसमन्वितम् ।
सेवित ममधु मारिताभ्रक
नाशयेज्झटिति मारुतामयम् ॥ ८७ ॥
अभ्र कज्जलिकोपेतमर्जुनक्वाथभावितम् ।
क्रमिज श्लैष्मिक चापि विनिहन्ति हृदामयम् ॥ ८८ ॥
समित सचतुर्जात त्वभ्र पित्तामयापहम् ।
अथवा समित गव्यदुग्धेन परिशीलितम् ॥ ८६ ॥
पिप्पलीकट्फलक्षौद्रैर्मृताभ्र मासमेवितम् ।
अतिमात्र निहन्त्याशु सर्वानेव कफामयान ॥ ९० ॥

सत्वाना वैशिष्ट्यम्

योगेधूपरमादीना प्रयोगे सत्वयोजनम ।
गुणोत्तरं भवेद्यस्मात्तस्मान्सत्व विशिष्यते ॥ ९१ ॥

अभ्रकसत्वपातनस्य प्रथम प्रकार

पादाशमाभागयरज ममेत पिष्ट मुसल्या' स्वरसेन सार्द्धम् ।
कोष्ठयां निधायाभ्रकमत्र गाढ त्वाध्मापित मुञ्चति सत्वमच्छम्

द्वितीय सत्वपातनप्रकार

सत्त्वपर्येद्धनरजः खलु काकिकस्थ
पश्चात्तथैव खलु सूरणकन्दतोयैः ।
रम्भार्द्रकन्दजरसैरपि भावयित्वा
तुषांशटङ्कणकणाल्पकमीनयुक्तम् ॥ ९३ ॥
सम्मेल्य सरिममलङ्क्य विधाय पिण्डान्
कोष्ठ्या निधाय च तत प्रधमेद् दृढाग्नौ ।
अभ्र विमुञ्चति तता निजसत्त्वमाशु
प्राज्ञ प्रयागनिरतेषु नियोजयद्धि ॥ ९४ ॥

तृतीय सत्वपातनप्रकार

नामायाम्तण्डुलीयस्य कासमर्दस्य च द्रवैः ।
हमपादाथ मत्स्याक्ष्या काण्डवल्या द्रवैस्तथा ॥ ९५ ॥
पृथक् सम्पिष्य गगन घर्मे संशोषयेद्बुध ।
गोधूमचूर्णं सौभाग्य क्षुद्रमीनाश्च ते पृथक् ॥ ९६ ॥
वस्त्वगक त्रिनिक्षिप्य सम्यक् सम्पेषयेद्बुध ।
पश्चाज्ज पञ्चगव्य वा घर्मे दत्त्वा विशोषयेत् ॥ ९७ ॥
गोलकानथ निर्माय युक्तया सम्थापयेद्भिषक् ।
अध पातनकोष्ठ्यान्तु ध्मात्वा सत्व समाहरेत् ॥ ९८ ॥

अथ चतुर्थ सत्वपातनप्रकार

सौभाग्य दरधूपश्च गुड सर्जरसस्तथा ।
ऊर्णा लाक्षा च पिण्याक क्षुद्रमीनस्तथैव च ॥ ९९ ॥
छागीदुग्धेन सम्पष्य विदध्याद् गोलकान् भिषक् ।
स्थापयेद् वज्रमूषाया गगन कृतगोलकम् ॥ १०० ॥
काष्ठिकाया निधायाथ तीव्राग्नौ प्रधमेद् घनम् ।
अनेन विधिना सत्व द्रुतमेव प्रजायते ॥ १०१ ॥

अभ्रकसत्वस्य पिण्डीकरणम्

मित्रपञ्चकसंयुक्तं खसत्त्वं चूर्णसन्निभम् ।
मूषायां विनिधायाथ प्रधमेत्कोकिलानले ॥ १०२ ॥
इत्थं तीक्ष्णतरं ध्मातमेकतां याति कास्यवत् ।
पिण्डीभूतं ततः सत्त्वं शोधनार्थं प्रयोजयेत् ॥ १०३ ॥

अभ्रकसत्वस्य सामान्य शोधनम्

त्रिफलासलिले वापि वटमूलकषायतः ।
अम्लेन काञ्जिकेर्वापि खसत्वं शोधयेद्भिषक् ॥ १०४ ॥

विशेषशोधनम्

सत्त्वस्य गोलकं ध्मात्वा भृशं सन्तापयेद्बुधः ।
काञ्जिके चाथ निर्वाप्य लोहदण्डेन कुट्टयेत् ॥ १०५ ॥
पुनः पुनः सम्प्रताप्य यावदायाति चूर्णताम् ।
गोघृतेन त्रिधा वापि धात्रीनीरेण भर्जयेत् ॥ १०६ ॥
भर्जने भर्जने कार्यं खल्वे सत्त्वविमर्दनम् ।
ततः पुनर्नवानीरैः सिंहास्यस्वरसेन च ॥ १०७ ॥
काञ्जिकेनापि सम्मेल्य भृशं सम्पेषयेद्भिषक् ।
इत्थं विशोधितं व्योमसत्त्वं मारणसम्मतम् ॥ १०८ ॥

अभ्रकसत्वस्य मारणम्

विशोधितं व्योमसत्त्वं तदर्धं सूतगन्धकम् ।
निक्षिप्य मर्दयेत्खल्वे काचकूपीगतं ततः ॥ १०९ ॥
पचेत् वालुकायन्त्रे विधानज्ञो भिषग्वरः ।
इत्थं नातिचिरादेव खसत्वं याति पञ्चताम् ॥ ११० ॥

द्वितीयो मारणप्रकारः

द्वौ भागौ घनसत्वस्य भागश्च रसगन्धयोः ।
श्लक्ष्णपिष्टं ततः कृत्वा सम्प्रसार्य प्रयत्नतः ॥ १११ ॥
गोमयाग्नौ पचेत्प्राज्ञः खसत्त्वस्य मृतिर्भवेत् ।

एवं मृतं व्योमसत्वं वीतशङ्कः प्रयोजयेत् ॥ ११२ ॥

अभ्रसत्वस्य गुणाः

अभ्रसत्वं सुशिशिरं मधुरं रुचिरं परम् ।
सुस्निग्धं केश्यमायुष्यं त्रिदोषघ्नं रसायनम् ॥ ११३ ॥
प्रौढाङ्गना मदविघूर्णनचारुदक्ष
मिहोपमप्रचुरपुत्ररतं सुवृत्तं ।
लावण्यपूरपरिपूरितसक्तचन्द्रो
जीनेन्द्रतञ्च शरदां घनसत्वसङ्गी ॥ ११४ ॥
मृताभ्रसत्वादपरं भेषज्यं नास्ति पुष्टिदम् ।
विशेषात् पुंस्त्वजननं वयसः स्थापनन्तथा ॥ ११५ ॥
नास्त्यनेन समं लोके निर्विकारं गुणोत्तरम् ।
त्रिदोषघ्नञ्च भेषज्यं त्वन्यद् भेषज्यमण्डले ॥ ११६ ॥

अभ्रकसेविना वर्जनीयानि वस्तूनि

करीरं कारवेल्लञ्च कर्कटीं कोलमल्लकम् ।
तैलं क्षारञ्च वृन्ताकं नाश्नीयादभ्रसेवकः ॥ ११७ ॥

अभ्रकस्य प्रथमः कल्पः

मृताभ्रं व्योषसंयुक्तं विडङ्गामलकान्वितम् ।
केशराजरसेनेह सलिलैर्वा भिषग् ॥ ११८ ॥
यत्नेन सम्पेषयेत्प्राज्ञ गुटिकां कारयेत्ततः ।
छायायां शोषयित्वा च काचकुम्भे निधापयेत् ॥ ११९ ॥
एकैकां गुटिकां प्राज्ञः समश्नीयान्निरन्तरम् ।
मासषट्कं त्रिमासं वा नैष्ठवाचि कृतादरः ॥ १२० ॥
दिव्यदृष्टिर्दीर्घकायो दिनेशद्युतिदीप्तिमान् ।
दृढदन्तो भेत्रद्रूपे द्वितीय इव दर्पकः ॥ १२१ ॥
अन्त्रशोषं त्वस्थिशोषं शोषं यक्ष्माणमुल्बणम् ।

चिरोत्थितान् पञ्चकासान् सभेद श्वासमुद्धतम् ॥ १२२ ॥
अर्शांसि ग्रहणीं पाण्डु कामला कुम्भकामलाम् ।
कुष्ठान्यष्टादशात्यर्थं निहन्याद्दामवातकम् ॥ १२३ ॥
वातपित्तकफोद्भूतान् मृत्युकल्पानिहामयान् ।
सर्वानेव निहन्त्याशु वज्रकल्पोऽयमादिम. ॥ १२४ ॥

अभ्रकस्य द्वितीय कल्प

अभ्राय सूतनलय. दिगङ्कयुगदन्द्वमिताः ।
भावयेत्तु वरानीरै मसृणार निधानत' ॥ १२५ ॥
भृङ्गद्रावै. पृथक् तद्वत् शिग्रुतिक्ताग्निजैर्द्रवै ।
गुटिका कारयित्वा च स्थापयेत्काचभाजने ॥ १२६ ॥
कणया त्वथ जीर्णेन गुडेनापि समान्विताम् ।
एकैका गुटिका खादेदशेषानामयान् हरेत् ॥ १२७ ॥
षण्मासाज्जायते मर्त्यो भीमसेन इवापर. ।
प्रज्ञया गुरुमोदर्यश्चक्षुषा गरुडोपम ॥ १२८ ॥

इति अभ्रकविज्ञानीयो नाम दशमस्तरङ्ग

---

## अथ तालकादिविज्ञानीय एकादशस्तरङ्ग

अथ तालकस्य नामानि

हरिताल मत ताल तालक नटभूषणम् ।
नटमण्डनकञ्चापि मत शैलूषभूषणम् ॥ १ ॥
पिडालक चित्रगन्ध पिञ्जर वशपत्रकम् ।
आल पीतनकञ्चापि कथित मल्लगन्धजम् ॥ २ ॥
तालक जायते यस्मान्मल्लगन्धकमिश्रणात् ।
तस्माद्भिषग्वरैरेतन्मल्लगन्धजमुच्यते ॥ ३ ॥

तालकस्य द्वौ भेदौ

तालकं द्विविधं स्यात् रससिद्धैः पुरातनैः ।
प्रथमं पत्रतालं स्याद् द्वितीयं पिण्डतालकम् ॥ ४ ॥

पत्रतालकस्य स्वरूपम्

सुवर्णवर्णं निर्मलं गुरु चापि महोज्ज्वलम् ।
तनुपत्राचितं स्निग्धं मतं तत्पत्रतालकम् ॥ ५ ॥

पिण्डतालस्य स्वरूपम्

निष्प्रभं स्वल्पसत्त्वञ्च पत्रहीनं तथा लघु ।
विशेषतः पिण्डरूपं स्मृतं तत्पिण्डतालकम् ॥ ६ ॥

पत्रपिण्डतालयोर्वैशिष्ट्यम्

पत्रतालं त्रिदोषघ्नं कुष्ठरोगहरं परम् ।
वातरक्तप्रशमनं परमेतद्रसायनम् ॥ ७ ॥
पिण्डतालं समाख्यातं भृशं स्त्रीपुष्पहारकम् ।
पत्रतालात्स्वल्पगुणं विशेषाद्गेयमेव तत् ॥ ८ ॥

कृत्रिमतालस्य निर्माणप्रकारः

विशोधितं शङ्खविषं मरुत्सङ्ख्यकभागिकम् ।
तत्त्वभागिकमत्यच्छं गन्धकं निर्मलीकृतम् ॥ ९ ॥
खल्वे निक्षिप्य यत्नेन मेलयेत्तु शनैः शनैः ।
मिलितं तु ततो ज्ञात्वा विधानज्ञो भिषग्वरः ॥ १० ॥
पचेन्मन्दानलेनैतद् यन्त्रे डमरुकाभिधे ।
स्वाङ्गशीते ततश्चोर्ध्वमलग्नं तालकं हरेत् ॥ ११ ॥
विशुद्धमल्लगन्धाभ्यां तालकं यदि निर्मितम् ।
भिषग्वरस्तदा तालं नैवेह खलु शोधयेत् ॥ १२ ॥

अशोधिततालकस्य दोषाः

[ गीतिका ]

अविशोधितं तु तालं परिशीलितं प्रकामम् ।

जनयत्यनल्पदाहक्षोभप्रकम्पतोदान् ॥ १३ ॥
मलिनीकरोति गात्रं प्रकरोति कुष्ठभीतिम् ।
कमनीयतां प्रकामं विनिहन्ति कायजाताम् ॥ १४ ॥
अशुद्धं तालकं कुर्याद् रोगान् वातकफोद्भवान् ।
मृत्युशङ्काकरान् यस्माद् भिषक् तस्माद्विशोधयेत ॥ १५ ॥

### तालकशोधनस्य प्रथम प्रकार

[ गीतिका ]

सुविचूर्णितं तु तालं खलु पोट्टलीगृहस्थम् ।
नवनिम्बुकोत्थधारा विहितं दोलिकाख्ययन्त्रे ॥ १६ ॥
विपचेद्विधानविज्ञः सततं तु याममेकम् ।
गृहवारिणा च यामं विमलत्वमेति नूनम् ॥ १७ ॥
विधिना ह्यनेन यत्नाद्विमलीकृतं तु तालम् ।
विनियोजयेद्रसार्दौ नियतं तु वीतशङ्कः ॥ १८ ॥

### द्वितीय शोधनप्रकार

तालकं चूर्णयित्वा तु पोट्टल्यां विनिधाय च ।
दोलायन्त्रे पचेद्यामं कूष्माण्डसलिले भिषक् ॥ १९ ॥
यामैकं चूर्णतोयेन त्रैफलेन जलेन वा ।
इत्थं यामद्वयेनैव शुद्धिमायात्यनुत्तमाम् ॥ २० ॥

### तृतीय शोधनप्रकार

तालचूर्णन्तु पोट्टल्यां न्यस्य दोलागतं पचेत् ।
तिलक्षारजलेनैव याममात्रं भिषग्वरः ॥ २१ ॥
यामैकं स्वेदनादेवं तालं शुद्धिमवाप्नुयात् ।
इत्थं विशोधितं तालं वीतशङ्कः प्रयोजयेत् ॥ २२ ॥

चतुर्थ शोधनप्रकार

पोट्टल्या निहितं तालचूर्णं दोलागतं पचेत् ।
शाल्मलीमूलतोयेन याममेकं भिषग्वर ॥ २३ ॥
यामैकं स्वेदनादेवं तालकं शुद्धिमाप्नुयात् ।
अथवा तद्द्रवेणैव दिनसप्तकभावनात् ॥ २४ ॥

पञ्चम शोधनप्रकार

चूर्णाकृतं पत्रतालं चूर्णनीरेण भावयेत् ।
सप्तवारं प्रयत्नेन शुद्धिमायात्यनुत्तमाम् ॥ २५ ॥

तालस्य मारणस्य प्रथम प्रकार

निर्मलं तालमादाय भिषक् पौनर्नवे रसे ।
दिनैकं खल्वयन्त्रे च पेषयित्वाऽथ शोषयेत् ॥ २६ ॥
घनीभूतं ततो ज्ञात्वा चक्रिकां कारयेद्भिषक् ।
सम्यक् तां शोषयित्वा च भस्मयन्त्रेण वै पचेत् ॥ २७ ॥
क्षारैः पौनर्नवैश्चात्र स्थाल्यर्द्धं परिपूरयेत् ।
निधाय चक्रिकाश्चाथ क्षारैस्तैरेव पूरयेत् ॥ २८ ॥
वह्निं प्रदापयेत्तत्र बलाद्धिधानतो निरन्तरम् ।
मल्लगन्धनमेवेन्तु म्रियते नात्र संशय ॥ २९ ॥

द्वितीयो मारणप्रकार

निर्मलं हरितालन्तु पञ्चतोलकसंमितम् ।
पिप्पलत्वक्कषायेण वस्त्रपूतेन भावयेत् ॥ ३० ॥
एकविंशतिवाराणि कुर्यादेवं प्रयत्नत ।
चक्रिकां कारयित्वा च भस्मयन्त्रेण पाचयेत् ॥ ३१ ॥
पिप्पलत्वग्भवेनात्र वस्त्रपूतेन भस्मना ।
स्थाल्यार्द्धं पूरयित्वा च चक्रिकां स्थापयेद्भिषक् ॥ ३२ ॥
तेनैव भस्मना चाथ शेषं भागं प्रपूरयेत् ।
स्थालीं चुल्यां निधायाथ पचेद्यामचतुष्टयम् ॥ ३३ ॥

मल्लगन्धजमेरन्तु मृतिमाप्नोति निश्चितम् ।
एवं मृतं तालकन्तु वीतशङ्कः प्रयोजयेत् ॥ ३४ ॥

तृतीयो मारणप्रकारः

निर्मलं हरितालन्तु पञ्चतोलकसम्मितम् ।
अर्कक्षीरे दशगुणे पेषयेद्भिषजां वरः ॥ ३५ ॥
चक्रिकां कारयित्वा च शोषयेदातपे पुनः ।
भस्मयन्त्रेण मतिमान् पचेद्युक्तिपुरःसरम् ॥ ३६ ॥
पलाशभस्मना चात्र वस्त्रपूतेन पूरयेत् ।
स्थाल्यर्द्धञ्च ततो मध्ये चक्रिकां स्थापयेद्भिषक् ॥ ३७ ॥
भस्मना चाथ तेनैव भागं शेषं प्रपूरयेत् ।
यामद्वयं पचेद्धीमान् श्वेतं भस्म समाहरेत् ॥ ३८ ॥

चतुर्थो मारणप्रकारः

निर्मलं पत्रतालन्तु तत्तुल्या मृतशुक्तिका ।
खल्वे सम्पेषयेद्याम कुमारीस्वरसेन वै ॥ ३९ ॥
निर्माय चक्रिकां तस्य शोषयेदातपे भिषक् ।
शरावसम्पुटे न्यस्य ततो गजपुटे पचेत् ॥ ४० ॥
स्वाङ्गशीतं ततो ज्ञात्वा भस्म निश्चन्द्रिकं हरेत् ।
इत्थं मृतं तालकन्तु कुष्ठरोगहरं परम् ॥ ४१ ॥

पञ्चमो मारणप्रकारः

निर्मलं पत्रतालन्तु त्रिवारं भावयेद्भिषक् ।
पलाशमूलजैः क्वाथैर्घनीभूतैर्विधानतः ॥ ४२ ॥
माहिषेण च मूत्रेण भावयेच्च ततः परम् ।
कपोताख्यपुटैनैव पचेत्तालं भिषग्वरः ॥ ४३ ॥
एवं पुटैर्द्वादशभिस्तालकं मृतिमाप्नुयात् ।
इत्थं मृतं तालकन्तु वीतशङ्कः प्रयोजयेत् ॥ ४४ ॥

षष्ठो मारणप्रकार

विमल पत्रतालन्तु कन्यकाद्भिर्निमर्दयेत् ।
चक्रिका कारयित्वा च शोषयेदातपे भिषक् ॥ ४५ ॥
निधाय गोमये गर्त तस्मिन् डिण्डीरचूर्णकम् ।
तालोन्मित तु विन्यस्य चक्रिका स्थापयेत्तत' ॥ ४६ ॥
पुनस्तेनैव चूर्णेन सम्यगाच्छाद्य चक्रिकाम् ।
पुटेन्महापुटेनैव भूमौ गर्तेऽथवा भिषक् ॥ ४७ ॥
स्वाङ्गशीत ततो ज्ञात्वा गोमयान्यपसारयेत् ।
शरदिन्दुनिभ पश्चान्मृत ताल समाहरेत् ॥ ४८ ॥
ताल सञ्चूर्ण्य खल्वे च काचकुप्या तु विन्यसेत् ।
इत्थ मृत तालकन्तु नाशयेद्विषमज्वरम ॥ ४९ ॥
तण्डुलैकमित दद्यादेकवार तु वासरे ।
श्रीमन्नरेन्द्रनाथाख्यै गुरुवर्यमहोदयै ॥ ५० ॥
आविष्कृतोऽनुभूतश्च सुगमोऽय विधिर्वर ।
प्रकाशित खलु मया लोकानुग्रहकाम्यया ॥ ५१ ॥

मृततालकस्य गुणा

मृत ताल हरेद् घोर फिरङ्ग सुचिरोत्थितम् ।
वातरक्त विसर्पश्च विपादीश्च विचर्चिकाम् ॥ ५२ ॥
विविधानि च कुष्ठानि ह्यर्शांसि विषमज्वरम् ।
रोग फिरङ्गज हन्यादपस्मार भगन्दरम् ॥ ५३ ॥
व्रण नाडीव्रणञ्चापि विस्फोटमतिदारुणम् ।
वातरक्तभवान् रोगानन्यानपि हरेद्ध्रुवम् ॥ ५४ ॥

शुद्धतालकस्य गुणा

विमल तालक स्निग्ध भूतज्वरविनाशनम् ।
त्वच्य कुष्ठादिशमन कथित च रसायनम् ॥ ५५ ॥

हरितालस्य मात्रा

पादांशतो रक्तिकाया रक्तिकार्द्धमितं परम् ।
निर्मलं च मृतं तालं प्रयुञ्जीत भिषग्वरः ॥ ५६ ॥

मृततालकस्य परीक्षणम्

काचपात्रे क्षिपेत्तोयं लवणद्रावकान्वितम् ।
तस्मिञ्जले तु गुञ्जैकं मृतं तालं विनिक्षिपेत् ॥ ५७ ॥
सन्तापयेत्ततस्तोयं विधानज्ञो भिषग्वरः ।
पीतवर्णं यदा चूर्णं पतनं पात्रतलं विशेत् ॥ ५८ ॥
मृतं तालकमेवेदं जानीयात्तु तदा भिषक् ।
अन्यथाऽन्यस्य धात्वादेर्भस्मेदमिति निर्दिशेत् ॥ ५९ ॥

अथ तालकस्य आमयिकः प्रयोगः

नासाया कण्टकार्या वा रसेन परिशीलितम् ।
तालकं नाशयेत्कासं श्वासं परमदारुणम् ॥ ६० ॥
आम्रगन्धहरिद्राया स्वरसेन च शीलितम् ।
सर्वरक्तविकाराणां तालकं परमौषधम् ॥ ६१ ॥
वचाजीरकचूर्णाभ्यामपस्मारहरं परम् ।
पञ्चतिक्तकषायेण कुष्ठरोगं विनाशयेत् ॥ ६२ ॥
देवदारुद्रवेणेह तालकं परिशीलितम् ।
वातरक्तकृतान् रोगान् सर्वानेव विनाशयेत् ॥ ६३ ॥
वन्ध्याकर्कोटकीद्रावैर्विसर्पं दारुणं हरेत् ।
कुमारीस्वरसेनेह त्वग्रोगानाशु नाशयेत् ॥ ६४ ॥
चेतकीचूर्णयोगेन हरेदर्शांसि सत्वरम् ।
हरिद्रास्वरसेनाशु पाण्डुरोगं विनाशयेत् ॥ ६५ ॥
गुडूचीसत्त्वसंयुक्तं तालं वातास्रनाशनम् ।
ताम्बूलेन क्षयं हन्यात्प्रमेहं सुरमार्रमः ॥ ६६ ॥
अजामूत्रेण संयुक्तं हरेत्तूर्णं जलोदरम् ।

पिप्पलीमधुसंयुक्तं वह्निमान्द्यं विनाशयेत् ॥ ६७ ॥
मरीचकज्जलीयुतं विपाचितं च तालकम् ।
समं विमर्द्य वारिणा वटी तु गुञ्जसम्मिता ॥ ६८ ॥
कृता निषेविता ततः प्रलापमोहसंयुतम् ।
निहन्ति दुर्जलज्वरं ज्वरं च सान्निपातिकम् ॥ ६९ ॥
समतुल्यशङ्खतालकं यथोत्तरं विवर्द्धितम् ।
सहारसेन पेषितं विपाचितं विधानतः ॥ ७० ॥
यवोन्मितं तु सेवितं यथानुपानयोगतः ।
निहन्ति दुर्जलज्वरं ज्वरं च भूतसङ्गजम् ॥ ७१ ॥
समताम्रकज्जलीयुतं तु तालकं विशोधितम् ।
विभाव्य निम्बवारिणा नवेन चन्द्रवारकम् ॥ ७२ ॥
निषेवितं तु गुञ्जकं ज्वरस्य यामपूर्वकम् ।
निहन्ति भूतसङ्गजं ज्वरं परं सुदारुणम् ॥ ७३ ॥
नरसादरचूर्णेन तालकं परिपेषितम् ।
लेपेन नाशयत्येव श्वित्रिकाणि सुदारुणाम् ॥ ७४ ॥
लवङ्गचोचकर्पूरसंयुक्तं शुक्रमेहहृत् ।
जातिपत्रीकुङ्कुमाभ्यां प्रतिश्यायं व्यपोहति ॥ ७५ ॥
अपामार्गशिफाक्षारयुतं तु हरितालकम् ।
प्रलिप्तं चिरसञ्जातं हन्ति लिङ्गार्शसं द्रुतम् ॥ ७६ ॥
सत्त्वोपेतां तालं तु वातशूलहरं परम् ।
जातीफलसमायुक्तं बलवृद्धिकरं मतम् ॥ ७७ ॥

तालकाद्यमरहर

सिक्थतैलं तु विमलं विंशत्तोलकसम्मितम् ।
द्वितोलकमितं तालं कूष्माण्डद्रवशोधितम् ॥ ७८ ॥
श्लक्ष्णपिष्टा कज्जलिका निशा खादिरसारकम् ।

गैरिक गिरिसिन्दूर पृथक् तोलकसमितम् ॥ ७९ ॥
मनःशिला च निमला तोलकार्द्धमिता तथा ।
सम्मेल्य खल्ले यत्नेन काचकुप्या तु विन्यसेत् ॥ ८० ॥
मतो मलहरोऽस्य तु तालकोदयसञ्ज्ञकः ।
नानादोपसमुद्भूतव्रणवर्गनिषूदनः ॥ ८१ ॥
निचर्चिकादद्रुकुष्ठपामानिस्फोटनाशनः ।
नाडीव्रणहरश्चैव समाख्यातो विशेषतः ॥ ८२ ॥

प्रथम रसमाणिक्यम्

द्विकर्ष पत्रतालन्तु कूष्माण्डसलिलेन वै ।
विभावयेत्सप्तवार त्रिवार वा विधानत ॥ ८३ ॥
ततो दध्नाऽथवाम्लेन तथैव तु विभावयेत् ।
प्रक्षालयेत्ततस्तोयै प्रतप्तैस्तु भिषग्वर ॥ ८४ ॥
मध्येऽभ्रपत्रयोर्न्यस्य शरावे विन्यसेद्भिषक् ।
शरावेणापरेणेह छादयेद्यत्नतः पुन' ॥ ८५ ॥
बदरीपत्रकल्केन विदध्यात्सन्धिलेपनम् ।
आतपे चाथ सशोष्य वालुकायन्त्रग पचेत् ॥ ८६ ॥
मध्यमेनाग्निना यत्नात् होरात्रितयसमितम् ।
स्वाङ्गशीत समुद्धृत्य माणिक्याभ हरेद्रसम् ॥ ८७ ॥
मात्रा रक्तिद्वयमिता रसो माणिक्यसञ्ज्ञित. ।
वातरक्त हरेद् घोर फिरङ्गञ्चातिदारुणम् ॥ ८८ ॥
विविधानि च कुष्ठानि तथा नाडीव्रण हरेत् ।
नासाम्यप्रभवान् रोगान् नाशयेन्नात्र सशय. ॥ ८९ ॥

द्वितीय रसमाणिक्यम्

विमल पत्रतालन्तु द्रवै' कूष्माण्डसम्भवै ।
विभावयेत्सप्तवार दध्ना चाम्लेन वा तथा ॥ ९० ॥

प्रक्षाल्य तप्ततोयेन यत्नतश्चूर्णयेद्भिषक् ।
माषद्वयोन्मितं तालं न्यसेन्मध्येऽभ्रपत्रयोः ॥ ९१ ॥
अङ्गाराग्नौ निधायाथ भस्त्रानालेन धुक्षयेत् ।
माणिक्याभं भवेद्यावत् पचेत्तावत्प्रयत्नतः ॥ ९२ ॥
अङ्गारानपसार्याथ रसमाणिक्यमुद्धरेत् ।
वारं वारं ततश्चैव कृत्वा माणिक्यमाहरेत् ॥ ९३ ॥

तालकसत्त्वपातनस्य प्रथमः प्रकारः

तालं पलद्वयमितं सौभाग्यं तत्समं हरेत् ।
भावयेन्मेषिकादुग्धैः कूष्माण्डसलिलैस्ततः ॥ ९४ ॥
कुमारीस्वरसेनाथ निम्बूकस्य द्रवेण च ।
ततः समन्तदुग्धाया पयसा तु विभावयेत् ॥ ९५ ॥
विभाव्य च रविक्षीरैः रुबुतैलेन पेषयेत् ।
मध्वाज्येनापि सम्पेष्य वटकान् कारयेत्ततः ॥ ९६ ॥
काचकुप्यां निधायाथ वालुकायन्त्रमध्यगम् ।
मन्दाग्निना नियतं पचेद्दिनचतुष्टयम् ॥ ९७ ॥
स्वतःशीतं समुद्धृत्य विमलं कुलिशप्रभम् ।
ऊर्ध्वलग्नं तालसत्त्वं कूपीं भित्त्वा समाहरेत् ॥ ९८ ॥

द्वितीयः सत्त्वपातनप्रकारः

कूष्माण्डरससंशुद्धं तालं पलचतुष्टयम् ।
कुमारीस्वरसेनेह भावयेद्दिनसप्तकम् ॥ ९९ ॥
आतपे त्वथ संशोष्य चूर्णयेद्भिषजां वरः ।
काचकुप्यां निधायाथ वालुकायन्त्रगं पचेत् ॥ १०० ॥
दिनानि सप्त नियतं विधानज्ञो भिषग्वरः ।
ऊर्ध्वलग्नं तालसत्त्वं पीताभं तु समाहरेत् ॥ १०१ ॥
भागोऽष्टमस्तु गुञ्जाया प्रयोक्तव्यो विधानतः ।
कुष्ठादौ योजयेद्धीमान् श्वित्रकुष्ठे विशेषतः ॥ १०२ ॥

तालकविकारे भैषज्यम्

ससितं जीरकक्षोदं कूष्माण्डस्वरसन्तु वा ।
अश्नीयात्तालविकृतौ त्रिवारं त्वेकवासरे ॥ १०३ ॥

### अथ मनःशिलाया नामानि

मनःशिला रोगशिला शिला नैपालिका तथा ।
मनोगुप्ता मनोज्ञा च मनोह्वा नागजिह्विका ॥ १०४ ॥
कुनटी कुलटी गोला नागमाता च सा मता ।
कल्याणिका च सैनेह कथिता रसनेत्रिका ॥ १०५ ॥

शोधनोचितमनःशिलायाः स्वरूपम्

मनःशिला शिलाखण्डशून्या रक्तोत्पलप्रभा ।
भारे गुरुतरा दीप्ता शोधनार्हा मता बुधैः ॥ १०६ ॥

अशोधितमनःशिलाया दोषाः

मनःशिला त्वशोधिता प्रमादतस्तु शीलिता ।
हरेद्बलं हि, चारुता विनश्यतीह त्वग्गता ॥ १०७ ॥
अशोधिता रोगशिला मलविष्टम्भकारिणी ।
मूत्ररोधकरी कामं मूत्रकृच्छ्रप्रवर्तिनी ॥ १०८ ॥

मनःशिलायाः प्रथमः शोधनप्रकारः

सुधोदके निपातिता मनःशिला तु चूर्णिता ।
दिनत्रयाद्विनिर्गता भवेत्तु दोषवर्जिता ॥ १०९ ॥

द्वितीयः शोधनप्रकारः

भृङ्गराजरसेनेह दोलायन्त्रे निपाचिता ।
चतुर्यामं रोगशिला शुद्धिमायात्यनुत्तमाम् ॥ ११० ॥

तृतीयः शोधनप्रकारः

बीजपूररसेनेह भाविता तु मनःशिला ।
सप्तवारं विधानेन विशुध्यति न संशयः ॥ १११ ॥

चतुर्थः शोधनप्रकारः

जयन्तीस्वरसेनेह दोलायन्त्रे विपाचिता ।
चतुर्याम विधानेन विशुध्यति मनःशिला ॥ ११२ ॥

पञ्चम शोधनप्रकार

अगस्त्यपत्रस्वरसैर्भावयेत्सप्तवारकम् ।
मनःशिला प्रयत्नेन, शुद्धिमायात्यनुत्तमाम् ॥ ११३ ॥

षष्ठ शोधनप्रकार

आर्द्रकस्वरसेनेह मनोगुप्ता तु भावयेत् ।
सप्तवार विधानेन शुद्धिमाप्नोति सर्वथा ॥ ११४ ॥

अथ मनःशिलाया गुणा

मनःशिला कटुस्तिक्ता स्निग्धोष्णा लेखनी गुरु ।
कासश्वासहरा ग्राम भूतोपद्रवनाशिनी ॥ ११५ ॥
अग्निमान्द्यभयानाहहन्त्री कण्डूतिनाशिनी ।
रसायनी ज्वरहरा वर्ण्या काम विषापहा ॥ ११६ ॥

विशुद्धमनःशिलाया मात्रा

अशाशत समारभ्य कलाशप्रमिता शिलाम् ।
प्राणाचार्य प्रयुञ्जीत बलकालाद्यपेक्षया ॥ ११७ ॥

मनःशिलाया आमयिक प्रयोग

वासकस्वरसोपेता यूषणक्षौद्रसयुता ।
मनःशिला शीलिता तु काम श्वास व्यपोहति ॥ ११८ ॥
पिप्पलीमरिचोपेता वारिणाञ्जनयोगत ।
नैपालिका तु नियत नाशयेद्विषमज्वरान् ॥ ११९ ॥
वैदेही निम्बबीजोत्थचूर्णोपेता मनःशिला ।
कारवेल्लीरसेर्लीढा त्रिदोषज्वरहारिणी ॥ १२० ॥
सैन्धवमरिचमनोह्वाशङ्खै क्रमवृद्धभागसमिश्रै ।
अपनयतीह निकाम नेत्रगदान् विधिवदुपयुक्ता ॥ १२१ ॥

रसाञ्जनान्विता शिला कपोतगूथसयुता ।
शिलासुपेपिताञ्जनाच्चपस्मृतिं विनाशयेत् ॥ १२२ ॥
रजनीद्वयमञ्जिष्ठाक्षारक्षोदान्विता शिला ।
घृतक्षौद्र॰ प्रलेपात्तु वर्ण्या त्वग्दोषनाशिनी ॥ १२३ ॥
पिप्पलीनागरोपेता कपित्थरससयुता ।
लाजान्विता तु मधुना लीढा छर्दिं विनाशयेत् ॥ १२४ ॥

अशुद्धमन शिलाविकारे भेषज्यम्

शिलाविकारोपहत' पिबेत्क्षीर दिनत्रयम् ।
मधुना पथ्यसयुक्तो वान्त्यादिभ्यो विमुच्यते ॥ १२५ ॥

मन शिलाया निर्माणप्रकार

निशोधित शङ्खविप मरुद्भागमित तथा ।
विशुद्ध गन्धपाषाण कलाभागिकमाहरेत् ॥ १२६ ॥
खल्वे निक्षिप्य यतेन चूर्णयेद्द्विपजा वर ।
चूर्णितश्चाथ विज्ञाय यन्त्रे डमरुकाभिधे ॥ १२७ ॥
पचेत्तत स्वत शीतं कुनटीमूर्ध्वगां हरेत् ।
प्रयोजयेद्विधानेन मात्रा सर्षपसमिता ॥ १२८ ॥

मन शिलाया सत्वपातनम्

गुडगुग्गुलुकिट्टाज्यैस्त्वष्टमाशेन वै पृथक् ।
शिला मूषागता कोष्ठया ध्माता सत्व विमुञ्चति ॥ १२९ ॥

अथ शङ्खविषस्य नामानि

शङ्खमूष शङ्खविष गौरीपाषाणक तथा ।
दारुमूष दारुमूषा दारुमोचश्च मल्लकः । १३० ॥
फेनाश्मभस्मसज्ञश्च सोमल सम्बल तथा ।
आखुपाषाणक चैव रसज्ञै परिकीर्तितम् ॥ १३१ ॥

शङ्खविषस्य द्वैविध्यम्

मल्लन्तु द्विविध प्रोक्त श्वेतोऽन्यो रक्तकस्तथा ।

कृत्रिमं श्वेतमाख्यन्तु रसकाशास्त्रमण्डनः ॥ १३२ ॥

अथ शङ्खविषस्य शोधनम्

गुञ्जार्धितं शङ्खविषं दृढं वस्त्रेण वेष्टयन् ।
मेघनादरसेनैव दोलायन्त्रे विपाचयेत् ॥ १३३ ॥
शुद्धमिना दिनैपन्तु शुद्धिमायात्यनुत्तमाम् ।
इत्थं विशोधितं शङ्खविषं यत्नेन योजयेत् ॥ १३४ ॥

मतान्तरेण शोधनस्य द्वितीयः प्रकारः

माष्यूर्णं क्षारजलैर्दोलायन्त्रे विपाचयेत् ।
दिनैकन्तु विधानज्ञो मल्लः शुद्धिमवाप्नुयात् ॥ १३५ ॥

तृतीयः शोधनप्रकारः

कारवेल्लीरसेनेह दोलायन्त्रे द्वियामकम् ।
विपाचितं शङ्खविषं शुद्धिमायात्यनुत्तमाम् ॥ १३६ ॥

चतुर्थः शोधनप्रकारः

विपाचितं शङ्खविषं यवतण्डुलाम्भसा ।
गव्यदुग्धेन वा याम शुद्धिमायात्यनुत्तमाम् ॥ १३७ ॥

विशुद्धमल्लस्य गुणाः

गौरीपाषाणकः स्निग्धो दोषघ्नो रसबन्धकृत् ।
कफवातामयहरः श्वित्रकादिविषप्रणुत् ॥ १३८ ॥
मासमात्रप्रयोगेण श्वासं परमदारुणम् ।
विविधानि च कुष्ठानि नाशयेन्नात्र संशयः ॥ १३९ ॥
श्लीपदोत्थज्वरध्वंसी प्रकामं कामवर्धनः ।
सन्धिवातगदद्वेषी फिरङ्गकरिकेशरी ॥ १४० ॥
अग्निमान्द्यहरः कामं विषमज्वरनाशनः ।
कान्तिप्रदः परं जीर्णपाण्डुरोगनिषूदनः ॥ १४१ ॥
श्वासं प्रतमकं हन्ति चिरोत्थं त्वतिदारुणम् ।
द्रुतमारम्भवेलाया यक्ष्माणमपि नाशयेत् ॥ १४२ ॥

हृच्छूलज ज्वरोत्थञ्च हृद्दौर्बल्यं द्रुत हरेत् ।
अतीसार निहन्त्याशु भुक्तमात्रसमुत्थितम् ॥ १४३ ॥
मल्लो नाह्यप्रयोगेण क्षारकर्मकरः परम् ।
शोथमन्तापशैथिल्यकरश्च परिकीर्तित. ॥ १४४ ॥

शङ्खविषस्य मात्रानिरूपणम

खनेत्रेन्दुमिताद् भागाद् रक्तेरारभ्य यत्नतः ।
खवह्निभागप्रमित शङ्खमूप नियोजयेत् ॥ १४५ ॥

अन्य प्रकार

आरभ्य दशमाशात्तु सर्पपस्य प्रयत्नत ।
तृतीयभागपर्यन्तं मात्रा मल्लस्य योजयेत् ॥ १४६ ॥

शङ्खविषस्य मात्रानिर्माणविधि

गुञ्जोन्मित शङ्खविष तिथिमापकसमिते ।
मरीचचूर्णे निक्षिप्य भृङ्गनेराम्भसा ततः ॥ १४७ ॥
खल्वमध्ये निधायाथ मर्दयेत्तु दिनत्रयम् ।
निर्मापयेत्ततो युक्त्या वटिका रक्तिकोन्मिताः ॥ १४८ ॥
एकैका वटिकाश्चाथ सायम्प्रातस्ततो भिषक् ।
वीतशङ्क प्रयुञ्जीत तत्तद्दोपापनुत्तये ॥ १४९ ॥
अनेनैव तु मानेन प्रयोगोद्दिष्टभेषजै. ।
एतत्सम्मेल्य निर्माय वटिकादीन् प्रयोजयेत् ॥ १५० ॥

मात्रानिर्माणे सावधानता

रक्तसमितमल्लस्य भक्षणात् पुरुषो यतः ।
यमालय प्रयातीह सावधानतया तत' ॥ १५१ ॥
देशकालादिक वीक्ष्य रोगिणश्च बलाबलम् ।
मात्रा प्रकल्पयेद्धीरो रसायनचिकित्सकः ॥ १५२ ॥

शङ्खविषस्य आमयिक प्रयोग

वासासत्वेन वा व्याघ्रीचूर्णेन परिशीलित' ।

मल्लश्चिरोत्थितश्चातिदारुणं श्वासमुद्धरेत् ॥ १५३ ॥
पञ्चतिक्तस्य सत्वेन चूर्णेनाप्यथवाशितः ।
मल्लो विनाशयत्याशु कुष्ठानि विविधानि तु ॥ १५४ ॥
गुडूच्यर्कशिफाचूर्णैर्यत्नतः परिशीलितः ।
मल्लः सुनिर्मलस्तूर्णं निहन्ति श्लीपदज्वरम् ॥ १५५ ॥
करञ्जबीजचूर्णेन मेलितो सम्बलोऽमलः ।
शीतज्वरं निहन्त्याशु दिनैकेन न संशयः ॥ १५६ ॥
शुण्ठीपुनर्नवाचूर्णमल्लाभ्निदिनसेवनात् ।
आमवातं हरेद्रोगं ज्वरञ्चापि तदुद्भवम् ॥ १५७ ॥
विशोधितं शङ्खविषं सलोहं परिशीलितम् ।
नाशयत्यचिरादेव पाण्डुरोगं चिरोत्थितम् ॥ १५८ ॥
जातिपत्रीलवङ्गाभ्यां मल्लः समेमितोऽमलः ।
नाशयत्याशु नियतं फिरङ्गमतिदारुणम् ॥ १५९ ॥
रसमिन्द्रलोहाभ्यां यक्ष्माणं नाशयेद् ध्रुवम् ।
शङ्खिनीचूर्णसंयुक्तं हृद्दौर्बल्यं विनाशयेत् ॥ १६० ॥
शुण्ठीमरिचचूर्णेन श्वेतमल्लो निषेवितः ।
शुक्तमामसमुद्भूतमतीसारं विनाशयेत् ॥ १६१ ॥
जलेन लेपयेद्यत्नात् मल्लं वृश्चिकदंशने ।
नाशयेद् घटिकार्धेन वृश्चिकार्तिं सुदारुणाम् ॥ १६२ ॥

अथ शङ्खविषादयरसः

गुञ्जोन्मितं शङ्खविषं यत्नतो निर्मलीकृतम् ।
मरिचं रससिन्दूरं पृथक् माषत्रयोन्मितम् ॥ १६३ ॥
स्वर्णबीजं कणा शुण्ठी पृथक् माषद्वयोन्मितम् ।
आदाय खल्वे समर्द्य त्रिदिनं निम्बुकाम्बुना ॥ १६४ ॥
निर्मापयेद्बिनाम्बश्च वटिका रक्तिकोन्मिता ।

एकैका वटिकां दद्याद् द्विवारं दिवसे भिषक् ॥ १६५ ॥
नामतस्तु समाख्यातो रसः शङ्खविषोदयः ।
भूतज्वरहरः काम सन्निपातकुलान्तकः ॥ १६६ ॥

अथ चण्डेश्वरो रसः

गुञ्जोन्मित शङ्खविष यत्नतो विमलीकृतम् ।
अमृत सुमृत ताम्र पृथक् माषद्वयोन्मितम् ॥ १६७ ॥
श्लक्ष्णपिष्टा कज्जलिका कलामापकसमिता ।
भावयेत्सप्तवार तु शृङ्गवेरोत्थवारिणा ॥ १६८ ॥
निर्गुण्डीस्वरसेनाथ तथैव खलु भावयेत् ।
निर्मापयेन्निजान्वक्ष वटिका रक्तिकोन्मिताः ॥ १६९ ॥
रसज्ञैः कीर्तितोऽय तु नाम्ना चण्डेश्वरो रसः ।
विशेषतः समाख्यातो विविधज्वरनाशन. ॥ १७० ॥

अथ सुराष्ट्रजाया नामानि

सौराष्ट्रदेशसम्भूता मृत्तिका तुवरी मता ।
सुराष्ट्रजा च सौराष्ट्री सैव सौराष्ट्रमृत्तिका ॥ १७१ ॥

अथ स्फटिकारिकाया नामानि

स्फटिकारिः स्फुटी चैव स्फटिका स्फटिकारिका ।
स्फुटिका फटिका चैव शुभ्रा काङ्क्षी च रङ्गदा ॥ १७२ ॥
दृढरङ्गा रङ्गदृढा तथैव दृढरङ्गदा ।
तुवरी रङ्गदात्री च कथिता भिषजा वरैः ॥ १७३ ॥

स्फुटिकारिकाया परिचय

सौराष्ट्रमृत्तिकैवेह निर्भर निर्मलीकृता ।
तच्छोधकैर्जनैर्लोके कथिता स्फुटिकारिका ॥ १७४ ॥

अस्या गुणाः

काङ्क्षी कषाया कटुका च तिक्ता
ख्याता तथोष्णा विषदोषहन्त्री ।

वीसर्पकण्डूतिहरा च केश्या
श्चित्रापहा चै व्रणरोपणी च ॥ १७५ ॥
स्फटी त्रिदोषशमनी लोचनामयनाशिनी ।
रतिमन्दिरसङ्कोचकारिणी व्रणहारिणी ॥ १७६ ॥
ग्राहिणी लेखनी स्निग्धा रुधिरस्रावरोधिनी ।
मुखरोगहरा चैव दन्तदार्ढ्यकरा मता ॥ १७७ ॥

अस्या आमयिक प्रयोग

मृद्दारशृङ्गसंयुक्ता चूर्णिता स्फुटिकारिकाम् ।
व्रणेऽवचूर्णयेन्नित्य रोपण जायते परम् ॥ १७८ ॥

माषकद्वयमिता तु रङ्गदा
निक्षिपेद् द्विपलममिते जले ।
क्षालयेदथ मनोजमन्दिर
नाशयेच्छिथिलता क्षणादलम् ॥ १७९ ॥

स्फटिका गव्यपयसा शोलिता नस्ययोगत ।
निहन्ति रुधिरस्राव नासिकाया सुदारुणम् ॥ १८० ॥
सौभाग्यचूर्णसंयुक्ता स्फटिका निक्षिपेज्जले ।
द्रवीभूता ततो ज्ञात्वा क्षालयेत्तेन वारिणा ॥ १८१ ॥
विचर्चिका चिरोद्भूता स्राविणीमपि निर्भरम् ।
दिनसप्तकमानेन नाशयेदिह निश्चितम् ॥ १८२ ॥
माषोन्मिता स्फटी तूर्णं चूर्णिता त्वग्विचूर्णिता ।
रोधयेद्रुधिरस्राव सद्य क्षतसमुद्भवम् ॥ १८३ ॥
स्फटी रक्तित्रयमिता पञ्चतोलकसंमिते ।
सलिले द्रावयित्वाथ यत्नादुत्तरवस्तिना ॥ १८४ ॥
गुरुदर्शितमार्गेण व्रणमेहमुपाचरेत् ।

व्रणमेहव्रण हन्ति पूयस्रावञ्च दारुणम् ॥ १८५ ॥
सितान्विता रक्तिमिता चूर्णिता स्फुटिकारिका ।
अशिता नाशयत्याशु रक्तपित्त सुदारुणम् ॥ १८६ ॥
स्फटीं गुञ्जापद्कमिता पञ्चतोलकममिते ।
जले सद्राव्य युञ्जीत यत्नाद्वस्तिविधानतः ॥ १८७ ॥
गुदाङ्कुरान् चिरोद्भूतान् सङ्कोचयति सत्वरम् ।
रक्त च रोधयत्यत्र गुदभ्रशञ्च नाशयेत् ॥ १८८ ॥
तरुण्या रक्तपुष्पाया' मलिले तु परिस्रुते ।
पञ्चकोलोन्मिते काङ्क्षीं चतुर्गुञ्जमिता क्षिपेत् ॥ १८९ ॥
तस्याम्भसस्तु नयने द्विनिर्निन्दून् विनिक्षिपेत् ।
अभिष्यन्द निहन्त्याशु शोथपाकादिमयुतम् ॥ १९० ॥
स्फटिका तोलकमिता पञ्चाशत्तोलकोन्मिते ।
जले विद्राव्य युञ्जीत यत्नेनोत्तरवस्तिना ॥ १९१ ॥
गर्भाशयं प्रसूतायाः सव्यथ स्थानाच्च्युतम् ।
सङ्कोचयत्याशु तथा रक्तस्राव रुणद्धि च ॥ १९२ ॥
योनिश्च शिथिलीभूता स्वस्थानन्तु प्रपद्यते ।
कण्डूतिका हन्ति तथा श्वेतप्रदरजा रुजम् ॥ १९३ ॥
रससिन्दूरसयुक्ता स्फटी गुञ्जोन्मिताशिता ।
अधोगमूर्ध्वग चापि रक्तपित्त हरेद् भृशम् ॥ १९४ ॥
रक्तिद्वयमिता काङ्क्षीं भक्षयेत्सितया समम् ।
अपक्वनागाशनज शूल हरति दारुणम् ॥ १९५ ॥
वकुलत्वग्भवक्षोदयुक्ता तु स्फटिकारिका ।
घर्षिता दन्तमूलेषु दन्तदार्ढ्यकरी मता ॥ १९६ ॥
स्फटी शक्रयवोपेता गुञ्जाद्वितयसमिता ।
अशिता नाशयत्याशु रक्तातिसार सुदारुणम् ॥ १९७ ॥

लवङ्गैलासितोपेता चूर्णिता स्फटिकारिका ।
दन्तेषु घर्षिता काम नाशयेद् दन्तशर्कराम् ॥ १९८ ॥
सैन्धव तोलकमित स्फटिका कर्षसमिता ।
दन्तेषु घर्षणादेव दन्तपैच्छिल्यमुद्धरेत् ॥ १९९ ॥
पञ्चतोलोन्मिते तोये रक्तिपञ्चकसमिताम् ।
स्फटिका द्रावयित्वाथ कुर्वीत कवलग्रहम् ॥ २०० ॥
नाशयेद्दन्तपैच्छिल्य मुखपाकञ्च दारुणम् ।
कण्ठशुण्डीञ्च चिरजामधिजिह्वाञ्च शोथिनीम् ॥ २०१ ॥

### अथ खटिकाया नामानि

खटिका खटिनी चैव खटी लेखनमृत्तिका ।
कठिनी वै कठिनिका वर्णिका वर्णलेखिका ॥ २०२ ॥

#### खटिकाया भेदौ

खटिका द्विविधा ख्याता खटी गौरखटी तथा ।
खटी तु मलिना चान्या श्वेता मृदुशिलोपमा ॥ २०३ ॥

#### खटिकाया शोधनम्

खटीचूर्ण शुद्धपात्रे निधाय निर्मलैर्जलै ।
प्रक्षालयेद्विधानज्ञो विशुध्यति न सशय ॥ २०४ ॥

#### खटिकाया गुणा

खटिका शिशिरा तिक्ता मधुरा शोथनाशिनी ।
पित्तप्रशमनी काम विविधव्रणरोपणी ॥ २०५ ॥
कफदाहास्रदोषघ्नी नेत्रामयनिषूदनी ।
हरिद्वर्णातिसारघ्नी स्वेदातिस्रावहारिणी ॥ २०६ ॥

#### खटिकाया आमयिक प्रयोग

माषोन्मित खटीचूर्ण भक्षित शीतवारिणा ।
प्रवाहिकाञ्च पित्तास्र ग्रहणीञ्च विनाशयेत् ॥ २०७ ॥

खटी शुद्धा मधुरिकातोयेन सितयान्विता ।
शीलिता विनिहन्त्याशु त्वतीसार सुदारुणम् ॥ २०८ ॥

### अथ चूर्णस्य नामानि

चूर्णं चूर्णश्चूर्णकन्तु सुधा सौधविलेपनम् ।
तदेव च समाख्यात शिलाक्षार भिषग्वरैः ॥ २०९ ॥

#### चूर्णोदकस्य निर्माणप्रकार

रक्तिद्वयोन्मित चूर्णं पश्चतोलकसमिते ।
जले विनिक्षिपेत्प्राज्ञस्त्रियाम स्थापयेद्बुधः ॥ २१० ॥
तत. सारकपत्रेण सारयेत्काचपात्रके ।
चूर्णोदकमिति स्यात तथैव च सुधोदकम् ॥ २११ ॥
चूर्णोदक दृढहरित्काचकुप्या निधापयेत् ।
तथातिसयतेनेह पिधानेन निरोधयेत् ॥ २१२ ॥

#### चूर्णोदकस्य गुणा

चूर्णोदकं क्रिमिहरमतीसारहर परम् ।
अम्लपित्तप्रशमनं निशेषाद्दुग्धपाचनम् ॥ २१३ ॥
शूल ग्रहणिका हन्ति खटीवद् गुणकारकम् ।
द्रावकाञ्जनसम्भूता निहन्ति च विषक्रियाम् ॥ २१४ ॥

#### चूर्णोदकस्य मात्रा

आरभ्य त्रिंशद्बिन्दुभ्य' षष्टिबिन्दुमित परम् ।
चूर्णोदक प्रयुञ्जीत वार्षिकैकस्तनन्धये ॥ २१५ ॥
चूर्णोदकस्य सुखदा तोलकद्वयसमिता ।
पूर्णमात्रा समाख्याता रसतन्त्रविशारदैः ॥ २१६ ॥

#### चूर्णोदकस्य आमयिक प्रयोग

यत्नादिह हि बस्त्युक्तविधानेन सुधोदकम् ।
योजित विनिहन्त्याशु कृमीन् क्षुद्रान्त्रसस्थितान् ॥२१७॥
नवसादरसयुक्त चूर्णं लिप्त तु वारिणा ।

## अथ शङ्खादिविज्ञानीयो द्वादशस्तरङ्गः

### अथ शङ्खस्य नामानि

शङ्खस्तु शङ्खकः कम्बुस्त्रिरेखश्च समुद्रजः ।
सुनादो दीर्घनादश्च कम्बोजश्च प्रकीर्तितः ॥ १ ॥

ग्राह्यशङ्खस्य स्वरूपम्

वृत्तः स्निग्धः सूक्ष्ममुखो निर्मलश्चेन्दुसुन्दरः ।
दीर्घकायो गुरुश्चापि शङ्खः श्रेष्ठः प्रकीर्तितः ॥ २ ॥

शङ्खस्य द्वौ भेदौ

शङ्खस्तु द्विविधः प्रोक्तो रसतन्त्रविचक्षणैः ।
प्रथमो दक्षिणावर्तो वामावर्तोऽपरो मतः ॥ ३ ॥
दक्षिणावर्तशङ्खस्तु प्रशस्तो देवपूजने ।
निर्दोषश्चो निधिश्चापि स्मृतो दारिद्र्यनाशनः ॥ ४ ॥
वामावर्ताभिधः शङ्खः सर्वत्र सुलभो मतः ।
अतः स एव वैद्यैस्तु मारणार्थं प्रयुज्यते ॥ ५ ॥

अथ शङ्खस्य प्रथमः शोधनप्रकारः

शङ्खन्तु खण्डशः कृत्वा पोट्टल्यां स्थापयेद्भिषक् ।
दोलायन्त्रे चतुर्यामं पचेज्जम्बीरवारिणा ॥ ६ ॥
प्रक्षालयेच्छङ्खखण्डान् प्रतप्तेनाम्भसा ततः ।
इत्थं नातिचिरादेव शङ्खः शुद्धिमवाप्नुयात् ॥ ७ ॥

द्वितीयः शोधनप्रकारः

जयन्त्याः स्वरसेनैव शङ्खं दोलागतं पचेत् ।
यामैकं पाचनादेव शुद्धिमायात्यनुत्तमाम् ॥ ८ ॥

तृतीयः शोधनप्रकारः

तण्डुलीयद्रवेणेह शङ्खं दोलागतं पचेत् ।
यामैकं पाचनादेव शुद्धिमायात्यनुत्तमाम् ॥ ९ ॥

चतुर्थ शोधनप्रकार

काञ्जिकेन पचेच्छङ्ख दोलायन्त्रे भिषग्वरः ।
क्षालयेच्चोष्णतोयेन शङ्ख· शुद्धिमवाप्नुयात् ॥ १० ॥

पञ्चम शोधनप्रकार

निम्बूकाम्लसमायुक्तधारा दोलाख्ययन्त्रके ।
यामार्द्धं पाचितः शङ्खः शुद्धिमायात्यनुत्तमाम् ॥ ११ ॥

## विशुद्धशङ्खस्य प्रयोगा

त्रिरेखवर्तिका

मापकप्रमिता कृष्णा मरिच मापकद्वयम् ।
शिला मरीचद्विगुणा शङ्खो मापाष्टकोन्मितः ॥ १२ ॥
सम्पेष्य वर्तिका कृत्वा लोचने विधिनाञ्जयेत् ।
तिमिर नाशयेद्धारा मस्तुना चार्बुद हरेत् ॥ १३ ॥
पिचट मधुना हन्यान्नारीस्तन्येन चार्जुनम् ।
त्रिरेखवर्तिका ह्येषा नेत्रामयनिषूदिनी ॥ १४ ॥

अर्जुनहरशङ्खचूर्णम्

विशोधित शङ्खचूर्णं क्षौद्रेण तु समाञ्जितम् ।
अर्जुन नाशयत्याशु भास्करस्तिमिर यथा ॥ १५ ॥

शङ्खवर्ति

शङ्खमन्यवडिण्डीरैः शिग्रुबीजैश्च निर्मिता ।
वर्तिर्नेत्रेऽञ्जनादेव शुक्रादीन्नाशयत्यलम् ॥ १६ ॥

अथ शङ्खस्य मारणम्

शुद्धशङ्खस्य खण्डानि शरावे स्थापयत्सुधीः ।
शरावेण पिधायाथ यत्नात्सन्धि प्रलेपयेत् ॥ १७ ॥
आतपे त्वथ सशोष्य पुटेद्गजपुटे भिषक् ।
स्वत शीत समुद्धृत्य खल्वे सञ्चूर्णयेद्भिषक् ॥ १८ ॥
चूर्णितश्चाथ निक्षाय सम्पुटस्थ ततः पुटेत् ।

# अथ शङ्खादिविज्ञानीयो द्वादशस्तरङ्ग

## अथ शङ्खस्य नामानि

शङ्खस्तु शङ्खके कम्बुस्त्रिरेखश्च समुद्रजः ।
सुनादो दीर्घनादश्च कम्बोजश्च प्रकीर्तितः ॥ १ ॥

ग्राह्यशङ्खस्य स्वरूपम्

वृत्तः स्निग्धः सूक्ष्ममुखो निर्मलश्चेन्दुसुन्दरः ।
दीर्घकायो गुरुश्चापि शङ्खः श्रेष्ठः प्रकीर्तितः ॥ २ ॥

शङ्खस्य द्वौ भेदौ

शङ्खस्तु द्विविधः प्रोक्तो रसतन्त्रविचक्षणैः ।
प्रथमो दक्षिणावर्तो वामावर्तोऽपरो मतः ॥ ३ ॥
दक्षिणावर्तशङ्खस्तु प्रशस्तो देवपूजने ।
त्रिदोषघ्नो निधिश्चापि स्मृतो दारिद्र्यनाशनः ॥ ४ ॥
वामावर्ताभिधः शङ्खः सर्वत्र सुलभो मतः ।
अतः स एव वैद्यैस्तु मारणार्थं प्रयुज्यते ॥ ५ ॥

अथ शङ्खस्य प्रथमः शोधनप्रकारः

शङ्खन्तु खण्डशः कृत्वा पोट्टल्यां स्थापयेद्भिषक् ।
दोलायन्त्रे चतुर्यामं पचज्जम्बीरवारिणा ॥ ६ ॥
प्रक्षालयेच्छङ्खखण्डान् प्रतप्तेनाम्भसा ततः ।
इत्थं नातिचिरादेव शङ्खः शुद्धिमवाप्नुयात् ॥ ७ ॥

द्वितीयः शोधनप्रकारः

जयन्त्याः स्वरसेनैव शङ्खं दोलागतं पचेत् ।
यामैकं पाचनादेव शुद्धिमायात्यनुत्तमाम् ॥ ८ ॥

तृतीयः शोधनप्रकारः

तण्डुलीयद्रवेणेह शङ्खं दोलागतं पचेत् ।
यामैकं पाचनादेव शुद्धिमायात्यनुत्तमाम् ॥ ९ ॥

चतुर्थ शोधनप्रकार

काञ्जिकेन पचेच्छङ्ख दोलायन्त्रे भिषग्वरः ।
क्षालयेच्चोष्णतोयेन शङ्खः शुद्धिमवाप्नुयात् ॥ १० ॥

पञ्चम शोधनप्रकार

निम्बूकाम्लसमायुक्तनीरा दोलाख्ययन्त्रके ।
यामार्द्धं पाचितः शङ्खः शुद्धिमायात्यनुत्तमाम् ॥ ११ ॥

विशुद्धशङ्खस्य प्रयोगाः

त्रिरेखवर्तिका

माषकप्रमिता कृष्णा मरिच माषकद्वयम् ।
शिला मरीचद्विगुणा शङ्खो माषाष्टकोन्मितः ॥ १२ ॥
सम्पेष्य वर्तिका कृत्वा लोचने विधिनाञ्जयेत् ।
तिमिर नाशयेद्वारा मस्तुना चार्बुद हरेत् ॥ १३ ॥
पिचट मधुना हन्यान्नारीस्तन्येन चार्जुनम् ।
त्रिरेखवर्तिका ह्येषा नेत्रामयनिषूदिनी ॥ १४ ॥

अर्जुनहरशङ्खचूर्णम्

विशोधित शङ्खचूर्णं क्षौद्रेण तु समञ्जितम् ।
अर्जुन नाशयत्याशु भास्करस्तिमिरं यथा ॥ १५ ॥

शङ्खवर्ति

शङ्खमन्थवडिण्डीरैः शिग्रुबीजैश्च निर्मिता ।
वर्तिर्नेत्राञ्जनादेव शुक्रादीन्नाशयत्यलम् ॥ १६ ॥

अथ शङ्खस्य मारणम्

शुद्धशङ्खस्य खण्डानि शरावे स्थापयत्सुधी ।
शरावेण पिधायाथ यत्नात्सन्धि प्रलेपयेत् ॥ १७ ॥
आतपे त्वथ सशोष्य पुटेद्गजपुटे भिषक् ।
स्वत शीत समुद्धृत्य खल्वे सञ्चूर्णयेद्भिषक् ॥ १८ ॥
चूर्णितश्चाथ विज्ञाय सम्पुटस्थ तत पुटेत् ।

## अथ शङ्खादिविज्ञानीयो द्वादशस्तरङ्ग

### अथ शङ्खस्य नामानि

शङ्खस्तु शङ्खकः कम्बुस्त्रिरेखश्च समुद्रजः ।
सुनादो दीर्घनादश्च कम्बोजश्च प्रकीर्तितः ॥ १ ॥

ग्राह्यशङ्खस्य स्वरूपम्

वृत्तः स्निग्धः सूक्ष्ममुखो निर्मलश्चेन्दुसुन्दरः ।
दीर्घकायो गुरुश्चापि शङ्खः श्रेष्ठः प्रकीर्तितः ॥ २ ॥

शङ्खस्य द्वौ भेदौ

शङ्खस्तु द्विविधः प्रोक्तो रसतन्त्रविचक्षणैः ।
प्रथमो दक्षिणावर्तो वामावर्तोऽपरो मतः ॥ ३ ॥
दक्षिणावर्तशङ्खस्तु प्रशस्तो देवपूजने ।
त्रिदोषघ्नो निधिश्चापि स्मृतो दारिद्र्यनाशनः ॥ ४ ॥
वामावर्ताभिधः शङ्खः सर्वत्र सुलभो मतः ।
अतः स एव वैद्यैस्तु मारणार्थं प्रयुज्यते ॥ ५ ॥

अथ शङ्खस्य प्रथमः शोधनप्रकारः

शङ्खन्तु खण्डशः कृत्वा पोट्टल्या स्थापयेद्भिषक् ।
दोलायन्त्रे चतुर्याम पचेज्जम्बीरवारिणा ॥ ६ ॥
प्रक्षालयेच्छङ्खखण्डान् प्रतप्तेनाम्भसा ततः ।
इत्थं नातिचिरादेव शङ्खः शुद्धिमवाप्नुयात् ॥ ७ ॥

द्वितीयः शोधनप्रकारः

जयन्त्याः स्वरसेनैव शङ्खं दोलागतं पचेत् ।
यामैकं पाचनादेव शुद्धिमायात्यनुत्तमाम् ॥ ८ ॥

तृतीयः शोधनप्रकारः

तण्डुलीयद्रवेणेह शङ्खं दोलागतं पचेत् ।
यामैकं पाचनादेव शुद्धिमायात्यनुत्तमाम् ॥ ९ ॥

चतुर्थ शोधनप्रकार

काञ्जिकेन पचेच्छङ्खं दोलायन्त्रे भिषग्वरः ।
क्षालयेच्चोष्णतोयेन शङ्खः शुद्धिमवाप्नुयात् ॥ १० ॥

पञ्चम शोधनप्रकार

निम्बूकाम्लसमायुक्तनारा दोलाख्ययन्त्रके ।
यामार्द्धं पाचितः शङ्खः शुद्धिमायात्यनुत्तमाम् ॥ ११ ॥

## विशुद्धशङ्खस्य प्रयोगाः

त्रिरत्नवर्तिका

माषकप्रमिता कृष्णा मरिचं माषकद्वयम् ।
शिला मरीचद्विगुणा शङ्खो माषाष्टकोन्मितः ॥ १२ ॥
सम्पेष्य वर्तिकां कृत्वा लोचने विधिनाञ्जयेत् ।
तिमिरं नाशयेद्वारा मस्तुना चार्बुदं हरेत् ॥ १३ ॥
पिच्चटं मधुना हन्यान्नारीस्तन्येन चार्जुनम् ।
त्रिरत्नवर्तिका ह्येषा नेत्रामयनिषूदिनी ॥ १४ ॥

अर्जुनहरशङ्खचूर्णम्

विशोधितं शङ्खचूर्णं क्षौद्रेण तु समाञ्जितम् ।
अर्जुनं नाशयत्याशु भास्करस्तिमिरं यथा ॥ १५ ॥

शङ्खयति

शङ्खसिन्धुरडिण्डीरैः शिग्रुबीजैश्च निर्मिता ।
वर्तिर्नेत्रेऽञ्जनादेव शुक्रादीन्नाशयत्यलम् ॥ १६ ॥

अथ शङ्खस्य मारणम्

शुद्धशङ्खस्य खण्डानि शरावे स्थापयेत्सुधी ।
शरावेण पिधायाथ यत्नात्सन्धिं प्रलेपयेत् ॥ १७ ॥
आतपे त्वथ संशोष्य पुटेद्गजपुटे भिषक् ।
स्वतः शीतं समुद्धृत्य खल्वे सञ्चूर्णयेद्भिषक् ॥ १८ ॥
चूर्णितश्चाथ निम्बाय सम्पुटस्थं ततः पुटेत् ।

गत पुटद्वयेनैव शङ्खो मृतिमाप्नुयात् ॥ १९ ॥

अथ मृतशङ्खस्य गुणा, मात्रा च

शङ्खः सुशीतलः क्षारस्त्वम्लपित्तविनाशनः ।
अग्निमान्द्यहरो वल्यो ग्राही ग्रहणिकाहरः ॥ २० ॥
परिणामोत्थशूलघ्नस्तारुण्यपिटिकापहा ।
त्रिदोषहरो वर्ण्यो मात्रा गुञ्जद्वयोन्मिता ॥ २१ ॥

मृतशङ्खस्य आमयिक प्रयोग

निम्बूकस्वरसेनेह मृतः शङ्खस्तु शीलितः ।
अतिसारं हरेच्चूर्णं ग्रहणीञ्चातिदारुणाम् ॥ २२ ॥
स यूषणो मृतः शङ्खस्त्वग्निमान्द्यं व्यपोहति ।
धात्रीचूर्णेन मधुनास्त्वम्लपित्तं विनाशयेत् ॥ २३ ॥
यवक्षारविरुद्धुना गुल्मरोगहरः परम् ।
शूलं त्रिदोषजं हन्याद् व्योषमन्थनहिङ्गुना ॥ २४ ॥
पुरातनगुडोपेतस्त्वथवा व्योषसंयुतः ।
सपञ्चलवणः शङ्खः परिणामोत्थशूलनुत् ॥ २५ ॥
मार्ङ्गीचूर्णान्वितः शङ्खः श्वासं हन्ति सुदारुणम् ।
त्रिधमेषजचूर्णेन जाठराग्निप्रदीपनः ॥ २६ ॥
मुस्तजातीफलाफूकटङ्कणैर्गुञ्जकोन्मितः ।
शीलितस्तत्क्षणादेव सर्वातीसारनाशनः ॥ २७ ॥
मरिचैश्च सपूगैश्च मृतः शङ्खस्तु शीलितः ।
विनाशयेद्विशेषेण वान्तिं खलु सुदारुणाम् ॥ २८ ॥
मूलकभस्मितोपेतः शङ्खः सुमृतः प्रलेपनतः ।
हन्ति कफार्बुदमचिरात् कामं च विशेषतो ग्रन्थीन् ॥ २९

अथ शङ्खस्य कल्पः

कज्जली तत्समा चैव मृता खलु वराटिका ।

पूरितो द्विगुणः शङ्खः सर्वतुल्या च पिप्पली ॥ ३० ॥
निम्बूकस्वरसेनेह पेपायित्वा प्रयत्नतः ।
निर्मापयेत्प्रयत्नेन वटिका रक्तिकोन्मिताः ॥ ३१ ॥
एकैका वटिका खादेन्मरिचाज्यसमन्विताम् ।
ग्रहणीं चिरसञ्जाता नाशयेत्पक्षसेवितः ॥ ३२ ॥
गात्रशुद्धिं करोत्येव साज्यखण्डेन शीलितः ।
चित्रकेण हरेच्छूल गुलमश्चापि निशेपतः ॥ ३३ ॥
अन्यानपि बहून् रोगान् तत्तत्पथ्यप्रयोगतः ।
नियतं नाशयत्याशु शङ्खकल्पोऽयमुत्तमः ॥ ३४ ॥

प्रथम शङ्खद्रावक

शङ्खचूर्णञ्च सौभाग्य स्फुटिका यानशूकजम् ।
सर्जिक्षार नृसारञ्च तथा लवणपञ्चकम् ॥ ३५ ॥
सम सम समादाय यत्नतश्चूर्णयेद्भिषक् ।
मृल्लिप्तजठराया तु काचकुप्यां न्यसेत्ततः ॥ ३६ ॥
रूपीं चुल्ल्या निधायाथ तिर्यङ् नाल निवेशयेत् ।
अन्यस्या काचकुप्या तु तोयस्थाया विधानतः ॥ ३७ ॥
पचेन्मन्दानलेनैव विधानज्ञो भिपग्वर ।
द्रावित तोयरूपन्तु द्रावक जायते तदा ॥ ३८ ॥
शङ्खशुक्तिवराटादीन् यामार्द्धेनैव निश्चितम् ।
द्रावयत्येप तु यतः शङ्खद्रावस्ततः स्मृतः ॥ ३९ ॥

अस्य गुणा

अग्निमान्द्य हरत्येप विपूचीश्चातिदारुणाम् ।
ग्रहणीं मूत्रकृच्छ्रञ्च गुलमप्लीहोदराणि च ॥ ४० ॥
शूलमष्टविध हन्ति तथार्शांसि विनाशयेत् ।
भोजनान्ते बिन्दुमात्र पिबेत्प्रचुरवारिणा ॥ ४१ ॥

भुक्त्वाकण्ठं पुनर्भोक्तुमिच्छत्यस्य प्रयोगतः ।
क्रमीनुन्मूलयत्याशु छर्दिश्चापि सुदारुणाम् ॥ ४२ ॥

द्वितीय शङ्खद्रावक

स्फुटिका तोलकमिता सैन्धवश्चापि तन्मितम् ।
यावशूकजकश्चापि तोलकद्वयसम्मितम् ॥ ४३ ॥
निर्मलो नव्यसारश्च तोलकद्वितयोन्मितः ।
कर्षद्वयं सुराक्षारं काशीशश्चापि तत्समम् ॥ ४४ ॥
काचकुप्यां निधायाथ चुल्लिकायां निधापयेत् ।
तिर्यङ् निवेशयेत्तत्र नलिकां काचनिर्मिताम् ॥ ४५ ॥
अन्यकाचघटीलग्नां, पचेन्मन्दाग्निना ततः ।
अग्निवीर्यं तोयरूपं जायते द्रावकं शुभम् ॥ ४६ ॥
शङ्खशुक्तिसुवर्णादीन् यस्माद् द्रावयतीह वै ।
तस्माद्रसायनाचार्यैः शङ्खद्रावः प्रकीर्तितः ॥ ४७ ॥

अस्य गुणाः

गुल्मप्लीहहरः कामं सर्वोदरविनाशनः ।
शूलञ्च वातिकं हन्ति वह्निमान्द्यादिकानपि ॥ ४८ ॥

तृतीय शङ्खद्रावक

चूलिकालवणं चैव सैन्धवं यावशूकजम् ।
पृथक् पलोन्मितं चैव सुराक्षारं पलद्वयम् ॥ ४९ ॥
स्फुटी कर्षद्वयमिता काशीसं कर्षसम्मितम् ।
सर्वमेकत्र सम्मेल्य काचकुप्यां न्यसेत्ततः ॥ ५० ॥
तिर्यङ् नालादिकं दत्त्वा विधानतो भिषग्वरः ।
पचेन्मन्दानलेनैव चुल्यान्तु खदिरेन्धनैः ॥ ५१ ॥
द्रावितं वह्निवीर्यन्तु सलिलाभं महोत्तमम् ।
शङ्खद्रावं भवेत् सर्वधातूनां द्रावकं परम् ॥ ५२ ॥

चतुर्थ शङ्खद्रावक

सार्द्धकभागप्रमितः सोरकद्रावकस्तथा ।
लवणद्रावकश्चापि भागद्वितयसंमितः ॥ ५३ ॥
परिस्रुतश्च सलिलं सार्द्धद्वादशभागिकम् ।
सर्वं सम्मेल्य यत्नेन जायते त्वतिशोभनः ॥ ५४ ॥
शङ्खस्वर्णादिधातूनां द्रावकः परमोत्तमः ।
शङ्खद्रावो वह्निवीर्यो गुल्मप्लीहादिभस्मकृत् ॥ ५५ ॥

चतुर्थशङ्खद्रावकस्य मात्रा

आरभ्य शरनिन्दुभ्यः कलानिन्दुमितं परम् ।
शङ्खद्रावं प्रयुञ्जीत पलमितवारिणा ॥ ५६ ॥

## अथ क्षुद्रशङ्खस्य नामानि

क्षुद्रशङ्खं शङ्खनकः शम्बूकः स्वल्पशङ्खकः ।
क्षुल्लको नखशङ्खञ्च नामान्येतानि शङ्खके ॥ ५७ ॥

क्षुद्रशङ्खस्य शोधनम्

अम्लेन केनचिद्वापि क्वाथं स्थालीगतं पचेत् ।
यामार्द्धेनैव शम्बूकः शुद्धिमायात्यनुत्तमाम् ॥ ५८ ॥

क्षुद्रशङ्खस्य मारणम्

शङ्खवन्मारणं त्वस्य करणीयं भिषग्वरैः ।
कुमारीस्वरसेनैव सम्पुटस्थं पुटेत्तु वा ॥ ५९ ॥

क्षुद्रशङ्खस्य गुणा

क्षुद्रशङ्खस्तु शूलघ्नो नेत्रामयनिषूदनः ।
रक्तातिसारशमनो दीपनः पाचनस्तथा ॥ ६० ॥

अस्य आमयिक प्रयोग

क्षुद्रशङ्खविभूतिस्तु शीलिता तप्तवारिणा ।
परिणामोद्भवं शूलमचिरादेव नाशयेत् ॥ ६१ ॥
मरीचपञ्चलवणैर्भूतिः शम्बूकजाशिता ।

भोजनादौ तदन्ते वा पक्तिशूलं व्यपोहति ॥ ६२ ॥
समसैन्धवसंयुक्ता भूतिः शम्बूकजाशिता ।
मधुना त्वचिरादेव वातग्रहणिकां हरेत् ॥ ६३ ॥

अथ शुक्तेर्नामानि

शुक्तिश्च शुक्तिका चापि मुक्तामाता तथैव च ।
मुक्तागृहं महाशुक्तिः मौक्तिकप्रसवा च सा ॥ ६४ ॥
मुक्ताशुक्तिस्तथा मुक्तागेहं मौक्तिकमन्दिरम् ।

शुक्तिकायाः प्रथमः शोधनप्रकारः

जयन्त्याः स्वरसेनैव शुक्तिं दोलागतां पचेत् ॥ ६५ ॥
यामकेनैव नियतं शुक्तिः शुद्धिमनामयात् ।

द्वितीयः शोधनप्रकारः

अम्लेन केनचिद्वापि दोलायन्त्रेण यत्नतः ॥ ६६ ॥
शुक्तिकां पाचयेद्धीमान् शुद्धिमायात्यनुत्तमाम् ।

शुक्तेर्मारणम्

शुक्तिकां खण्डशः कृत्वा सम्पुटस्थां ततः पुटेत् ॥ ६७ ॥
हिमकुन्देन्दुसङ्काशां शुक्तेर्भूतिं समाहरेत् ।

शुक्तेर्गुणाः, मात्रा च

शुक्तिका शूलशमनी हृदामयविनाशिनी ॥ ६८ ॥
स्निग्धा रुच्या श्वासहरा दीपनी मधुरा मता ।
इष्टिकावर्णसङ्काशा नाशयेन्मूत्रशर्कराम् ॥ ६९ ॥
प्लीहानं नाशयत्याशु तथा च जठरामयान् ।
रक्तिद्वयमिता मात्रा मुक्तागेहस्य कीर्तिता ॥ ७० ॥

अस्या आमयिकः प्रयोगः

वरामधुकचूर्णेन समेन त्र्यूषणेन वा ।
शुक्तिका शीलिता शीघ्रं शूलं नाशयति ध्रुवम् ॥ ७१ ॥
धात्रीचूर्णान्विता शुक्तिः काकमाचीरसेन वै ।

शोलिता त्वचिरादेव विनिहन्ति हृदामयम् ॥ ७२ ॥
त्र्यूषणक्षौद्रमयुक्ता वासारससमन्विता ।
श्वास विनाशयत्याशु दिनसप्तकसेवनात् ॥ ७३ ॥
कटुत्रिकानलोपेता यवक्षारविमिश्रिता ।
शुक्तिका मधुना लीढा वह्निसन्दीपनी मता ॥ ७४ ॥
तृणपञ्चकमूलस्य कषायेण तु शीलिता ।
शुक्तिका नाशयत्याशु चिरजा मूत्रशर्कराम् ॥ ७५ ॥
व्योपत्रिक्षारसयुक्ता लवणद्वयमिश्रिता ।
शुक्तिका मधुना हन्ति प्लीहानमतिदारुणम् ॥ ७६ ॥
शिलाजतुसमायुक्ता वङ्गसर्जरसान्विता ।
शुक्ति कन्यारसैर्लीढा श्वेतप्रदरनाशिनी ॥ ७७ ॥
यावशूकजसयुक्ता तथा सैन्धवसयुता ।
गोदध्ना शुक्तिका पीता जठरामयनाशिनी ॥ ७८ ॥

अथ जलशुक्तेर्नामानि

जलशुक्तिस्तथा क्षुद्रशुक्तिका तोयशुक्तिका ।
कृमिशुक्तिश्च शम्बूका पुटिका ह्रस्वशुक्तिका ॥ ७९ ॥

जलशुक्तिकाया शोधन मारणञ्च

शुक्तिवच्छोधन तस्या मारणञ्चापि कीर्तितम् ।
अङ्गारगर्भा तु ता न्यस्य मारयेद्वारिशुक्तिकाम् ॥ ८० ॥

अस्या गुणा

जलशुक्ति' शूलहरा कटु स्निग्धा च दीपनी ।
बल्या गुल्महरा रुच्या विषदोषहरा मता ॥ ८१ ॥

अथ वराटकस्य नामानि

वराटको वराटश्च वराटी च वराटिका
कपर्दक' कपर्दश्च कपर्दी च कपर्दिका ॥ ८२ ॥

बालक्रीडनकश्चापि चरो वर्यश्चराचरः ।
वराटकः वराट च कपर्द च निगद्यते ॥ ८३ ॥

वराटकस्य भेदाः

वराटिका त्रिधा प्रोक्ता पीता श्वेता च धूसरा ।
पीतोत्तमा मध्यमा तु श्वेतान्या त्वधमा मता ॥ ८४ ॥

ग्राह्यवराटिकायाः स्वरूपम्

दीर्घवृन्ता स्वर्णवर्णा पृष्ठे च ग्रन्थिला तथा ।
सार्द्धकशाणप्रमिता वराटी कथितोत्तमा ॥ ८५ ॥
शाणोन्मिता मध्यमा स्याच्छाणार्द्धप्रमिताधमा ।
रसज्ञैरुत्तमैरेह भस्मकर्मणि शस्यते ॥ ८६ ॥

वराटिकायाः शोधनम्

दोलायन्त्रे तु यामैकं काञ्जिकेन वराटिका ।
स्विन्ना प्रक्षालिता चोष्णवारिणा शुद्धिमाप्नुयात् ॥ ८७ ॥

द्वितीयः शोधनप्रकारः

दोलायन्त्रे तु यामैकं कुलत्थक्वथिताम्भसा ।
स्विन्ना वराटिका शीघ्रं शुद्धिमायात्यनुत्तमाम् ॥ ८८ ॥

तृतीयः शोधनप्रकारः

अम्लेन केनचिद्वापि दोलायन्त्रे निपाचिता ।
वराटी याममात्रेण विशुद्ध्यति न संशयः ॥ ८९ ॥

चतुर्थः शोधनप्रकारः

निम्बूकाम्लद्रवोपेता दोलायन्त्रे वराटिका ।
परिस्विन्ना तु यामैकं शुद्धिमायात्यनुत्तमाम् ॥ ९० ॥

वराटिकायाः मारणम्

वराटकास्तु निर्मलान् शरावे स्थापयेद्भिषक् ।
शरावेणापरेणाथ सम्यगाच्छादयेत्ततः ॥ ९१ ॥
सन्धिलेपं ततः कृत्वा शोषयेदातपे पुनः ।

करीपाग्नौ पचेत्कामं यत्नतस्तु भिषग्वरः ॥ ९२ ॥
स्वाङ्गशीतं समुद्धृत्य खल्वे सञ्चूर्णयेत्ततः ।
शरदिन्दुनिभ भस्म सर्वयोगेषु योजयेत् ॥ ९३ ॥

अपर प्रकार

वराटिका विशोधिता त्वलातकानले स्थिता ।
यदा भवेत्प्रफुल्लिता मृता तदाशनोचिता ॥ ९४ ॥

अस्या गुणा , मात्रा च

वराटी दीपनी चोष्णा नयनातङ्कहारिणी ।
कर्णस्रावहरात्यर्थं वह्निमान्द्यविनाशिनी ॥ ९५ ॥
पक्तिशूलादिशमनी ग्रहणीगजसिंहिका ।
क्षयस्फोटापहा वृष्या मात्रा रक्तिद्वयोन्मिता ॥ ९६ ॥

वराटिकाया आमयिक प्रयोग

समुद्रफेनसयुक्ता श्लक्ष्णपिष्टा वराटिका ।
ध्माता श्रुतिपुटेऽत्यर्थं पूयस्राव न्यपोहति ॥ ९७ ॥
कटुत्रिकसमायुक्ता वह्निमान्द्य विनाशयेत् ।
वासकस्वरसोपेता वराटी कासनाशिनी ॥ ९८ ॥
निम्बूकाम्लसमायुक्ता कटुत्रिकसमन्विता ।
वराटी शीलिता शीघ्र नाशयेच्छूलमुद्धतम् ॥ ९९ ॥
मृद्दारशृङ्गसयुक्ता श्लक्ष्णपिष्टा वराटिका ।
अवचूर्णनयोगेन विस्फोटान् विविधान् हरेत् ॥ १०० ॥
शङ्खत्र्यूषणसयुक्ता मृता खलु वराटिका ।
दिनसप्तकमात्रेण ग्रहणीं नाशयेद् ध्रुवम् ॥ १०१ ॥
रससिन्दूरसयुक्ता मृता खलु वराटिका ।
घृतोदुम्बरतोयेन रक्तपित्त विनाशयेत् ॥ १०२ ॥

### अथ मृगशृङ्गस्य नामानि

मृगशृङ्गं त्वेणशृङ्गं तथा मृगविषाणकम् ।
हरिणशृङ्गकश्चैवं समाख्यातं भिषग्वरैः ॥ १०३ ॥

ग्राह्यमृगशृङ्गस्य स्वरूपम्

कीटानुपहतं दीर्घं भारात्यं सुदृढं तथा ।
अनेकशृङ्गसंयुक्तं मृगशृङ्गं वरं मतम् ॥ १०४ ॥

मृगशृङ्गस्य मारणम्

मृगशृङ्गं समादाय करपत्रेण कर्तयेत् ।
खण्डशः कारयित्वा च स्वङ्गारेऽग्नौ दहेत्ततः ॥ १०५ ॥
सुदग्धश्चाथ विज्ञाय खल्वे सञ्चूर्णयेद्भिषक् ।
रविदुग्धेन सम्पेष्य चक्रिकाः कारयेत्ततः ॥ १०६ ॥
शरावसम्पुटान्तःस्थं पुटेत्तीव्राग्निना भिषक् ।
त्रिवारं पुटनादेणविषाणं मृतिमाप्नुयात् ॥ १०७ ॥

अस्य आमयिक प्रयोग

मृगशृङ्गसमुद्भूता विभूतिर्गव्यसर्पिषा ।
विनाशयेत् क्षणादेव हृच्छूलमतिदारुणम् ॥ १०८ ॥
हरिणविषाणसमुत्था भूतिः क्षौद्रेण संमिलिता ।
अपहरतीह निकामं हृच्छूलं पार्श्वशूलञ्च ॥ १०९ ॥

### अथ समुद्रफेनस्य नामानि

समुद्रफेनः फेनश्च सुफेनः फेनकस्तथा ।
अब्धिफेनश्च फेनश्च डिण्डीरोऽब्धिकफो मतः ॥ ११० ॥

समुद्रफेनस्य शोधनम्

पृष्ठास्थीन्यब्धिफेनस्य निलिख्यापनयेत्ततः ।
खल्वे सम्पेष्य यत्नेन श्लक्ष्णचूर्णञ्च कारयेत् ॥ १११ ॥
निम्बूकस्वरसेनाथ भावयेदेकवारकम् ।

एवमब्धिकफः शीघ्रं शुद्धिमायात्यनुत्तमाम् ॥ ११२ ॥

अस्य गुणा, मात्रा च

समुद्रफेनः शिशिरो लेखनः पावनः सरः ।
चक्षुष्यो दीपनश्चैव श्रुतिस्रावहरः परम् ॥ ११३ ॥
विषदोषप्रशमनः कषायः कफनाशनः ।
कुष्ठरोगहरोऽस्यर्थं मात्रा रक्तिद्वयोन्मिता ॥ ११४ ॥

अस्य आमयिक प्रयोग

समुद्रफेनचूर्णन्तु सितया श्लक्ष्णपिष्टया ।
नेत्रशुक्रं निहन्त्याशु चिरजातमपि ध्रुवम् ॥ ११५ ॥
शङ्खसैन्धवसंयुक्तः सुफेनोऽर्कशलाकया ।
नेत्रयोरञ्जनादाशु शुक्रादीन् शस्त्रवल्लिखेत् ॥ ११६ ॥
पिप्पलीसैन्धवोपेतं फेनको मधुनाञ्जनात् ।
विनाशयेच्छुक्रदोषं दृशोश्चिरसमुत्थितम् ॥ ११७ ॥
तुत्थषड्गुणितः फेनः पथ्यया तुत्थतुल्यया ।
वर्ति कृताञ्जनाद्वारा पोथक्यादिविनाशिनी ॥ ११८ ॥
रालसैन्धवरसाञ्जनान्वितः फेनकस्तु वटकीकृतोऽञ्जनात् ।
क्लिन्नवर्त्मनिनिवारणः परः पक्ष्मरोहणकरश्च कीर्तितः ॥११९
चूर्णितं त्वब्धिफेनं तु प्रध्मातं श्रुतिसम्पुटे ।
विनाशयन्छ्रुतिस्रावं चिरजातमपि द्रुतम् ॥ १२० ॥
सूतगन्धकसंयुक्तस्त्वथवा हिङ्गुलान्वितः ।
समुद्रफेनस्त्वशनात्कफपित्तज्वरापहः ॥ १२१ ॥
मृद्दारभृङ्गसंयुक्तः त्वब्धिफेनं सुचूर्णितम् ।
मधुना व्रणसंलेपादुत्तमं व्रणरोपणम् ॥ १२२ ॥
कोकिलाक्षककालेयकदफलोशीरकेक्षुरैः ।
भर्तस्त्रां चूर्णितैर्लीढो डिण्डीरः शुक्रशोधनः ॥ १२३ ॥

अब्धिफेनस्य उत्पत्तिप्रकारः

समुद्रे वर्तुलः क्षुद्रो दशहस्तसमन्वितः ।
मीनजातिसमुत्पन्नो जन्तुरेको निरस्थिकः ॥ १२४ ॥
भीषणाद् दुर्गसंघृष्टः स यदा विनशत्यथ ।
तच्छरीरस्थितं शुष्कन्तु फेनाभं दृश्यते तदा ॥ १२५ ॥
अब्धिमध्ये तरत्येतत्तरङ्गैराहतं मुहुः ।
यतोऽब्धौ फेनवत्तारि अब्धिफेनं ततः स्मृतम् ॥ १२६ ॥

इति शङ्खादिविज्ञानीयो नाम द्वादशस्तरङ्गः

---

## अथ क्षारत्रिकविज्ञानीयस्त्रयोदशस्तरङ्गः

### अथ यवक्षारस्य नामानि

यवक्षारो यवापत्यं यवजो यवशूकजः ।
यव्यो यवाग्रजश्चैव यवाह्वो यवनालजः ॥ १ ॥
यवशूको यवशूकः शूकजो यावशूकजः ।
याव्यस्तथैव पाक्यश्च समाख्यातो भिषग्वरैः ॥ २ ॥

यवक्षारस्य निर्माणप्रकारः

यवशूकभवं भस्म समादाय भिषग्वरः ।
सलिलेऽष्टगुणे क्षिप्त्वा निर्मले भाजने ततः ॥ ३ ॥
सप्तवारं प्रयत्नेन स्रावयेत्पृथुवाससा ।
स्रावितं सलिलञ्चाथ चुल्ल्यां तीव्राग्निना पचेत् ॥ ४ ॥
निःशेषं सलिलं ज्ञात्वा पाकपात्रतलस्थितम् ।
यवक्षारं प्रयत्नेन गृह्णीयात्पाण्डुरप्रभम् ॥ ५ ॥

यवक्षारस्य गुणाः

यवक्षारो लघुः स्निग्धो दीपनः पाचनः परम् ।

गुल्मप्लीहामयहरः कफहा वातनाशनः ॥ ६ ॥
शूलानाहोदराध्मानमूत्रकृच्छ्रव्रणाशनः ।
कण्ठामयहरो हृद्यो विषदोषहर' सर' ॥ ७ ॥
अम्लपित्तहरः स्निग्धो मूत्ररेचनकारकः ।
स्वेदप्रवर्तकश्चैव कथितो रसकोविदैः ॥ ८ ॥

यवक्षारस्य मात्रा

आरभ्य रक्तित्रितयाद् दशरक्तिकमभितम् ।
यवक्षार प्रयुञ्जीत नलकालाद्यपेक्षया ॥ ९ ॥

यवक्षारस्य आमयिक प्रयोग

चूर्णितो यवजक्षारो निपीतस्तूष्णवारिणा ।
सर्पिषा वा समास्वादितो सक्लाभिधशूलनुत् ॥ १० ॥
अरण शूपर्णोपेतो यवक्षारस्तु शीलितः ।
भोजनादौ तदन्ते च दीपनः पाचनः स्मृतः ॥ ११ ॥
रोहीतकक्षोदयुतस्त्वथवा शरपुङ्खया ।
शीलितस्तु यवक्षारो गुल्मप्लीहनिकृन्तनः ॥ १२ ॥
मरीचनागरोपेतो यवजस्तूष्णवारिणा ।
द्वित्रिवारप्रयोगेण वातशूल हरेद् भृशम् ॥ १३ ॥
एलासितोपलोपेत शीलितो यवशूकजः ।
मूत्रकृच्छ्र निहन्त्याशु दाहशोथादिसयुतम् ॥ १४ ॥
गोक्षुरक्वाथसयुक्तो यवक्षारस्तु शीलित ।
शकृद्विघातज शीघ्र मूत्रकृच्छ्र विनाशयेत् ॥ १५ ॥
तक्रेण तु यथाकाम यवक्षारस्तु शीलितः ।
अश्मरी नाशयत्याशु मूत्रकृच्छ्रञ्च दारुणम् ॥ १६ ॥
शर्करासंयुतो यव्यः कूष्माण्डस्वरसेन वै ।
निपीतो नाशयत्याशु मूत्रकृच्छ्रादिकान् गदान् ॥ १७
अजमोदात्रिकटुककणोपेतो यवोद्भव' ।

क्षारस्तु भक्षणादाशु वातोत्थोदररोगनुत् ॥ १८ ॥
हिङ्गुत्रिकटुकोपेतः सक्तुरुच्च ससैन्धव ।
बीजपूररसैः पीतः प्लीहशूलहरः परम् ॥ १९ ॥
यवक्षारस्तु निम्बूकरसेन परिशीलित· ।
मूत्रल' स्वेदजनकः स्मृतश्च ज्वरनाशन ॥ २० ॥
शङ्खभस्मयुतो यव्य सव्योषश्च ससैन्धव ।
उष्णोदकेन सम्पीतो हन्ति शूल त्रिदोषजम् ॥ २१ ॥
चामकस्वरसोपेतो यवशूकसमुद्भव ।
क्षारस्तु शीलितोऽत्यर्थं बहुमूत्र निवारयेत ॥ २२ ॥
नन्मूलस्वरसेनापि तन्नियसिन नाशित ।
यवज स्वल्पकालेन त्वौपसर्गिकमेहनुत् ॥ २३ ॥
शिग्रुक्वाथयुत पीत सक्षौद्रो यवशूकज ।
पार्श्वशूल वस्तिशूल हृच्छूलञ्चैव नाशयेत् ॥ २४ ॥
यवक्षारस्तु सतत कटुतैलेन लेपित ।
कुष्ठ सिध्माभिध हन्ति मासमात्रप्रयोगत ॥ २५ ॥
यवज श्वेतपर्णाभूस्वरसेन निषवित ।
उरस्तोयाख्यहृद्रोगजनिता हन्ति वै रुजम् ॥ २६ ॥
यवजो निम्बुकद्रावैस्तिलक्षारयुतोऽशित ।
वस्तिशूल निहन्त्याशु मूत्रगंधञ्च नाशयेत् ॥ २७ ॥
शुण्ठीगोक्षुरवरुणक्वाथनिपीतो यवक्षार ।
सगुडक्षेप त्वचिराश्रियत वाताश्मरी जयति ॥ २८ ॥
कूष्माण्डस्वरसोपेत सगुड यवशूकजम् ।
शीलित नाशयेन्मूत्राघात शुक्राश्मरी तथा ॥ २९ ॥
पाषाणभेदवरुणगोक्षुरक्वाथसयुतम् ।
शीलित यवज हन्ति वस्तिशूल तथाश्मरीम् ॥ ३० ॥

मारिनाकाथमयुक्तो यवक्षारस्तु शीलितः ।
औपसर्गिकमेहोत्था बाधामाशु निनाशयेत् ॥ ३१ ॥
दशमूलकषायेण यवक्षारः ससैन्धवः ।
गुल्मं शूलं च हृद्रोगं कासं श्वासञ्च नाशयेत् ॥ ३२ ॥

अथ निम्बूकाम्लीययवजस्य नामानि

निम्बूकाम्लीययवजो निम्बूकाम्लीयशूकजः ।
निम्बूकाम्लीययवक्षारः स एव परिकीर्तितः ॥ ३३ ॥

अस्य निर्माणप्रकारः

काचपात्रे यवक्षारं चतुर्विंशतिभागिकम् ।
द्रावयेच्छीतसलिले रसज्ञः समभागिके ॥ ३४ ॥
निम्बूकाम्लं सुविमलं त्वथ विंशतिभागिकम् ।
द्रावयेदन्यपात्रस्थे जले तु समभागिके ॥ ३५ ॥
पात्रे काचादिलिप्ते[1] तु मेलयेदनयोर्द्रवम् ।
चुल्ल्यां निधायाथ पचेत्तोयांशं परिशोषयेत् ॥ ३६ ॥
घनसारप्रभं चूर्णं रसविज्ञः समाहरेत् ।
विबुधैः कीर्तितोऽयं तु निम्बूकाम्लीयशूकजः ॥ ३७ ॥

अस्य गुणाः

निम्बूकाम्लीययवजो मूत्रलः श्लेष्मभेदनः ।
ज्वरघ्नः स्वेदजनको जलोदरहरः परम् ॥ ३८ ॥
वृक्कशोथप्रशमनो विशेषाद् वृक्कशूलनुत् ।
मूत्ररोधहरः कामं तथा श्लैष्मिककासनुत् ॥ ३९ ॥

निम्बूकाम्लीययवजस्य मात्रा

आरभ्य पञ्चगुञ्जातो दशगुञ्जोन्मितं परम् ।
निम्बूकाम्लीययवजं प्राणाचार्यः प्रयोजयेत् ॥ ४० ॥

---

१—काचादिलिप्ते—आदिशब्दग्रहणात् कलईलिप्ते पित्तलपात्रेऽपीति ध्येयम् ।

अस्य आमयिक प्रयोग

तत्तद्रोगविशेषेषु सलिलाद्यनुपानत' ।
निम्बूकाम्लीययवज योजयेन्मात्रया भिषक् ॥ ४१ ॥

## अथ सर्जिक्षारस्य नामानि

स्वर्जिक स्वज्जिका स्वर्जिः स्वर्ज' स्वर्जी सुवर्चिका ।
स्वर्ज्जका स्वर्जिकाक्षार, सर्जि, सर्जी च सर्जिका ॥ ४२ ॥
सुवर्चक सुवर्चिश्च सुवर्चोऽथ सुवर्चिक ।
सुखोजिक कपोतश्च सुखवर्च सुखाजिक ॥ ४३ ॥
रुचक सृजिकाक्षार स्वर्जिक्षारस्तथैव च ।
सौवर्चल सुवर्ची च समाख्यातो भिषग्वरै ॥ ४४ ॥

सर्जिक्षारस्य निर्माणप्रकार

उष्ट्रप्रियाक्षुप दग्ध्वा यत्नात् क्षार समाहरेत् ।
तोयेऽष्टगुणिते क्षिप्त्वा भाजने निर्मले तत ॥ ४५ ॥
सप्तकृत्वः प्रयत्नेन स्रावयेत्पृथुवाससा ।
स्रावित सलिलञ्चाथ पचेद् गाढ भिषग्वर ॥ ४६ ॥
नि शेषे सलिले तत्र स्थालिकातलसंस्थितम् ।
हिमकुन्देन्दुसङ्काश सर्जिक्षार समाहरेत ॥ ४७ ॥

सर्जिक्षारस्य गुणा

सर्जिक्षार स्मृतस्तीक्ष्ण' कटुरुष्णश्च पाचन ।
समीरणहर, काम कासश्वासनिवारण ॥ ४८ ॥
अग्निदीप्तिकरश्चैव गुल्माध्माननिनाशन ।
व्रणोदरामयहर' क्रिमिघ्नश्च प्रकीर्तित ॥ ४९ ॥

---

१-उष्ट्रप्रिया-क्षुद्रदुरालभा सा हि मरुप्रदेशे विशेषेण जायते । पञ्चनद देशे 'लाना' इतिनाम्ना प्रसिद्धा । "अन्या क्षुद्रदुरालभा मरुस्था मरुसम्भवा । विशारदाऽनभक्षा स्यात्सादन्युष्ट्रभक्षिका" ॥ इति राजनिघण्टु ॥

सर्जिक्षारस्य मात्रा

आरभ्य रक्तित्रितयाद् रविरक्तिकमसितम् ।
सर्जिक्षारं प्रयुञ्जीत बलकालाद्यपेक्षया ॥ ५० ॥

सर्जिक्षारस्य आमयिक प्रयोग

कृष्णाजरणचूर्णेन सर्जिका परिशीलिता ।
रक्तित्रयमितात्यर्थं दीपनी पाचनी मता ॥ ५१ ॥
सर्जिका मधुना लीढा नासासत्त्वसमन्विता ।
वातिकं श्लैष्मिकञ्चापि कासं श्वासञ्च नाशयेत् ॥ ५२ ॥
सर्जिक्षारश्चतुर्गुञ्जः शीलितः शीतवारिणा ।
अम्लपित्तं निहन्त्याशु त्वम्लोद्गाराश्च निर्भरम् ॥ ५३ ॥
यवानिकाव्यूषणचूर्णयुक्ता
सुवर्चिका वै त्रिदिनोपयुक्ता ।
आध्मानयुक्तान् गुदमार्गजातान्
कृमीन् निहन्यात् कृमिजाश्च रोगान् ॥ ५४ ॥
केतकीक्षारसयुक्ता सकुष्ठा खलु सर्जिका ।
तैलेन पीता त्वचिराद् वातगुल्मं विनाशयेत् ॥ ५५ ॥
सर्जिक्षारो गुडोपेतः शीलितस्तूष्णवारिणा ।
नाशयेदचिरादेव गुल्मपीडां नवोत्थिताम् ॥ ५६ ॥
बीजपूरद्रवोपेता स्वर्जिका स्वल्पमात्रया ।
कर्णसिक्ता हन्ति कर्णस्रावं दाहं रुजादिकम् ॥ ५७ ॥

अथ निम्बूकाम्लीयसर्जिकाया निर्माणप्रकारः

निधनविधभागप्रमिता सर्जिकान्तु समाहरेत् ।
द्विगुणे शीतसलिले द्रावयेद्भिषजां वरः ॥ ५८ ॥
खनेत्रभागप्रमितं निम्बूकाम्लं समाहरेत् ।
तुल्ये तोये चान्यपात्रे तथैव द्रावयेद्भिषक् ॥ ५९ ॥

पात्रे काचप्रलिप्ते तु मेलयेदुभयोर्द्रवम् ।
मृद्वग्निना चुल्लिकाया पचेत्तोयञ्च शोषयेत् ॥ ६० ॥
नि'शेष सलिल ज्ञात्वा शुभ्र चूर्ण समाहरेत् ।
भिषग्वरैः समाख्याता निम्बूकाम्लीयमर्जिका ॥ ६१ ॥

निम्बूकाम्लीयसर्जिकाया गुणा

क्षीरच्छर्दिप्रशमनी वह्निमान्द्यापहारिणी ।
आध्मानशूलविष्टम्भहारिणी कान्तिकारिणी ॥ ६२ ॥
ग्राहिणी शिशिरा चैव विशेषाद् दुग्धपाचनी ।
पिपासानाशिनी चैव निम्बूकाम्लीयमर्जिका ॥ ६३ ॥

अस्या बाल्कोचिता मात्रा

गुञ्जैकत समारभ्य गुञ्जाद्वितयसम्मिताम् ।
प्राणाचार्य प्रयुञ्जीत निम्बूकाम्लीयमर्जिकाम् ॥ ६४ ॥

पूर्णमात्रा

आरभ्य पञ्चगुञ्जातो दशगुञ्जोन्मिता परम् ।
रसविद्विनियुञ्जीत निम्बूकाम्लीयमर्जिकाम् ॥ ६५ ॥

अस्या आमयिक प्रयोग

रक्तिद्वयमितेय तु निम्बूकाम्लीयसर्जिका ।
पलद्वयमितेनेह गव्यदुग्धेन योजिता ॥ ६६ ॥
निपीता प्रत्यह त्वेव निम्बूकाम्लीयमर्जिका ।
क्षीरच्छर्दिहरा चैव वह्निमान्द्यापहा मता ॥ ६७ ॥
आध्मानक्षोभशमनी त्वतीसारोदरापहा ।
कान्तिप्रदा विशेषेण देहपुष्टिकरी मता ॥ ६८ ॥
कृशाना मातृहीनाना शिशूनामल्पजीर्णिनाम् ।
क्षीर छर्दयताञ्चैतद् विशेषात्परमौषधम् ॥ ६९ ॥
निर्दिष्टमात्रयैवेह निम्बूकाम्लीयसर्जिकाम् ।
शिशुभ्य क्षीरपायिभ्य' प्रयुञ्जीत भिषग्वर ॥ ७० ॥

दुग्धपानभवेऽजीर्णे यूना त्रर्षायमामपि ।
रसवैद्यैः प्रशस्तेय निम्बूकाम्लीयसर्जिका ॥ ७१ ॥

अथ टङ्कणस्य नामानि

टङ्कणष्टङ्कनश्चैव टङ्कष्टङ्कश्च टङ्कण ।
द्रावकष्टङ्कणक्षारष्टङ्कक्षारश्च कथ्यते ॥ ७२ ॥
रङ्गक्षारस्तथा रङ्गो रङ्गदो लोहशोधन ।
लोहश्लेषणकश्चापि कीर्तितः स्वर्णशोधन. ॥ ७३ ॥
सौभाग्यञ्च सितक्षारः श्वेतक्षारश्च टङ्ककः ।
क्षारराजश्च कथितो रसायनविशारदैः ॥ ७४ ॥

टङ्कणस्य निर्मलीकरणम्

टङ्कण चूर्णित तोये तत्समद्व्यगुणे भिषक् ।
सद्राव्य वस्त्रपूतञ्च कृत्वा चुल्या निधापयेत् ॥ ७५ ॥
तीव्राग्निना पचेत्काम नीर च परिशोषयेत् ।
स्वल्पनीरावशेषे च टङ्कण निर्मल हरेत् ॥ ७६ ॥

टङ्कणस्य शोधनम्

सुचूर्णित टङ्कण तु खलु पञ्चपलोन्मितम् ।
समुज्ज्वलोदरे क्षुद्रकटाहे निन्यमेत्ततः ॥ [illegible]
चुल्लिकाया निधायाथ पचेद् दर्व्या [illegible] ।
सुपुष्पित नष्टनीर शुद्धिमायाति टङ्कण[illegible] ॥ [illegible]

अस्य गुणा

टङ्कण कटुरुष्णश्च स्तम्भी[illegible] ।
कफविश्लेषणो हृद्यो वातापस्[illegible] ॥ ७९ ॥
कासश्वासहर' काम स्याद्[illegible] ।
अग्निदीप्तिकरश्चापि श्लेष्मा[illegible]नाशनः ॥ ८०
स्त्रीपुष्पजननो रुच्यो [illegible]नाशनः ।

पित्तकृच्च समाख्यातो मूढगर्भप्रवर्तकः ॥ ८१ ॥

अन्य आमयिक प्रयोग

कटफलन्यूषणोपेतः सिंही यवजसयुतः ।
टङ्कणो मधुना लीढः कफनिश्लेषणः परम् ॥ ८२ ॥
टङ्कणस्त्र्यूषणोपेतस्तुल्यजैपालसयुतः ।
मृदुरेचनकृच्चैव सर्वोदरविनाशनः ॥ ८३ ॥
तत्त्वसङ्ख्यगुणे तोये द्रावितः कवलग्रहे ।
टङ्कः क्षतविकारोत्थ लालास्राव विनाशयेत् ॥ ८४ ॥
सतैलटङ्कणो युक्त्या मुहुर्मृद्वनघर्षितः ।
विनाशयेत् क्षत घोर दन्तवेष्टसमुत्थितम् ॥ ८५ ॥
विमलटङ्कणभागश्चूषितस्तु शनैः शनैः ।
स्वरावरोध कण्ठस्य नाशयेदतिसत्वरम् ॥ ८६ ॥
सत्र्यूषणटङ्कणस्तु मधुना परिशीलितः ।
विनाशयेत् क्षणेनैव त्वाध्मानमतिदारुणम् ॥ ८७ ॥
सरामठः सयवजटङ्कणः परिशीलितः ।
सन्ध्याद्वये सप्तदिन नाशयेत् स्नायुकामयम् ॥ ८८ ॥
लवङ्गशुण्ठीमरिचसमुपेतस्तु टङ्कणः ।
मयूरक्षारसयुक्तो भुक्तसामादिजारणः ॥ ८९ ॥
सुचूर्णितटङ्कणस्तु व्रणेषु त्वचचूर्णनात् ।
निहन्ति रुधिरस्राव सद्य एव सुदारुणम् ॥ ९० ॥
टङ्कण वह्निसम्भृष्ट मधुना सह लेपयेत् ।
मुखपाक निहन्त्याशु दाहशोथादिसयुतम् ॥ ९१ ॥
सुचूर्णित टङ्कणन्तु द्रावयेद्विमले जले ।
योनौ वस्तिप्रयोगेण पिडकादिरुज हरेत् ॥ ९२ ॥
पुरातनगुडोपेतटङ्कणस्तु विचूर्णितः ।

अवचूर्णनयोगेन प्रशस्तो व्रणरोपणे ॥ ९३ ॥
सौभाग्य वह्निसम्भृष्ट श्वेतचन्दनपङ्कयुर् ।
लेपेन नाशयत्याशु सिध्मरोग न संशयः ॥ ९४ ॥
काकमाचीद्रवोपेत टङ्कण परिशीलितम् ।
निनिहन्त्यचिरादेव चर्मि खलु सुदारुणाम् ॥ ९५ ॥

टङ्कणामृतमल्हर

सुपुष्पित टङ्कण तु तोलकद्वयममितम् ।
सिक्थतैल च निमल भानुतोलकसमितम् ॥ ९६ ॥
तोलकार्द्धमिता चैव सजिका निमलीकृता ।
विशुद्ध पुष्पकासीस सर्जिकासमभागिकम् ॥ ९७ ॥
मापद्वयमित क्षार पिप्पलत्वक्समुत्थितः ।
सर्व सम्मेल्य यत्नेन काचकुप्या निधापयेत् ॥ ९८ ॥
मतो मलहरोऽय तु टङ्कणामृतसज्ञक ।
प्रशस्यते विशेषेण कठिनव्रणदारणे ॥ ९९ ॥

टङ्कणाम्लस्य नामनि

टङ्काम्लष्टङ्कणाम्लश्च टङ्गाम्लष्टङ्गणाम्लक' ।
सुभगाम्लश्च कथितो रसतन्त्रविचक्षणै' ॥ १०० ॥

टङ्कणाम्लस्य निर्माणप्रकार

चूर्णित टङ्कचूर्णन्तु तदर्धेऽत्युष्णवारिणि ।
द्रावयित्वा प्रयत्नेन काचपात्रे निधापयेत् ॥ १०१ ॥
वह्नौ सन्ताप्य च ततो लवणद्रावक क्षिपेद् ।
द्रावप्रक्षेपणादूर्ध्व पात्र भूमौ तु विन्यसेत् ॥ १०२ ॥
शीतीभूते तु सलिल शनैः स्वल्पमपारयेत् ।
पृथक् कुर्वीत टङ्काम्ल त्वध पतितमुत्तमम् ॥ १०३
टङ्कणाम्ल पुनस्तूर्णे त्रिगुणे सलिले क्षिपन् ।

द्रावयित्वा पुनस्तद्वत् सलिलं स्वपमारयेत् ॥ १०४ ॥
समाहरेत् टङ्कणाम्लं तलस्थमतिनिर्मलम् ।
संशोष्य च ततो वैद्य प्रयोगेषु प्रयोजयेत् ॥ १०५ ॥

अस्य गुणा

टङ्कणाम्लस्तु भूतघ्नो नेत्राभिष्यन्दनाशनः ।
अग्निदग्धव्रणहरो मूत्रलः क्षतरोपण ॥ १०६ ॥
औपसर्गिकमेहार्त्थव्रणबाधानिबर्हण ।
श्वेतासृग्दरहृच्चैव श्रुतिस्रावहरो मत ॥ १०७ ॥

टङ्कणाम्लस्य मात्रा

आरभ्य रक्तिद्वितयाद्रक्तिकाष्टकसंमितम् ।
टङ्कणाम्लं प्रयुञ्जीत बलकालाद्यपेक्षया ॥ १०८ ॥

टङ्कणाम्लस्य आमयिक प्रयोग

गुञ्जाष्टटङ्कणाम्लस्तु वारिणा परिशीलित ।
पूतिगन्धयुतं मूत्रसारं नाशयति द्रुतम् ॥ १०९ ॥

टङ्कणाम्लो गुञ्जमितो मधुनाऽष्टगुणेन तु ।
माषोन्मितेन धौतेन नवनीतेन योजितम् ॥ ११० ॥
स्तनक्षतं निहन्त्याशु तथा कर्णविचर्चिकाम् ।
अग्निदग्धव्रणश्चैव विविधानि व्रणानि च ॥ १११ ॥

टङ्कणाम्लमलहर

सिक्थतैलं सुनिर्मलं ग्रहतोलकसंमितम् ।
तोलकसंमितं चैव टङ्कणाम्लकमुत्तमम् ॥ ११२ ॥
सम्मेल्य खल्वे यत्नेन काचकुप्यां तु विन्यसेत् ।
सतो मलहरोऽयं तु टङ्कणाम्लसमाह्वय ॥ ११३ ॥

अस्य गुणा

टङ्काम्लीयो मलहरो विशेषाद् व्रणशोधन ।
अग्निदग्धव्रणहरो भूतघ्नश्च पर स्मृत ॥ ११४ ॥

### टङ्कणाम्लद्रवस्य निर्माणप्रकार

दशगुञ्जापरिमितं टङ्कणाम्लं समाहरेत् ।
क्षिपेत् परिस्रुते तोये पञ्चतोलकसम्मिते ॥ ११५ ॥
निद्रुतं सपिधानाया काचकूप्या तु निन्यसेत् ।
टङ्कणाम्लद्रवोऽयं तु नाम्नाख्यातो भिषग्वरै ॥ ११६ ॥

### अस्य आमयिक प्रयोग

टङ्कणाम्लद्रवोऽयं तु क्षालने विनियोजित' ।
विनाशयेच्चिरोद्भूतं नेत्राभिष्यन्दमुद्धतम् ॥ ११७ ॥
उक्तमानकृतेनैव टङ्कणाम्लद्रवेण तु ।
प्रत्यह विधिना दद्यात् बस्तिमुत्तरपूर्विकाम् ॥ ११८ ॥
इत्थ बस्तिप्रयोगेण दिनसप्तकमात्रकम् ।
श्वेतप्रदरजा बाधा चिरजापि विनश्यति ॥ ११९ ॥
सुभगाम्लद्रवोऽयन्तु योजित. कर्णधावने ।
मान्द्र व्रण तु चिरज कर्णस्रावञ्च नाशयेत् ॥ १२० ॥
उक्तमानकृतेनैव टङ्कणाम्लद्रवेण तु ।
नासाप्रक्षालनाद्युक्त्या पीनसात्परिमुच्यते ॥ १२१ ॥
भागिकष्टङ्कणाम्लस्तु जलञ्च शतभागिकम् ।
लिङ्गे बस्तिप्रयोगेण बस्तिशोथं व्यपोहति ॥ १२२ ॥

इति क्षारत्रिकविज्ञानीयो नाम त्रयोदशस्तरङ्ग

## अथ क्षारविशेषादिविज्ञानीयश्चतुर्दशस्तरङ्गः

### अथ नरसारस्य नामानि

नरसारो नृयसारस्तथैव नरसादरः ।
नृसादरो नृसारश्च नरसारश्च कीर्तितः ॥ १ ॥
किट्टक्षारो निगदितस्तथैव नरसादरः ।
चुलिकालवणं ख्यातं चुल्लिकालवणञ्च तत् ॥ २ ॥

### नरसादरस्य शोधनम्

नरसारन्तु सलिले त्रिगुणे द्रावयेद्भिषक् ।
वस्त्रपूतं ततः कृत्वा भाजने स्थापयेच्चतत् ॥ ३ ॥
चुल्लिकाया निधायाथ पचेत्तीव्राग्निना भृशम् ।
जले शुष्के तलस्थञ्च नृसारं निर्मलं हरेत् ॥ ४ ॥

### नरसादरस्य गुणाः

नरसारस्त्रिदोषघ्नः स्निग्धः सूक्ष्मो लघुस्तथा ।
पाचकः सारकस्तीक्ष्णो जठराग्निप्रदीपनः ॥ ५ ॥
उष्णः प्लीहप्रशमनो मांसाजीर्णनिवारणः ।
गुल्माध्मानप्रहरणः कफविश्लेषणः परम् ॥ ६ ॥
वृश्चिकोरगविषघ्नश्च लोहद्रावणकस्तथा ।
हृदामयहरो नेत्र्यः श्वित्रकुष्ठहरस्तथा ॥ ७ ॥

### नरसादरस्य मात्रा

द्विगुञ्जतश्चाष्टगुञ्जमितं तु नरसादरम् ।
प्राणाचार्यः प्रयुञ्जीत बलकालाद्यपेक्षया ॥ ८ ॥

### नरसादरस्य आमयिकः प्रयोगः

जरणं यूषणोपेतो नरसारो विशोधितः ।
दिनसप्तकमात्रेण जाठराग्निप्रदीपनः ॥ ९ ॥
रामठं यूषणोपेतो नरसारो विशोधितः ।

प्लीहोदरं निहन्त्याशु चिरजञ्चातिदारुणम् ॥ १० ॥
शुक्तिकाक्षारसंयुक्तो निर्मलो नवसादरः ।
प्लीहानं नाशयत्याशु यकृद्दोषं तथैव च ॥ ११ ॥
मरीचसैन्धवरमिमियुक्तः शुद्धो नृसादरः ।
आध्मानाजीर्णशमनो भुक्तमांसादिजारणः ॥ १२ ॥
अनन्तमूलकथितनीरेण नवसादरः ।
निपीतो नियमादाशु यकृद्वृद्धिहरो मतः ॥ १३ ॥
मधुयष्टिवचाव्याघ्रीकषायेण नृसादरः ।
सेवितो ह्यचिरादेव कफविश्लेषणः परम् ॥ १४ ॥
यकृद्दोषसमुद्भूते जलोदरगदे भिषक् ।
अपामार्गकषायेण नरसारं प्रयोजयेत् ॥ १५ ॥
नृसारं काञ्जिकेनेह निपीतः स्वल्पमात्रया ।
रक्तस्रावं फुप्फुसोत्थं द्रुतमेव निरोधयेत् ॥ १६ ॥
नृसारं तोलकमितं दशतोलकसम्मिते ।
जले सद्राव्य तद्धारा वस्त्रमार्द्रीकृतं ततः ॥ १७ ॥
व्रणशोथे निबध्नीयाज्ज्वरशूलादिसंयुते ।
दिनसप्तकमात्रेण व्रणशोथं निवारयेत् ॥ १८ ॥
यवक्षारयुतो नव्यसारो रक्तित्रयोन्मितः ।
शारिवाक्वथितैः पीतो व्रणमेहं निवारयेत् ॥ १९ ॥

नवसारस्य सत्त्वपातनम्

निर्मलं कठिनीचूर्णं तोलकत्रितयोन्मितम् ।
विशुद्धं नवसारञ्च चतुस्तोलकसम्मितम् ॥ २० ॥
खल्वे सम्पेष्य यन्त्रे तु पचेड्डमरुकाभिधे ।
नृसारसत्त्वं विशदमूर्ध्वलग्नं समाहरेत् ॥ २१ ॥

अस्य गुणाः

नृसारसत्त्वं कथितं त्वम्लपित्तहरं परम् ।
कफविश्लेषणकरं हृद्दौर्बल्यविनाशनम् ॥ २२ ॥
वामकं मारकञ्चापि तथा फुफ्फुसशोथहृत् ।
पाचनं दीपनञ्चैव प्रोक्तं मूर्च्छाहरं मतम् ॥ २३ ॥

अस्य मात्रा

गुञ्जैकतः समारभ्य गुञ्जापञ्चकसम्मिता ।
नरसादरसत्वस्य मात्रा शस्ता भिषग्वरैः ॥ २४ ॥
सपादमाषकमिता मात्रा वमनकारिणी ।
नरसादरसत्वस्य भिषग्भिः परिकीर्तिता ॥ २५ ॥

अथ सत्वस्य प्रयोगविधिः

नव्यसारभवं सत्त्वं सलिले तु परिस्रुते ।
द्रावयित्वाऽथ निर्दिष्टरोगेषु तु नियोजयेत् ॥ २६ ॥

अथ मोरकस्य नामानि

मोरकं मोरकञ्चैव मोरं मोरकं मोरका ।
सूर्यक्षारोऽथ मूत्रक्षारो वह्निक्षारश्च कीर्तितः ॥ २७ ॥

मोरकस्य गुणाः

मोरकः कटुकस्तीक्ष्णो विशेषाद्धृद्वणः सरः ।
वह्निप्रदीपकोऽप्युष्णस्त्वाग्नेयास्त्रार्थसिद्धिकृत् ॥ २८ ॥

मोरकस्य निर्मलीकरणम्

पलोन्मितं मोरकन्तु शीतले सलिले भिषक् ।
चतुष्पलमिते क्षिप्त्वा वस्त्रपूतं पचेत्ततः ॥ २९ ॥
स्वल्पशेषं जलं ज्ञात्वा पात्रमुत्तारयेत्ततः ।
विमलं चूर्णमङ्काभं मोरकन्तु समाहरेत् ॥ ३० ॥
स्वल्पशेषेऽपि सलिले यदि वह्निः प्रदीयते ।
जले निःशेषतां याते मोरकं दह्यते स्वयम् ॥ ३१ ॥

तस्माद्रसायनाचार्यः सावधानतया सदा ।
सोरकं निर्मलीकुर्यान्न स्याद् द्रव्यक्षतिर्यथा ॥ ३२ ॥

सोरकस्य सुकरं निर्मलीकरणम्

अत्युष्णं सलिलं स्वच्छं सोरकस्यार्द्धभागिकम् ।
आदाय विमले पात्रे निक्षिपेत्तु भिषग्वरः ॥ ३३ ॥
निक्षिप्य सोरकं वस्त्रपूतञ्च शीततां नयेत् ।
शलाकाकारतां यातं सोरकन्तु समाहरेत् ॥ ३४ ॥

अथ सोरकस्य शोधनम्

सोरकं चूर्णितं खल्वे त्वेलातोयेन भावयेत् ।
त्रिधारं भावनादेवं शुद्धिमायात्यनुत्तमाम् ॥ ३५ ॥

शुद्धसोरकस्य गुणाः

सोरकः कटुकस्तीक्ष्णो विदग्धाजीर्णनाशनः ।
अश्मरीमूत्रकृच्छ्राग्निमान्द्यपाण्डुप्रमेहनुत् ॥ ३६ ॥

सोरकस्य मात्रा

द्विगुञ्जतः समारभ्य दशगुञ्जोन्मितं परम् ।
सोरकं विनियुञ्जीत बलकालाद्यपेक्षया ॥ ३७ ॥

सोरकस्य आमयिकः प्रयोगः

गोक्षुरस्य कषायेण शोधितः सोरकोऽशितः ।
मूत्रकृच्छ्रं निहन्त्याशु त्वश्मरीं दारुणामपि ॥ ३८ ॥
स्फटिकारिकयोपेतः सोरकः परिशीलितः ।
आध्मानं मूत्रकृच्छ्रं च नाशयेदाशु निर्भरम् ॥ ३९ ॥
रविमूलस्य चूर्णेन तण्डुलक्वथितेन वा ।
निपीतः सोरकः काममामवातं विनाशयेत् ॥ ४० ॥
निडाजमोदमिशिकाधात्रीचूर्णेन सोरकः ।
भक्षितो निम्बुनीरेण विदग्धाजीर्णकं जयेत् ॥ ४१ ॥

सोरक द्रावयेत्तोये तेन सिञ्चेत्तु कागदम् ।
तद्धूमपानयोगेन श्वासमाशु विनश्यति ॥ ४२ ॥
सुगन्धसारकोपेत सोरक द्रावयेत् जले ।
तत्सिक्तवस्त्र शीर्षस्थ प्रलाप ज्वरज जयेत् ॥ ४३ ॥
ससित सोरक चाग गुञ्जापञ्चकसमितम् ।
ज्वरदाहतृषार्तस्तु रोगिभिः परिशीलितम ॥ ४४ ॥
जनयेत्स्वेदमत्यर्थं मूत्ररोधञ्च नाशयेत् ।
दाहतृषादिकञ्चापि हत्वा काम ज्वर जयेत् ॥ ४५ ॥
सोरक नटपर्णञ्च सपिष्टन्तु शिलातले ।
वस्तिप्रदेशे लेपेन मूत्ररोध विनाशयेत् ॥ ४६ ॥

अथ सोरकद्रावकस्य नामानि

कथित सोरकद्राव॰ सोरकद्रावकस्तथा ।
सोराद्रावश्च गदितो रसशास्त्रविशारदै ॥ ४७ ॥

सोरकद्रावस्य निर्माणप्रकार

विशोधिते सोरके तु सोरकस्यार्द्धभागिकम् ।
गलिद्रावन्तु निक्षिप्य काचकूप्या निधापयेत् ॥ ४८ ॥
सुराप्रदीपे विन्यस्य नलिका काचनिर्मिताम ।
तोयस्थकाचघटिकालग्ना तस्या निवेशयेत् ॥ ४९ ॥
पचेन्मन्दानलेनैव ततस्तिर्यद निपातितम ।
सञ्चित वाष्परूपेण तोयाभ द्रावक हरेत् ॥ ५० ॥

सजलसोरकद्रावस्य निर्माणप्रकार

षड्भागसमित तत्र सोरकद्रावक हरेत् ।
काचपात्रे निधायाथ क्षिपेत्तत्र शनै' शनै ॥ ५१ ॥
परिस्रुतञ्च सलिल पञ्चविंशतिभागिकम् ।
सजल सोरकद्रावो जायते खलु शोभन ॥ ५२ ॥

सोरकद्रावकस्य गुणा

मोरकद्रावकः प्रोक्तो वह्निवीर्यः प्रदाहक' ।
निभिन्नदुष्टविक्लिन्नव्रणशोधनरोपणः ॥ ५३ ॥
फिरङ्गस्यादिमे घोरे व्रणे च परिशस्यते ।
मर्पकुक्कुरकादीना विषदोषनिबर्हण' ॥ ५४ ॥

सजलसोरकद्रावस्य गुणा

मोरकद्रावको वल्यो यकृद्दोषनिवर्हणः ।
वह्निमान्द्यहर' काम मूत्रदोषनिषूदन ॥ ५५ ॥
मधुमेहे प्लीहवृद्धौ चोपदशिकविकृतौ ।
कामलाया पाण्डुरोगे विशेषेण प्रशस्यते ॥ ५६ ॥
विनाशयेच्चिरोद्भूत काम मातिकफोद्गमम् ।
अतीसारहरश्चैव पित्तघ्नश्च प्रकीर्तितः ॥ ५७ ॥

सजलसोरकद्रावकस्य मात्रा

आरभ्य शरबिन्दुभ्यस्त्रिंशद्विन्दुमितं परम् ।
मजल मोरकद्राव नियुञ्जीत पलाम्बुना ॥ ५८ ॥

अथ सामान्येन क्षारनिर्माणप्रकार

क्षारवृक्षस्य काष्ठानि दग्ध्वा भूतिं समाहरेत् ।
निर्मले भाजने न्यस्य सलिलन्तु चतुर्गुणम् ॥ ५९ ॥
प्रक्षिप्य मर्दयेत्सम्यक् याममात्र भिषग्वरः ।
त्रिगुणीकृतवस्त्रेण स्रावयेत्सलिल तत ॥ ६० ॥
स्रावित सलिलञ्चाथ वह्नौ सन्तापयेत्तत' ।
नि शेष सलिल ज्ञात्वा निर्मल क्षारमाहरेत् ॥ ६१ ॥

सामान्येन क्षाराणा गुणा

क्षारास्तीक्ष्णा महोष्णाश्च दाहकर्मकरा परम् ।
गुल्मार्शोग्रहणीप्लीहमूत्रकृच्छ्राश्मरीहरा ॥ ६२ ॥

क्रमिमा पाचनार्थेन दारणाश्च विसर्पिणः ।
शोधना रोपणाश्चैव मूत्रलाश्च प्रकीर्तिताः ॥ ६३ ॥

नामान्येन क्षाराणा मात्रा

द्विगुञ्जात समारभ्य रक्तिकाष्टकसम्मितान् ।
क्षारास्तु विनियुञ्जीत साधारणतया भिषक् ॥ ६४ ॥

अथ अपामार्गक्षारस्य नामानि

अपामार्गक्षार उक्तो मयूरक्षारकस्तथा ।
खरमञ्जरिकाक्षारः किणिक्षारश्च कीर्तित ॥ ६५ ॥

अस्य गुणा

खरमञ्जरिकाक्षारस्तीक्ष्ण श्वासनिबर्हण ।
गुल्मशूलादिरोगघ्न काम बाधिर्यनाशन ॥ ६६ ॥

अपामार्गक्षारस्य अनुभविक प्रयोग

मयूरक्षारकः काम मधुना परिशीलित ।
विनाशयेच्चिरोद्भूत श्वास परमदारुणम् ॥ ६७ ॥

खरमञ्जरिकाक्षारचूर्णेन परिसाधितम् ।
तैल कर्णे निषेकेण बाधिर्यं त्वाशु नाशयेत् ॥ ६८ ॥
सन्तूपण किणिक्षारो यवानीचूर्णसयुत ।
निहन्ति शूल त्वचिराद्ध्मानञ्चातिदारुणम् ॥ ६९ ॥
खरमञ्जरिकाक्षार सताल परिलेपनात् ।
लिङ्गार्शस निहन्त्याशु चिरोद्भूत सुदारुणम् ॥ ७० ॥
अपामार्गक्षारचूर्णं सशिल परिलेपितम् ।
गोमूत्रेणाचिरेणैव श्वित्रकुष्ठ विनाशयत् ॥ ७१ ॥
अपामार्गक्षारचूर्णं यवाग्रजसमन्वितम् ।
शीलित नाशयेदाशु मूत्रकृच्छ्र तथाश्मरीम् ॥ ७२ ॥
खरमञ्जरिकाक्षार सन्योषश्च ससैन्धव ।

शीलितो नाशयेद् गुल्मं प्लीहानश्चातिदारुणम् ॥ ७३ ॥

### अथ अर्कक्षारस्य नामानि

अर्कक्षारो रविक्षारो भास्करक्षारकस्तथा ।
सज्जेमक्षारकश्चाथ मित्रक्षारश्च कीर्तितः ॥ ७४ ॥

#### अर्कक्षारस्य गुणा

अर्कक्षार॰ स्मृतस्तीक्ष्णो गुल्मप्लीहादिनाशन॰ ।
पाचनो दीपनश्चापि कासश्वासप्रणाशन॰ ॥ ७५ ॥

#### अर्कक्षारस्य आमयिक प्रयोग

अर्कक्षारः सलवणो नरसारसमन्वितः ।
अजीर्णं नाशयेदाशु जाठराग्निश्च दीपयेत् ॥ ७६ ॥
सैन्धवं त्वर्कपत्रं त्वन्तर्धूमं दहेद्भिषक् ।
क्षारः स मस्तुना पीतो गुल्मप्लीहोदराञ्जयेत् ॥ ७७ ॥
सत्र्यूषणो रविक्षारो मधुना परिशीलित॰ ।
विनाशयेद्विशेषेण कास श्वासश्च दारुणम् ॥ ७८ ॥
मित्रक्षारः सलवणो यावशूकजसयुत॰ ।
शीलितो ह्यचिरादेव यकृद्वृद्धिहरो मत॰ ॥ ७६ ॥

### अथ तिलक्षारस्य नामानि

तिलक्षार समाख्यातस्तिलभूतिस्तथैव च ।
होमधान्यविभूतिश्च पवित्रक्षारकस्तथा ॥ ८० ॥

#### तिलक्षारस्य गुणा

तिलक्षार स्मृतस्तीक्ष्णो मूत्ररोधनिबर्हण ।
अश्मरीनाशनश्चैव प्लीहघ्नो व्रणदारण॰ ॥ ८१ ॥

#### अस्य आमयिक प्रयोग

सत्र्यूषणस्तिलक्षार सैन्धवेन समन्वित॰ ।
शीलितो ह्यचिरादेव जाठराग्निप्रदीपन॰ ॥ ८२ ॥
अङ्कोलक्षारसयुक्तस्तिलक्षारस्तु शीलितः ।

मधुनान्ते तोयपानान्मूत्ररोधं विनाशयेत् ॥ ८३ ॥
तिलक्षारः सयवजः शीलितो निम्बुकाम्बुना ।
वृक्कशूलं निहन्त्याशु भास्करस्तिमिरं यथा ॥ ८४ ॥
तिलक्षारः सयवजः कदलीक्षारमिश्रितः ।
शीलितो मधुना काममश्मरीमाशु नाशयेत् ॥ ८५ ।
तिलभूतिर्माषमिता रुचकेन समन्विता ।
तक्रेण मधुना वापि शीलिता त्वश्मरीं जयेत् ॥ ८६
होमधान्यविभूतिस्तु धात्रीक्षारसमन्विता ।
गोक्षुरक्वाथसंयुक्ता नाशयेन्मूत्रशर्कराम् ॥ ८७ ॥
पवित्रक्षारचूर्णन्तु यवजेन प्रलेपितम् ।
व्रणशोथे करोत्याशु दारणं परमोत्तमम् ॥ ८८ ॥
होमधान्यविभूतिस्तु शीलिता माषकोन्मिता ।
मांसाशनभवाजीर्णनाशिनी परिकीर्तिता ॥ ८९ ॥
शरपुङ्खक्षारयुतस्तिलक्षारस्तु शीलितः ।
माषकप्रमितः तूर्णं गुल्ममुन्मूलयेद्ध्रुवम् ॥ ९० ॥

### अथ स्नुहीक्षारस्य नामानि

स्नुहिक्षारः स्नुहीक्षारः स्नुक्क्षारश्च तथा मतः ।
वज्रक्षारोऽथ मेहुण्डक्षारश्च परिकीर्तितः ॥ ९१ ॥

#### अस्य गुणाः

स्नुहीक्षारः स्मृतस्तीक्ष्णः सर्वोदरविनाशनः ।
गुल्मप्रशमनो वह्निदीपनः शोफनाशनः ॥ ९२ ॥
विषूचिकाहरोऽजीर्णनाशनः शूलसूदनः ।
यकृद्दोषप्रशमनः श्वासातङ्कप्रभञ्जनः ॥ ९३ ॥

#### अस्य आमयिकः प्रयोगः

स्नुहीक्षारः शङ्खभूतिसर्जिकायवजान्वितः ।

निषूचिका निहन्त्याशु त्वजीर्णञ्चातिदारुणम् ॥ ६४ ॥
चिरोत्थिताना गुल्माना पञ्चता पञ्चता नयेत् ।
ग्रहणी नाशयेदाशु तथा शूलञ्च दारुणम् ॥ ६५ ॥
स्नुहीक्षारस्त्रिलवणक्षारत्रिकसमन्वितः ।
निहन्ति शोफ प्लीहानमुदराणि च नाशयेत् ॥ ९६ ॥
मञ्यूषण' स्नुहीक्षारो मधुना परिशीलित' ।
नाशयेदचिरादेव श्वास परमदारुणम् ॥ ९७ ॥
स्नुहीक्षारो यरोपेत सैन्धवाग्निसमन्वित ।
निहन्ति वह्निमान्द्य तु यकृत्प्लीहोदराणि च ॥ ६८ ॥

अथ पलाशक्षारस्य नामानि

पलाशक्षारकश्चैव किंशुकक्षारकस्तथा ।
पर्णक्षारश्च कथितस्त्रिपर्णक्षारकस्तथा ॥ ६६ ॥

अस्य गुणा

पर्णक्षारोऽग्निजननो गुल्मप्लीहादिनाशन' ।
यकृद्वृद्धिप्रशमनो मूत्रकृच्छ्राश्मरीहर ॥ १०० ॥

अस्य आमयिक प्रयोग

पर्णक्षारस्तु मधुना कणाचूर्णसमन्वित ।
वह्निदीप्तिकर काम गुल्मप्लीहोदरापह ॥ १०१ ॥
पलाशक्षारसलिलैर्गव्यमाज्य विपाचितम् ।
शीलित नाशयत्याशु रक्तगुल्म सुदारुणम् ॥ १०२ ॥
कदलीक्षारसयुक्त' पर्णक्षारस्तु शीलित ।
अश्मरीं नाशयत्याशु दारुण मूत्रशर्कराम् ॥ १०३ ॥
किंशुकक्षारतोयेन घृत गव्य विपाचितम् ।
निहन्ति शुक्रदोषन्तु ग्रन्थिभूतामिध द्रुतम् ॥ १०४ ॥
यवक्षारेणोयुक्त क्षार खलु पलाशज ।

निषेवितो निहन्त्याशु प्लीहानमतिदारुणम् ॥ १०५ ॥
मयूरक्षारसंयुक्तो पर्णक्षारस्तु शीलितः ।
अश्मरीं मुकठिनां भूत प्रशमयत्यलम् ॥ १०६ ॥

अथ चिञ्चाक्षारस्य नामानि

चिञ्चाक्षारोऽम्लिकाक्षारश्चिञ्चिकाक्षारकस्तथा ।
अम्लीकाक्षारकश्चैव चिञ्चाभूतिश्च कथ्यते ॥ १०७ ॥
चिञ्चिकाभसितञ्चैव चिञ्चाभस्म तथैव च
अम्लिकाभसितञ्चापि तिन्तिडीभसितं तथा ॥ १०८ ॥

अस्य गुणाः

अम्लिकाक्षारकः प्रोक्तो वह्निमान्द्यविनाशनः ।
शूलगुल्महरश्चापि मूत्रकृच्छ्राश्मरीहरः ॥ १०९ ॥

अस्य आमयिकः प्रयोगः

स्नुगर्कक्षारसहितो मृतशङ्खसमन्वितः ।
चिञ्चाक्षारोऽशनादाशु नाशयेत्तु विषूचिकाम् ॥ ११० ॥
शूलमुन्मूलयेत्काम वह्निमान्द्यविनाशनः ।
अजीर्णं क्षपयत्येव गुल्मबाधां विशेषतः ॥ १११ ॥
षड्ूषणसंयुक्तो लवण यूषणान्वितः ।
शीलितस्त्वम्लिकाक्षारो हन्द् ग्रहणिकारुजम् ॥ ११२ ॥
अरोचकं निहन्त्याशु तथा शूलं सुदारुणम् ।
आध्मानं पक्तिशूलञ्च विष्टब्धाजीर्णकं तथा ॥ ११३ ॥
चिञ्चिकाभसितं द्राक्षाशर्कराभ्यां समन्वितम् ।
अवलीढं विशेषेण त्वरोचकहरं परम् ॥ ११४ ॥
अम्लिकाभसितं व्योषचूर्णेन परिशीलितम् ।
वह्निमान्द्यं निहन्त्याशु वाताजीर्णञ्च दारुणम् ॥ ११५ ॥
चिञ्चाक्षारं समरिचं शङ्खभूतिसमन्वितं ।

अतिसारे ग्रहण्याञ्च शिशूनान्तु प्रशस्यते ॥ ११६ ॥

अथ सैन्धवस्य नामानि

सैन्धवं सिन्धुलवणं सिन्धूत्थं सिन्धुदेशजम् ।
सिन्धूपलं सिन्धुभवं सैन्धवं सिन्धुसन्थजम् ॥ ११७ ॥
शीतशीरं शीतशिवं नादेयञ्च शिलात्मकम् ।
शिवं सितशिवञ्चैव नशिरञ्च निगद्यते ॥ ११८ ॥

अस्य गुणाः

सैन्धवं लवणं हृद्यं वृष्यं नेत्र्यं रुचिप्रदम् ।
पाचनं दीपनञ्चैव त्रिदोषशमनं परम् ॥ ११९ ॥
व्रणदोषहरं शीतं स्निग्धं लघु विबन्धजित् ।
मृदुवीर्यं पित्तहरं विबुधैः परिकीर्त्तितम् ॥ १२० ॥

सैन्धवस्य उत्पत्तिस्थानम्

पञ्चाम्बुवर्त्तिनः सिन्धोः पूर्वभागे विशेषतः ।
शिलोच्चयखनौ सिन्धूपलं समुपलभ्यते ॥ १२१ ॥

अस्य आमयिक प्रयोगः

सैन्धवं खलु धत्तूरशिफया परिपेषितम् ।
उष्णीकृत्य प्रलिप्तं तु व्रणशोथहरं परम् ॥ १२२ ॥

नारिकेललवणं

सुविपक्वं समलिलं नारिकेलं समाहरेत् ।
अपनीय जटां शुक्तिपत्रेण स्फोटयेद्दृढम् ॥ १२३ ॥
जातरन्ध्रान्नारिकेलात्क्षीरं सर्वं परित्यजेत् ।
सुचूर्णितं सैन्धवन्तु दशतोलकसम्मितम् ॥ १२४ ॥
निक्षिप्य रन्ध्रमार्गेण ततो रन्ध्रं निरोधयेत् ।
वसनेन समाच्छाद्य परितो लेपयेन्मृदा ॥ १२५ ॥
रौद्रयन्त्रे विशोष्याथ पुटयेत्तु महापुटे ।

तद्गोलकं स्वाङ्गशीतं प्रयत्नेन समाहरेत् ॥ १२६ ॥
सैन्धवं कज्जलीवर्णं कपालाशोज्झितं हरेत् ।
लवणो नारिकेलाख्यः समाख्यातो भिषग्वरैः ॥ १२७ ॥

अस्य गुणाः

लवणो नारिकेलाख्यः पाचनः पित्तनाशनः ।
अम्लपित्तहरः कामं पित्तशोषजशूलनुत् ॥ १२८ ॥
वातजं पित्तजं वापि श्लेष्मजं सन्निपातजम् ।
शूलञ्च परिणामोत्थं नाशयेदविकल्पतः ॥ १२९ ॥

अस्य आमयिकः प्रयोगः

लवणो नारिकेलाख्यो माषकद्वयसम्मितः ।
तृणारवनजोपेतः पित्तशोषजशूलनुत् ॥ १३० ॥

अर्कलवणम्

गुडूणितं सैन्धवन्तु समार्कदलसंयुतम् ।
अन्तर्धूमं पचेद्धीमान् स्वाङ्गशीतमथोद्धरेत् ॥ १३१ ॥
जायते खल्वसम्पिष्टं लवणं मलिनप्रभम् ।
आयुर्वेदाचार्यवर्यैर्नाम्नार्कलवणं मतम् ॥ १३२ ॥

अस्य गुणाः

यकृत्प्लीहोदरहरं रुचिरं मलभेदनम् ।
विशेषतः समाख्यातं तन्त्रेऽर्कलवणं बुधैः ॥ १३३ ॥

अस्य आमयिकः प्रयोगः

माषकार्द्धमितं त्वर्कलवणं कोष्णवारिणा ।
पथ्याशिभिस्तु पुरुषैः सततं परिशीलितम् ॥ १३४ ॥
वातिकं श्लैष्मिकं वापि सज्वरं वापि निर्ज्वरम् ।
सकोष्ठबद्धं व्यथया चीत्कारयुतयापि वा ॥ १३५ ॥

---

१-पित्ताशयगतं पित्तं शुष्कं मारुतकोपतः ।
कुर्यात् तृष्णादिकं घोरं पित्तशोषं तदुच्यते ॥

सयुक्त कठिनस्पर्शं ह्यतीसारादिवर्जितम् ।
यकृद्दाल्युदर नूत्न प्लीहोदरमल हरेत् ॥ १३६ ॥

## अथ सामुद्रलवणस्य नामानि

सामुद्र लवण ख्यात समुद्रजलसम्भवम् ।
समुद्रज सागरज मत सामुद्रकञ्च तत् ॥ १३७ ॥

अस्य गुणा

समुद्रलवण हृद्य रुच्य स्निग्धश्च दीपनम् ।
सक्षार भेदि वातघ्न नात्युष्ण नातिशीतलम् ॥ १३८ ॥

सामुद्रलवणस्य परिचय

समुद्रजलसशोषाल्लवण जायते तु यत् ।
सामुद्र लवण तत्तु समाख्यात भिषग्वरै ॥ १३९ ॥

## अथ बिडलवणस्य नामानि

बिड कृत्रिमकञ्चैव सुपाक्य द्राविडन्तथा ।
आसुरञ्च विटञ्चाथ धूर्तञ्च कृतक मतम् ॥ १४० ॥

अस्य गुणा

बिड रुच्यञ्च तीक्ष्णोष्ण सूक्ष्म लघु च दीपनम् ।
सक्षार हृद्यमूर्ध्वाध' कफवातानुलोमनम् ॥ १४१ ॥
अजीर्णानाहविष्टम्भहर शूलनिबन्धजित् ।
हृद्गौरवप्रशमन वातघ्नञ्च प्रकीर्तितम् ॥ १४२ ॥

बिडलवणस्य प्रथमो निर्माणप्रकार

यस्त्रिसेरकमित लवण रोमकाभिधम् ।
पञ्चाशत्तोलकमित चूर्णमामलकोद्भवम् ॥ १४३ ॥
समादाय भिषग्वर्यस्तत' सम्मेलयेद्भृशम् ।
तत' स्वल्पस्य चूर्णस्य चतुर्थांश विधानवित् ॥ १४४ ॥
मृल्लिप्ताया क्षुद्रकण्ठ्या हण्डिकाया तु विन्यसेत् ।

चुल्लिकाया निधायाथ विधानज्ञो भिषग्वरः ॥ १४५ ॥
प्रज्वाल्य तीव्रज्वलन पचेद्धीरोऽद्य भिषर ।
हण्डिकाया मध्यभागो यावद्याति रक्तताम् ॥ १४६ ॥
भिषेत्तत क्रमेणेह शेष चूर्ण भिषग्वर ।
प्रखरेणानलेनाथ यामद्वितयमात्रकम् ॥ १४७ ॥
विपाचयेदविरत रसतन्त्रविधानवित् ।
स्वत शीते च लवण विडाख्यन्तु समाहरेत् ॥ १४८ ॥
चतुर्विंशतिमद्गर्याकर्षकप्रमित शुभम् ।
तत सरपु योगेषु योजयेद्भिषजा वर ॥ १४९ ॥

विडलवणस्य द्वितीयो निर्माणप्रकार

अशीतितोलकमित लवण रोमकाभिधम् ।
चूर्णमामलकोद्भूत दशतोलकसम्मितम् ॥ १५० ॥
मृल्लिप्तहण्डिकायां तु निन्यस्य प्रखराग्निना ।
यामद्वय निपाच्याथ स्वाङ्गशीतमथोद्धरेत् ॥ १५१ ॥
विडाभिध तु लवण रसतन्त्रविधानवित् ।
अनुभूतोऽतिसुगम प्रकारोयम्प्रकाशित ॥ १५२ ॥

अथ सौवर्चललवणस्य नामानि

सौवर्चल च रुचक रुच्यक हृद्यगन्धकम् ।
अक्षञ्च कृष्णलवण च काललवण स्मृतम् ॥ १५३ ॥

अस्य गुणा

सौवर्चल मत हृद्य पाचन दीपन परम् ।
रोचन भेदनञ्चापि विशद वातनाशनम् ॥ १५४ ॥
सस्नेह लघु गुल्मघ्न तूर्ध्ववातानुलोमनम् ।
विबन्धानाहशूलघ्न जन्त्वरोचकनाशनम् ॥ १५५ ॥

सौवर्चललवणस्य निर्माणप्रकार

विशुद्ध स्वर्जिकाक्षार चतुष्पलमित हरेत् ।

द्रावयेदथ यत्नेन तोयेऽष्टपलसम्मिते ॥ १५६ ॥
यातीह द्रवतां यावान् तावन्त सैन्धवं ततः
मर्जिकाया द्रवे यत्नान्निक्षिपेद्भिषजां वरः ॥ १५७ ॥
ततः सुविमले पात्रे न्यस्य चुल्ल्यां निधापयेत् ।
पचेत्तीव्राग्निना कामं तोयञ्च परिशोषयेत् ॥ १५८ ॥
निःशेषं सलिलं ज्ञात्वा किञ्चित्कालं पुनः पचेत् ।
पाकशेषे च लवणं रुचकाख्यं समाहरेत् ॥ १५९ ॥

अथ रोमकलवणस्य नामानि

रोमकं रोमलवणं रौमञ्च रौमकं मतम् ।
शाकम्भरीयञ्च गडं साम्भरं सम्भरोद्भवम् ॥ १६० ॥

रोमकस्य उत्पत्तिस्थानं निर्वचनञ्च

यस्माज्जज्ञे विशेषेण रोमानद्यन्तिके पुरा ।
तस्माद्भिषग्वरैरेतद्रोमकं परिकीर्तितम् ॥ १६१ ॥
शाकम्भरहृदोद्भूतजलाद्यस्मात्प्रजायते ।
तस्मादेतद्भिषग्वर्यैर्मतं शाकम्भरीयकम् ॥ १६२ ॥

अस्य गुणाः

साम्भरं लवणं ख्यातं भेदनं दीपनं परम् ।
अत्युष्णं लघु तीक्ष्णञ्च कटुपाकि च पित्तलम् ॥ १६३ ॥
मलदोषहरं सूक्ष्ममर्शोघ्नं वातनाशनम् ।
कफप्रणाशनञ्चैव विशदं कोष्ठशोधनम् ॥ १६४ ॥

अथ लवणद्रावकस्य नामानि

लवणद्रावकः ख्यातो लवणाम्लसमाह्वयः ।
पटुद्रावश्च कथितः पटुकद्रावकस्तथा ॥ १६५ ॥

लवणद्रावस्य निर्माणप्रकारः

सुचूर्णितं सैन्धवन्तु भाजने भर्जयेद्भिषक् ।
जलीयांशे विनिष्क्रान्ते चुल्लीतस्तन्नतारयेत् ॥ १६६ ॥

षड्भागसमितञ्चाथ भूष्टचूर्णितमंऽधरम ।
काचकुप्यां निधायाथ विधानज्ञो भिषग्वरः ॥ १६७ ॥
रुद्रभागमितञ्चात्र गन्धकद्रावकं शुभम् ।
शनैः शनैस्तु निक्षिप्य चुल्लिकाया निधापयेत् ॥ १६८ ॥
ततोऽस्या काचनलिकामुखमेकं निवेशयेत् ।
अपरञ्च मुखं तस्मात्तोयपूर्णोदरार्द्रके ॥ १६९ ॥
नीरपूरितपात्रस्थे काचकुम्भेऽपरे न्यसेत् ।
अतिमन्दानलेनाथ पचेत्खलु विधानवित् ॥ १७० ॥
तिर्यङ्निपातितं चाथ बाष्परूपेण सञ्चितम् ।
तोयाभं लवणद्रावं रसैनंद्य' समाहरेत् ॥ १७१ ॥

सजललवणद्रावकस्य निर्माणप्रकारः

नयन-पवनमित्रं प्राप्तसङ्ख्याप्रमाणं ।
सलिलममलमादौ काचपात्रे निदध्यात् ॥ १७२ ॥
तदनु खलु निहायोयामिर्नीरतुल्यं ।
विमललवणकाम्लं निक्षिपेद्वैद्यवर्यः ॥ १७३ ॥
अयमेव समाख्यातस्त्वायुर्वेदविशारदैः ।
सजलो लवणद्रावो विविधातङ्कनाशनः ॥ १७४ ॥

सजललवणद्रावकस्य गुणाः

लवणद्रावकस्तीक्ष्णो जाठराग्निप्रदीपनः ।
मूत्रदोषहरो रुच्यो यकृद्दोषनिकृन्तनः ॥ १७५ ॥

सजललवणद्रावकस्य मात्रा

आरभ्य पञ्चबिन्दुभ्यो कलाविन्दुमितं परम् ।
युञ्जीत लवणद्रावं प्रचुरेणाम्भसा भिषक् ॥ १७६ ॥

अस्य आमयिकः प्रयोगः

अन्नस्यामाशयस्थस्य विपाके तु द्वितीयके ।
लवणाम्लविहीनत्वाद् यदजीर्णं प्रजायते ॥ १७७ ॥

तस्मिन्नजीर्णे मतिमान् रोगिण कृतभोजनम् ।
दशबिन्दुमितं युक्त्या पटुद्रावन्तु पाययेत् ॥ १७८ ॥
पानमात्रेण गात्राणा शीघ्रश्चाप्यजीर्णकम् ।
नाशयित्वा बुभुक्षान्तु जनयत्याशु निर्भरम् ॥ १७९ ॥
लवणद्रावकाधिक्यादामाशयसमुद्भवे ।
अजीर्णे लवणद्रावं भोजनादौ प्रयोजयेत् ॥ १८० ॥
सभारे खलु प्रस्तावे आरमेहे च युक्तितः ।
शीलितो लवणद्रावो निर्दिष्टातङ्कनाशन ॥ १८१ ॥
शीलितस्तु पटुद्राव' शुष्कजिह्व हतस्वरम् ।
मृदुप्रलापसहित हर्दौर्बल्यसमायुतम् ॥ १८२ ॥
अस्पष्टनाडिक चैव कदाचिद् द्रुतनाडिकम् ।
मत्रणे प्रस्रवद्गूथ नाशयत्यान्त्रिकज्वरम् ॥ १८३ ॥
सतत लवणद्रावो मात्रया परिशीलित' ।
अफ्रकमेवनोद्भूत दौर्बल्य हन्ति निश्चितम् ॥ १८४ ॥
सजलस्तु पटुद्राव' शीलित. प्रचुराम्भसा ।
अरुचिं वह्निमान्द्य च नाशयत्यविकल्पतः ॥ १८५ ॥

इति क्षारविशेषादिविज्ञानीयो नाम चतुर्दशस्तरङ्ग

# अथ सुवर्णविज्ञानीय. पञ्चदशस्तरङ्ग:

धातुपदस्य निर्वचनम्

खालित्यमथ पालित्य कार्श्य वार्द्धक्यमेव च ।
अपनीय दधत्येते देह तद्धातव' स्मृता ॥ १ ॥

## धातूना नामपरिगणनम

स्वर्ण तार तथा ताम्र वङ्ग सीसकमेव च ।
यशद् च तथा लोह सप्तैते धातव स्मृता ॥ २ ॥
सुवर्णचन्द्रलोहार्कवङ्गाहियशदायसम् ।
लोहसप्तकमाख्यात सप्तलोहञ्च तन्मतम् ॥ ३ ॥

धातूना सामान्य प्रथम शोधनप्रकार

सूचीवेध्यानि पत्राणि धातूनान्तु समाहरत् ।
यावद्वह्निप्रभाणि स्युस्तावद्वह्नौ प्रतापयेत् ॥ ४ ॥
स्नापयेत्सप्ततप्तानि काञ्जिके तु त्रिधा त्रिधा ।
तक्रे कुलत्थक्वथिते गोमूत्रतिलतैलयो ॥ ५ ॥
एव विशुद्धिमायान्ति स्वर्णाद्या सप्तधातव ।
समासत समाख्यातमिद सामान्यशोधनम ॥ ६ ॥

द्वितीय शोधनप्रकार

प्रतप्तानि तु लोहानि रम्भामूलजले भिषक् ।
निषेचयेत्सप्तवार विशुद्ध्यन्ति न सशय ॥ ७ ॥

धातूना सामान्यो मारणप्रकार

मन शिलागन्धकसूर्यदुग्धै
समर्द्य खल्वे खलु सप्तलोहम् ।
वन्योत्पलाग्रा पुटित प्रयत्ना-
दनुत्तमा याति मृतिं ह्यवश्यम ॥ ८ ॥

अथ स्वर्णस्य नामानि

स्वर्णं सुवर्णं द्रविणं हिरण्यं
कल्याणकं काञ्चनमग्निवर्णम् ।
मनोहरं हेम च भूषणार्हं
तथाग्निबीजं कनकञ्च कान्तम् ॥ ९ ॥
भृङ्गारमाङ्गल्यकजाम्बवानि
जाम्बूनदं भर्म च जातरूपम् ।
चाम्पेयकं लोहवरञ्च रुक्मं
चामीकरं हाटकमङ्गमुक्तम् ॥ १० ॥

ग्राह्यसुवर्णस्य लक्षणम्

बालारुणारुणमलं ज्वलनप्रतप्तं
शाणोपले घुसृणचूर्णसमानवर्णम् ।
नाराचिकाधृतमलं गुरुतामुपेयात्
स्निग्धं तदेव कनकं कथितं तु जात्यम् ॥ ११ ॥

अपरं लक्षणम्

कोमलं रक्तपीताभं स्निग्धं शुल्वेन्दुवर्जितम् ।
गुरु चाखिलधातुभ्यो जात्या तत्स्वर्णमुत्तमम् ॥१२॥

अग्राह्यसुवर्णस्य स्वरूपम्

कठिनं लघु रूक्षञ्च कषे च्छेदेऽनले सितम् ।
तारताम्रसमायुक्तं स्वर्णं हेयं स्मृतं बुधैः ॥ १३ ॥

सुवर्णशोधनस्य प्रयोजनम्

यस्मादशोधितं स्वर्णं हन्ति शुद्धिबलादिकम् ।
करोति च बहून् रोगान् तस्मात्स्वर्णं विशोधयेत् ॥ १४ ॥

सुवर्णस्य प्रथमः शोधनप्रकारः

विततानि विशालानि कर्षकप्रमितानि तु ।
सूचीवेध्यानि पत्राणि सुवर्णस्य समाहरेत् ॥ १५

ततः खल्वम्लपिष्टेन सूतेनापघृष्टेन ये ।
तानि पत्राणि सलिप्य कपोताख्यपुटे पुटेत् ॥ १६ ॥
स्वर्णं सप्तपुटैरेव शुद्धिमायात्यनुत्तमाम् ।
श्यामिका हीयते चापि तारताम्रादियोगजा ॥ १७ ॥

द्वितीय शोधनप्रकार

रूपान्मितानीह दलानि हेम्न खल्वाम्लपिष्टेन ससैन्धवेन ।
वल्मीकमृत्स्नेन तु भस्मना वै प्रलेपयेल्लेपविधानदक्ष. ॥ १८ ॥
लेपं प्रशुष्कं प्रसमीक्ष्य वैद्य शरावसस्थानि तु कोकिलायाँ ।
पुटेत्पुटे कुक्कुटसंज्ञके तु स्वर्णं भवेच्छारदसवर्णतुल्यम् ॥ १९ ॥

तृतीय शोधनप्रकार

प्रचीरभ्यानि पत्राणि सुवर्णस्य समाहरेत् ।
कर्तर्या कर्तयेच्चाथ कणान् सूक्ष्मांस्तु कारयेत् ॥ २० ॥
सुक्षिप्ते काचपात्रे च न्यसेत्स्वर्णकणास्ततः ।
त्रिपादिकाया विन्यस्य सुगदीपाग्निना पचेत ॥ २१ ॥
लवणद्रावकं तत्र निक्षिपेत शनैः शनैः ।
सोरकद्रावकश्चाथ पूर्वद्रावस्य पादिकम् ॥ २२ ॥
विधिज्ञो निक्षिपेद्यावद् द्रवता याति काञ्चनम् ।
किञ्चित्काल पचेच्चाथ द्रावाधिक्यनिवृत्तये ॥ २३ ॥
सलिलञ्चाथ निक्षिप्य पचेदथ विधानवित् ।
सजलं चणकाम्लञ्च तावत्तत्र विनिक्षिपेत् ॥ २४ ॥
यावत् खलु सुवर्णस्य चणकाम्लस्य योगतः ।
अतिसूक्ष्मकणं चूर्णं पात्राधः पतितं भवेत् ॥ २५ ॥
विनश्यत्यम्लता यावत् तावत्प्रक्षालयेज्जले ।
सशोष्य चाथ मतिमान् विशुद्धं स्वर्णमाहरेत् ॥ २६ ॥

विशुद्धस्वर्णस्य प्रयोगक्रम

विशोधित सुवर्णन्तु रसतन्त्रविचक्षणः ।
घृष्ट्वा च मण्डलीकृत्य तत्र तत्र प्रयोजयेत् ॥ २७ ॥

घृष्टस्य विशुद्धस्वर्णस्य गुणा

विशुद्धं कनक घृष्ट विषबाधाविनाशनम् ।
मधुर शीतलं नेत्र्य गर्भस्थापनमुत्तमम् ॥ २८ ॥
पित्तामयप्रशमन हृत्शल्यहरं परम् ।
अन्यभेषजमाहात्म्यात् करोति विविधान् गुणान् ॥ २९ ॥

सुवर्णमण्डलस्य नामानि

सुवर्णमण्डल स्वर्णमण्डल स्वर्णपत्रकम् ।
सुवर्णपटल स्वर्णदलञ्चापि प्रकीर्तितम् ॥ ३० ॥

सुवर्णमण्डलस्य गुणा

स्वर्णमण्डलमायुष्य वह्निमान्द्यविनाशनम् ।
आक्षेपशमन नेत्र्य वीर्यवृद्धिकर परम् ॥ ३१ ॥
अम्लपित्तापह हृद्य विपाके स्वादुशीतलम् ।
हिक्कानाहविषश्लेष्मक्षयशूलव्रणापहम् ॥ ३२ ॥

सुवर्णपटलस्य प्रयोगविधि

सुवर्णपटल सम्यक् सितया परिपेषितम् ।
तत्तद्रोगघ्नभेषज्ययुत तत्तद्गदापहम् ॥ ३३ ॥

अथ सुवर्णलवणस्य नामानि

सुवर्णलवण स्वर्णलवणञ्चापि तन्मतम् ।
हिरण्यलवणञ्चैव समाख्यात भिषग्वरैः ॥ ३४ ॥

सुवर्णलवणस्य निर्माणप्रकार

विशोधित पत्रकभागिकन्तु
स्वर्णं तु मत्स्याचशरावसंस्थम् ।
सुगप्रदीपे विनिधाय चाथ

मन्दानलेनेह पचेद्रसज्ञ ॥ ३५ ॥
शनैः शनैः सततमल्पमल्पं
तुर्यांशसोराम्लकमिश्रितन्तु ।
क्षिपेद्विशुद्धं लवणाम्लसारा-
द्यावत्सुवर्णं द्रवतामुपैति ॥ ३६ ॥
द्रुतं सुवर्णन्तु विलोक्य शुद्धं
दिग्भागिकं सिन्धुमत्र निषेच्य ।
नागङ्गरङ्गन्तु जले विशुष्के
सुवर्णपूर्वं लवणं हरेद्वै ॥ ३७ ॥
ततः सुवर्णलवणं काचकूप्यां निधापयेत् ।
अथ निर्दिष्टकार्येषु जले सद्राव्य योजयेत् ॥ ३८ ॥

सुवर्णलवणस्य गुणाः

सुवर्णलवणं वृष्यं दोषत्रितयकोपजित् ।
तुवरं स्वादु तिक्तञ्च सलिले च द्रवीभवेत् ॥ ३९ ॥
पुष्पावरोधं मधुमेहबाधां चिरन्तनञ्चापि फिरङ्गरोगम् ।
अपस्मृतिं श्लीपदमेव चैव क्लैब्यं तथोन्मादमलं निहन्यात् ॥४०॥

सुवर्णलवणस्य मात्रा

सर्षपाद्द्विकायाः निशाशभ्रमितं शुभम् ।
युञ्जीत स्वर्णलवणं बलकालाद्यपेक्षया ॥ ४१ ॥

अस्य प्रयोगक्रमः

सुवर्णलवणं गुञ्जामितं खलु समाहरेत् ।
सार्द्धकोलद्वयमिते जले सद्रावयेद्भिषक् ॥ ४२ ॥
तस्माज्जलाद्भिषग्वर्यो बिन्दून् भास्करसम्मितान् ।
तत्तन्निर्दिष्टरोगेषु विधानज्ञः प्रयोजयेत् ॥ ४३ ॥
भिषक् सुवर्णलवणं त्वाससादौ प्रयोजयेत् ।

रसायनेषु च प्राज्ञो न कदाचित् प्रयोजयेत् ॥ ४४ ॥

अथ सुवर्णमारणस्य प्रथम प्रकार

कर्षोन्मित शोधितमग्निबीज न्यसेत्कुमुद्या भिषजा वरेण्यः ।
मद्रानयेचाथ हि कोकिलायो सद्वङ्कनालानिलसुप्रदीप्ते ॥४५॥
द्रुत सुवर्णन्तु ततो विलोक्य क्षिपेत्सम तत्र मृत रसेशम् ।
लुङ्गद्रवेणाथ विमर्द्य सम्यक सुश्लक्ष्णचूर्णञ्च ततो विदध्यात्॥४६
तत' सुवर्णप्रमित विशुद्ध क्षिपेद्विधिज्ञो रसगर्भचूर्णम् ।
पुटेत्पुटे कुक्कुटमज्ञके च मार्तण्डवार भिषगप्रमत्त' ॥ ४७ ॥

एव नातिचिरादेव काञ्चन याति पञ्चताम् ।
सुश्लक्ष्ण कुङ्कुमच्छाय निश्चन्द्रञ्च भवत्यलम् ॥ ४८ ॥

द्वितीयो मारणप्रकार

विशुद्धस्वर्णपत्राणि कर्षकप्रमितानि च ।
समादाय सम सूत दत्त्वा समर्दयेद् दृढम् ॥ ४९ ॥
निम्बुद्रवेण सम्पेष्य सम्यक् प्रक्षालयेत्तत ।
हिङ्गुल गन्धकञ्चाथ शिलाञ्च नवसादरम् ॥ ५० ॥
पृथक् पृथक् कर्षमित निक्षिप्याम्लेन मर्दयेत् ।
सशोष्य चातपे सम्यक् श्लक्ष्णचूर्णञ्च कारयेत ॥ ५१ ॥
पुटेत्वावत्प्रयत्नेन यावन्निश्चन्द्रिक भवेत् ।
इत्थ स्वल्पपुटैरेव काञ्चन याति पञ्चताम् ॥ ५२ ॥

तृतीयो मारणप्रकार

स्वर्णपत्राणि शुद्धानि समादाय भिषग्वर ।
कर्तर्या कर्तयेचाथ कणान् सूक्ष्मॉस्तु कारयेत् ॥ ५३ ॥
स्वर्णतुल्य रस दत्त्वा खल्वे सम्मर्दयेद् दृढम् ।
निम्बुद्रवेण सम्मर्द्य बहुश क्षालयेद्भिषक् ॥ ५४ ॥
कुनटी रसमिन्दूर स्वर्णतुल्य विनिक्षिपेत् ।

सुवर्णपादिकस्त्वेवं मृतं कनकमाभिकम् ॥ ५५ ॥
रविदुग्धेन सम्पेष्य श्लक्ष्णचूर्णञ्च कारयेत् ।
पुटेच्चाथद्विधानेन यावन्निश्चन्द्रिकं भवेत् ॥ ५६ ॥
एवं स्वल्पपुटैरेव कनकं मृतिमाप्नुयात् ।
निश्चन्द्रिकञ्च मसृणं स्वर्णभस्म भवेत्तमम् ॥ ५७ ॥
द्वितीयादिपुटेष्वत्र मृतं कनकमाभिकम् ।
न निक्षिपेद्विधानज्ञो रहस्यमिदमीरितम् ॥ ५८ ॥

चतुर्थो मारणप्रकारः

शुद्धेषु स्वर्णपत्रेषु समानं शुद्धपारदम् ।
दत्त्वा सम्पेषयेदम्ले सुचिरं क्षालयेत्ततः ॥ ५९ ॥
संशोष्य गन्धकं दत्त्वा पुटेत्पुटविधानवित् ।
एवं चतुर्दशपुटैः सुवर्णं मृतिमाप्नुयात् ॥ ६० ॥
षोडशांशं प्रतिपुटं रसेशं ह्रासयेद्बुधः ।
अन्यथा पञ्चता नेति रहस्यमिति दर्शितम् ॥ ६१ ॥

पञ्चमो मारणप्रकारः

सूचीवेध्यानि पत्राणि सुवर्णस्य समाहरेत् ।
रसेशं तत्समं दत्त्वा मर्दयेत्तु दिनत्रयम् ॥ ६२ ॥
निम्बुनीरेण सम्मर्द्य वारिणा क्षालयेद्भृशम् ।
श्वेतपाषाणचूर्णञ्च स्वर्णार्द्धं तत्र निक्षिपेत् ॥ ६३ ॥
जम्बीरस्य द्रवं दत्त्वा पेषयेच्च दिनत्रयम् ।
शोषयित्वा द्रवं सम्यक् विदध्यात् श्लक्ष्णचूर्णकम् ॥ ६४ ॥
शुद्धगन्धकचूर्णञ्च ततः स्वर्णोन्मितं क्षिपेत् ।
शरावसम्पुटे न्यस्य विदध्यात्सन्धिरोधनम् ॥ ६५ ॥
पुटेल्लघुपुटेनैव यावन्निश्चन्द्रिकं भवेत् ।
एवं स्वल्पपुटैरेव काञ्चनं याति पञ्चताम् ॥ ६६ ॥

श्रीमत्परमपूज्येन धन्वन्तरिमहर्षिणा ।
भिषग्घिताय सुगमः प्रकारोऽयं निरूपितः ॥ ६७ ॥

मृतसुवर्णस्य गुणाः

मृतं सुवर्णं मधुरञ्च वृष्यं हृद्यञ्च नेत्र्यं परमञ्च मेध्यम् ।
रसायनं पुंसवनोपयोगि विषापहं कान्तिकरञ्च शस्तम् ॥ ६८ ॥

अपि च

स्वर्णं स्निग्धं मधुरमधुरं वृष्यमायुष्यमग्र्यं
वर्ण्यं बल्यं विषगरहरं स्तन्यशोषक्षयघ्नम् ।
रुच्यं पुण्यं पवनशमनं दीपनञ्चातिकेश्यं
हन्यादेतन्नियतमचिरादेव रोगानशेषान् ॥ ६९ ॥

विशिष्टा गुणाः

मृतं सुवर्णं शिशिरं वयःस्थापनमुत्तमम् ।
स्मृतिप्रदं परञ्चैव त्रिदोषज्वरनाशनम् ॥ ७० ॥
सौन्दर्यं सुरसलावण्यं ललनानां विवर्धयेत् ।
चित्तहारित्वमङ्गेषु जनयेच्च विशेषतः ॥ ७१ ॥
मृतं सुवर्णं सुस्निग्धं नाग्विशुद्धिकरं परम् ।
चिन्ताशोकभयक्रोधसम्भूतामयनाशनम् ॥ ७२ ॥
शिरोदेशे प्रवृद्धान्तु रक्तसञ्चरणक्रियाम् ।
आत्मघाताभिलापां च प्राबल्येन समुत्थिताम् ॥ ७३ ॥
अस्थिक्षतं त्वस्थिशोथं तथा जङ्घास्थिवेदनाम् ।
फिरङ्गजां मुष्कसामवृद्धिञ्चापि चिरन्तनीम् ॥ ७४ ॥
उन्मादमथ वैचित्त्यं योषापस्मारकं तथा ।
चित्तोद्वेगं भ्रमं ग्लानिं नाशयेदविकल्पतः ॥ ७५ ॥
हृत्कम्पनप्रशमनं मुष्कशोथप्रणाशनम् ।
अस्थिशोषहरं चैव मूर्छायपरिक्रन्तनम् ॥ ७६ ॥

कासश्वासप्रशमनं परमोजोनिवर्द्धनम् ।
अतीसारग्रहणिकापाण्डुामयनिषूदनम् ॥ ७७ ॥

अपि च

मृतं सुवर्णं शमयेन्नितान्तं प्रमादसञ्जं पवनं प्रवृद्धम् ।
क्षीणं तथैनं परिबृंहयेच्च समं समं पोषयतीह काये ॥ ७८ ॥
प्रक्षीणमेधास्मृतिपाटनानां प्रशुष्यदाम्लानकलेवराणाम् ।
प्रमुह्यतां शास्त्रगतौ च नित्यं यूनां शिशूनाञ्च परं प्रशस्तम् ॥७९

सुवर्णभस्मनो मात्रानिरूपणम्

समारभ्याष्टमाद् भागाद् रक्तिकाया भिषग्वर ।
योजयेत्तुर्यभागान्तं मृतं स्वर्णं तु कालवित् ॥ ८० ॥

अस्य आमयिक प्रयोग

बिल्वत्वक्स्वरसोपेतं रससिन्दूरसंयुतम ।
सुवर्णं शीलितं यत्नान्नाशयेद्वातिकज्वरम ॥ ८१ ॥
पर्पटस्वरसोपेतं रससिन्दूरमिश्रितम् ।
शीलितं तपनीयन्तु नाशयेत्पैत्तिकं ज्वरम् ॥ ८२ ॥
तुलसीरससंयुक्तं ससिन्दूरं निषेवितम् ।
काञ्चनं ह्यचिरादेव कफज्वरमपोहति ॥ ८३ ॥
सक्षौद्रं साभ्रकं स्वर्णं मृतं खलु निषेवितम् ।
अचिरादेव चिरजं जीर्णज्वरमपोहति ॥ ८४ ॥
बिल्वपेशिकया युक्तं सुवर्णन्तु सजीरकम् ।
शीलितं नाशयेत्तूर्णमतीसारमसंशयम् ॥ ८५ ॥
रसपर्पटिकोपेतं सुवर्णं परिशीलितम् ।
ग्रहणीं चिरसञ्जातां नाशयेदविकल्पतः ॥ ८६ ॥
गुडूचिकासत्त्वरजोविमिश्रं
स्वर्णं सलोहं परिशीलितन्तु ।

नवोत्थित वा सुचिरोत्थित वा
पाण्ड्वामयं नातिचिरान्निहन्यात् ॥ ८७ ॥
माभ्रक वा ससिन्दूर समौक्तिकमथापि वा ।
सुवर्णं नाशयेत्तूर्णं राजयक्ष्माणमुल्वणम् ॥ ८८ ॥
क्षीरकाकोलिकोपेत चोपचीनीसमन्वितम् ।
सुवर्णं शोधयेत्तूर्णं गर्भाशयमसंशयम् ॥ ८९ ॥
गुडूचिकाकुङ्कुममारिवाद्यैरनौषधैः शोणितशोधनीयैः ।
स्वर्णं प्रयुक्त रसपुष्पयुक्त हरेत्फिरङ्ग चिरजन्तु तूर्णम् ॥९०॥
शट्यादिभि. श्वासहरैर्द्रव्यैस्तु चरकोदितै ।
स्वर्णं नातिचिरादेव नाशयेच्छ्वासमुल्वणम् ॥ ९१ ॥
धात्रीचूर्णसमायुक्त सुवर्णं खलु शीलितम् ।
अम्लपित्त निहन्त्याशु चिरोत्थमपि दारुणम् ॥ ९२ ॥
सिन्दूराभ्रसमायुक्त सुवर्णं शङ्खिनीयुतम् ।
अपस्मार निहन्त्याशु योषापस्मारक तथा ॥ ९३ ॥
रससिन्दूरसयुक्त सुवर्णं परिशीलितम् ।
बलाक्वाथेन नियतं शीर्षेनेपथुनाशनम् ॥ ९४ ॥
पुनर्नवाकज्जलिकायुक्त सुमृतकाञ्चनम् ।
गोमूत्रेण प्रयुक्त तु शुष्कशोथ विनाशयेत ॥ ९५ ॥
द्राक्षाकणाकट्फलयष्टिकाभि
सुवर्णचूर्णस्य निषेवणेन ।
वाणी जयत्याशु रुत विशेषात्
पुस्कोकिलाना मधुमादितानाम् ॥ ९६ ॥
रक्ताङ्गतुङ्गोत्पलयष्टिकाभि
सितासमङ्गारुधिरादिभिर्वा ।
स्वर्णं प्रयुक्त खलु सुन्दरीणा

लावण्यवृद्धिं प्रकरोत्यनल्पाम् ॥ ९७ ॥
निशालवङ्गमरिचं मर्धांद्रस्तु निषेवितम् ।
सुवर्णं नाशयेच्चूर्णमुन्मादन्तु त्रिदोषजम् ॥ ९८ ॥
धात्रीचूर्णयुतं स्वर्णं गायत्रीरसभावितम् ।
शीलितं चरमे काले हन्ति रोगानशेषतः ॥ ९९ ॥
सुवर्णचूर्णं परिशीलितन्तु
रसामृतानिश्वशतावरीभिः ।
षण्मासमात्रं तु निषेवणेन
मेधाभिवृद्धिं जनयेच्चिरान्तम् ॥ १०० ॥
मृतं सुवर्णं परिशीलयन्तः
स्थिराविदारीवरदाश्वगाभिः ।
मासत्रयेणैव कृशाः पुमांसः
प्रपुष्टदेहाश्च बहुप्रजाः स्युः ॥ १०१ ॥
सुवर्णचूर्णं परिशीलयन्त्यो
धात्रीस्थिरानिश्वपुनर्नवाभिः ।
अधृष्यदेहा वलिभिर्भवन्ति
तारुण्यलावण्यविलासपूर्णाः ॥ १०२ ॥
जीवनीयगणोद्दिष्टभेषजैः परिशीलितम् ।
सुवर्णं सर्वदा पुंसां जीवनीयं परं स्मृतम् ॥ १०३ ॥
नागकेशरचूर्णेन सुवर्णं परिशीलितम् ।
ऋतौ सीमन्तिनीनान्तु गर्भधारणमुत्तमम् ॥ १०४ ॥
काकोल्यादिगणोद्दिष्टैर्यथास्वमवयोजितैः ।
भेषजैर्भक्षितं स्वर्णं स्तन्यसम्वर्द्धनं परम् ॥ १०५ ॥

---

१-स्थिरा-शालिपर्णी विदारी स्वनामख्यात शुक्लकन्द
वरदा-अश्वगन्धा, अजरा कपिकच्छू ।

सताप्यमसित स्वर्णं सितया सुविमिश्रितम ।
नानायोगसमुद्भूता विषबाधा व्यपोहति ॥ १०६ ॥

निर्विषीचूर्णसयुक्त तपनीय निषेवितम् ।
अचिरादेव नियत विषबाधा व्यपोहति ॥ १०७ ॥

पाटलाफलनीरेण मक्षौद्र मृतकाञ्चनम् ।
निषेवित निहन्त्याशु हिक्का दोषत्रयोद्भवा ॥ १०८ ॥
सितोपलाममायुक्त सुवर्णं परिशीलितम् ।
अस्थिशोष त्वस्थिशोथं तथैवास्थिगवक्षतम् ॥ १०९ ॥
स्तनन्धयाना बालाना विशेषादस्थिवक्रताम् ।
दारुणामस्थिपीडा च नाशयत्यविकल्पतः ॥ ११० ॥

गानिका

जटिलारजोविमिश्र परिशीलित सुवर्णम् ।
विनिहन्ति शीर्षदेशे वितत प्रसादवातम् ॥ १११ ॥
त्रिगुणाभ्रलोहमिश्र वरुणाम्भसा सुवर्णम् ।
विनिहन्ति वृक्करोग खलु दाहशोथयुक्तम् ॥ ११२ ॥
गिरिजत्वयोविमिश्र रजतान्वित सुवर्णम् ।
श्वयथु जरायुसस्थ विनिहन्ति सोपसर्गम् ॥ ११३ ॥
गगनायसा समेत परिशीलित सुवर्णम् ।
जठरस्थित मलाख्य विनिहन्ति वातभारात् ॥ ११४ ॥
रजनीपुनर्नवाढ्य खलु शृङ्गवेरनारा ।
विनियोजित सुवर्णं विनिहन्ति मुष्कशोथम् ॥ ११५ ॥

इति सुवर्णविज्ञानीयो नाम पञ्चदशस्तरङ्ग

# अथ रजतविज्ञानीय षोडशस्तरङ्ग·

रजतस्य नामानि

रजत रुचिर रौप्य तार सौधञ्च शुभ्रकम् ।
चन्द्रलोह चन्द्रहास रूपक चन्द्रसञ्ज्ञकम ॥ १ ॥

ग्राह्यरजतस्य स्वरूपम्

छेदे निकाषफलके दहने प्रकाम
रम्यञ्च शारदकलाधरमण्डलाभम ।
नाराचिकाधृतमल गुरुतामुपेयात
स्निग्ध तदेव कथित रजतन्तु जात्यम ॥ २ ॥

त्याज्यरजतस्य स्वरूपम्

दाहेऽतिमलिन पीत रक्त रूक्ष लघु स्फुटम् ।
कठिन सदलञ्चैव रजत त्याज्यमुच्यते ॥ ३ ॥

प्रकारान्तरेण जात्यरजतस्य स्वरूपम्

निर्मल पिच्छिल स्निग्ध मृदुल निर्दल घनम् ।
शरदिन्दुनिभ यच्च रजत जात्यमुच्यते ॥ ४ ॥

रजतशोधनस्य प्रयोजनम्

तार विवर्द्धयति सर्गजगात्रताप
वीर्य विनाशयति हन्ति शरीरपुष्टिम् ।
विड्बन्धन रचयतीह तथाङ्गसाद
इत्यन्मृत त्वपि मृत यदि शुद्धिहीनम् ॥ ५ ॥

रजतस्य प्रथम शोधनप्रकार

पत्रीकृत तु रजत ज्वलने प्रतप्त
निर्वापयेन्मुनितरौ स्वरसे त्रिवारम ।
इत्थ विशुद्धममल खलु चन्द्रलोह
सयोजयेन्मतिनिधी भिषजो वरेण्य ॥ ६ ॥

द्वितीय शोधनप्रकार

प्रदीप्य वह्निं खलु चुल्लिकाया
तस्या कटाहञ्च ततो निदध्यात् ।
तदन्तरे चाथ वनोपलोत्थ-
भूत्यालवालं परितो विदध्यात् ॥ ७ ॥
अथालवालस्य तु मध्यदेशे
रौप्यं क्षिपेद्धि भिषजां वरेण्य ।
तारोन्मितं शोधितसीसकञ्च
निक्षिप्य दर्व्या परिचालयेच्च ॥ ८ ॥
द्रुतन्तु तारं त्वथ सीसकञ्च
विलोक्य दद्याद्धि प्रदह्यीत कामम् ।
सीसं मृतं भ्रमनिवर्जितञ्च
समाहरेद्रौप्यमलं विशुद्धम् ॥ ९ ॥

तृतीय शोधनप्रकार

पत्तलीकृतपत्राणि राजतानि भिषग्वर ।
वह्नौ प्रतापयेत्कामं वङ्कनालप्रदीपिते ॥ १० ॥
ततो निम्बूकजद्रावे चाङ्गेरीस्वरसेऽपि वा ।
स्नापयेत्तप्ततप्तानि भूयो भूयः प्रयत्नतः ॥ ११ ॥
यावद्राजतपत्राणि मार्दवं यान्ति निर्भरम् ।
वीतशङ्कस्ततो वैद्यो मारणाय प्रयोजयेत् ॥ १२ ॥

अथ रजतस्य नामानि

चन्द्रलोहदलं चैव स्मृतं रजतमण्डलम् ।
तदेव तारपटलं मतं तारदलञ्च तत् ॥ १३ ॥

अस्य गुणा

चन्द्रलोहदलं शीतं तुवराम्लरसं सरम् ।
विपाकमधुरं बल्यं स्निग्धं रुच्यञ्च लेखनम् ॥ १४ ॥

महद्धरमायुष्य वय'स्थापनमुत्तमम् ।
व्य मेध्य विशेषेण वातपित्तप्रणाशनम् ॥ १५ ॥

रजतपत्राणां प्रयोग

ताम्बूलवीटिकादौ वा मिष्टान्नेषु विशेषत' ।
साम्प्रत विनियुज्यन्ते चन्द्रलोहदलानि तु ॥ १६ ॥

रजतस्य प्रथमो मारणप्रकार

कर्षद्वयमित तार विशुद्धन्तु समाहरेत् ।
मिश्वर तारतुल्य निर्मलञ्च हरेद्भिषक् ॥ १७ ॥
अम्ले सम्पेष्य यत्नेन पिष्टिका कारयेत्तत ।
निम्बूकस्वरस दत्त्वा दिनमेक सुपेषयेत् ॥ १८ ॥
तत प्रक्षालयेत्काम सलिलेन भिषग्वर ।
शुद्ध सौगन्धिक तुल्य तथैव नटभूषणम् ॥ १९ ॥
निक्षिप्य चाथ सम्पेष्य श्लक्ष्णचूर्णञ्च कारयेत् ।
शरावसम्पुटे न्यस्य पुटेत्स्वल्पपुटे तत ॥ २० ॥
एव पुटत्रयेणैव रजत मृतिमाप्नुयात् ।
भस्म सञ्जायते चैव रक्तोत्पलसमप्रभम् ॥ २१ ॥

द्वितीयो मारणप्रकार

रौप्यपत्राणि शुद्धानि समादाय भिषग्वर ।
कर्तर्या कर्तयेच्चाथ कणान् सूक्ष्मास्तु कारयेत् ॥ २२ ॥
रौप्यपत्रमितञ्चाथ ताल गन्धञ्च शोधितम ।
निक्षिपेच्चाथ सम्पेष्य शरावद्वयसम्पुटे ॥ २३ ॥
निधाय पुटयेद्यत्नात्पुटे कुक्कुटसञ्ज्ञके ।
एव पुटत्रयेणैव तार यात्याशु पञ्चताम ॥ २४ ॥
भस्म सञ्जायते चैव कालाञ्जनसमप्रभम् ।
एव मृत चन्द्रलोह नीतगङ्ग प्रयोजयेत् ॥ २५ ॥

तृतीयो मारणप्रकारः

पत्तलीकृतपत्राणि राजतानि समाहरेत् ।
कर्तर्या कर्तयित्वा च कणान् सूक्ष्मांस्तु कारयेत् ॥ २६ ॥
तारपत्रसमं सूतं गन्धश्च विमलं हरेत् ।
कुमारीस्वरसं दत्त्वा सम्यक् सम्पेषयेद् बुधः ॥ २७ ॥
शरावसम्पुटे न्यस्य करीषाग्नौ पुटेद्भिषक् ।
एवं स्वल्पपुटैरेव रौप्यं याति हि पञ्चताम् ॥ २८ ॥

चतुर्थो मारणप्रकारः

पत्रीकृतं शुद्धतारं चतुस्तोलकसंमितम् ।
द्वितोलकमितं चैव सुमृतं स्वर्णमाक्षिकम् ॥ २९ ॥
सुधादुग्धेन सम्पेष्य पेषयेद्याममात्रकम् ।
आतपे चाथ संशोष्य श्लक्ष्णचूर्णश्च कारयेत् ॥ ३० ॥
शरावसम्पुटस्थश्च पुटेद्वन्योपलैर्भिषक् ।
एवं स्वल्पपुटैरेव रजतं मृतिमाप्नुयात् ॥ ३१ ॥
द्वितीयादिपुटेष्वत्र रसतन्त्रविचक्षणः ।
माक्षिकं न प्रयुञ्जीत रहस्यमिति कीर्तितम् ॥ ३२ ॥

पञ्चमो मारणप्रकारः

शुद्धानि तारपत्राणि समादाय भिषग्वरः ।
निशोधितं हिङ्गुलं तु क्षिपेत्तारमितं भिषक् ॥ ३३ ॥
तथैव सुमृतं ताप्यं क्षिप्त्वा सम्पेषयेद् बुधः ।
निम्बूकस्वरसं दत्त्वा शुष्कचूर्णश्च कारयेत् ॥ ३४ ॥
सम्पुटस्थं ततः कृत्वा पुटयेत्तु प्रयत्नतः ।
एवं स्वल्पपुटैरेव रजतं मृतिमाप्नुयात् ॥ ३५ ॥
द्वितीयादिपुटेष्वत्र रसतन्त्रविचक्षणः ।
माक्षिकं न प्रयुञ्जीत रहस्यमिह कीर्तितम् ॥ ३६

षष्ठो मारणप्रकार

समाहरेत्सुनिर्मलनागपत्रकणोच्चयम ।
निम्बूकद्रवसंशुद्ध निरम्लीकृतमिङ्गुलम ॥ ३७ ॥
नागद्विगुणितं दत्त्वा पिष्ट्वा चूर्णञ्च कारयेत् ।
ऊर्ध्वपातनयन्त्रेण पचेत्पाकविधानवित् ॥ ३८ ॥
भूयाभूय पचेद्यावद्रजत मृतिमाप्नुयात् ।
अध स्थ सुमृत तार रक्ताभमतिसुन्दरम् ॥ ३९ ॥
आहरेदूर्ध्वसंस्थन्तु रसेन्द्रश्चातिनिर्मलम् ।
एव मृत चन्द्रलोह तत्तद्योगेषु योजयेत् ॥ ४० ॥

सप्तमो मारणप्रकार

रजतानि विशुद्धानि पत्राणीह समाहरेत् ।
रसेश्वर सम दत्त्वा पिष्टिका कारयेत्तत ॥ ४१ ॥
गौरीपाषाणचूर्णञ्च सम निक्षिप्य मर्दयेत् ।
आतपे चाथ सशोष्य शुष्कचूर्णञ्च कारयेत् ॥ ४२ ॥
सम्पुटस्थ तत कृत्वा पुटेद् गजपुटेन तु ।
पुटमेक प्रदायाथ खल्वे सञ्चूर्णयेत्तत. ॥ ४३ ॥
हिङ्गुल निर्मलञ्चैव तत्तुल्य मेलयेद्बुध ।
एव पुटद्वय दद्याद्रसतन्त्रविचक्षण ॥ ४४ ॥
एव पुटत्रयेणैव रजत मृतिमाप्नुयात् ।
एव मृतन्तु रजत नीतशङ्क प्रयोजयेत् ॥ ४५ ॥

मृतरजतस्य गुणा

तार मृत सुशिशिर तुवरञ्च रूक्ष
स्निग्ध विपाकमधुर परमञ्च मेध्यम ।
वर्ण्यं पर पवनहारि कफप्रणाशि
[illegible] ॥ ४६ ॥

सुमृत चन्द्रलोहन्तु वयःस्थापनमुत्तमम् ।
बल्य पर दाहहरं स्मृतिकान्तिविवर्द्धनम् ॥ ४७ ॥
तृष्णाशोषप्रशमनं परमञ्च रसायनम् ।
श्रमहारि विशेषेण गर्भाशयविशोधनम् ॥ ४८ ॥
पित्तामयप्रशमन प्रमेहाद्यामयापहम् ।
आयुष्यञ्च विशेषेण विष्टम्भाजीर्णनाशनम् ॥ ४९ ॥
मदात्ययात्ययकर वह्निमान्द्यप्रणाशनम् ।
विषघ्न ज्वरहृच्चैव प्लीहोदरविनाशनम् ॥ ५० ॥
क्षयक्षयकर नाडीशूलापस्मृतिनुत् परम् ।
हृद्य खलु विशेषेण जाठरामयनाशनम् ॥ ५१ ॥

विशिष्टा गुणा

मृतन्तु तार शमयेन्नितान्त
प्रकोपग वातमतिप्रवृद्धम् ।
शाखाश्रय पित्तमल विरुद्ध
जत्रूर्ध्वमस्थञ्च कफ मलाख्यम ॥ ५२ ॥
प्रक्षीणबुद्धिस्मृतिसाहसाना
शिरोभ्रमेणातिविमोहितानाम् ।
अध्यापनादौ सुचिर रताना
यूना शिशूनाञ्च पर प्रशस्तम् ॥ ५३ ॥

मृतरजतस्य मात्रानिरूपणम्

रक्तिकायास्तुरीयाशाद्रक्तिकैकामित परम् ।
मृत तार नियुञ्जीत बलकालाद्यपेक्षया ॥ ५४ ॥

अस्य आमयिक प्रयोग

यवानिकादेवपुष्पचूर्णेन रजत मृतम् ।
शीलित नाशयत्याशु कोष्ठवात चिरोत्थितम् ॥ ५५ ॥

षष्ठो मारणप्रकारः

समाहरेत्सुविमलताम्रपत्रकर्णाश्रयम् ।
निम्बूकद्रवसंशुद्धं निर्म्लीकृतमिङ्गुलम् ॥ ३७ ॥
तारद्विगुणितं दत्त्वा पिष्ट्वा चूर्णञ्च कारयेत् ।
ऊर्ध्वपातनयन्त्रेण पचेत्पाकविधानवित् ॥ ३८ ॥
भूयोभूयः पचेत्तावद्रजतं मृतिमाप्नुयात् ।
अथ स्थं सुमृतं तारं रक्ताभमतिसुन्दरम् ॥ ३९ ॥
आहरेदूर्ध्वसंस्थन्तु रसेशञ्चातिनिर्मलम् ।
एवं मृतं चन्द्रलोहं तत्तद्योगेषु योजयेत् ॥ ४० ॥

सप्तमो मारणप्रकारः

रजतानि विशुद्धानि पत्राणीह समाहरेत् ।
रसेश्वरं समं दत्त्वा पिष्टिकां कारयेत्ततः ॥ ४१ ॥
गौरीपाषाणचूर्णञ्च समं निक्षिप्य मर्दयेत् ।
आतपे चाथ संशोष्य शुष्कचूर्णञ्च कारयेत् ॥ ४२ ॥
सम्पुटस्थं ततः कृत्वा पुटेद् गजपुटेन तु ।
पुटमेकं प्रदायाथ खल्वे सञ्चूर्णयेत्ततः ॥ ४३ ॥
हिङ्गुलं विमलञ्चैव तत्तुल्यं मेलयेद्बुधः ।
एवं पुटद्वयं दद्याद्रसतन्त्रविचक्षणः ॥ ४४ ॥
एवं पुटत्रयेणैव रजतं मृतिमाप्नुयात् ।
एवं मृतन्तु रजतं नीतशङ्कः प्रयोजयेत् ॥ ४५ ॥

मृतरजतस्य गुणाः

तारं मृतं सुशिशिरं तुवरञ्च रुच्यं
स्निग्धं विपाकमधुरं परमञ्च मेध्यम् ।
वर्ण्यं परं पवनहारि कफप्रणाशि
त्वम्लं सरं परमलेखनकञ्च वृष्यम् ॥ ४६ ॥

सुमृत चन्द्रलोहन्तु वयःस्थापनमुत्तमम् ।
बल्यं पर दाहहर स्मृतिकान्तिविवर्द्धनम् ॥ ४७ ॥
तृष्णाशोपप्रशमनं परमञ्च रसायनम् ।
श्रमहारि विशेषेण गर्भाशयविशोधनम् ॥ ४८ ॥
पित्तामयप्रशमन प्रमेहाद्यामयापहम् ।
आयुष्यञ्च विशेषेण निष्टब्धाजीर्णनाशनम् ॥ ४९ ॥
मदात्ययान्ययकर वह्निमान्द्यप्रणाशनम् ।
विपमं ज्वरहञ्चैव प्लीहोदरनिनाशनम् ॥ ५० ॥
क्षयक्षयकर नाडीशूलापस्मृतिनुत् परम् ।
हृद्य खलु विशेषेण जाठरामयनाशनम् ॥ ५१ ॥

विशिष्टा गुणा

मृतन्तु तार शमयेन्नितान्त
प्रकोष्ठग वातमतिप्रवृद्धम् ।
शाखाश्रय पित्तमल निरुद्ध
जत्रूर्ध्वसस्थञ्च कफ मलाख्यम ॥ ५२ ॥
प्रक्षीणबुद्धिस्मृतिमानवाना
शिरोऽश्रमेणातिविमोहितानाम् ।
अध्यापनादौ सुचिर रताना
यूना शिशूनाञ्च पर प्रशस्तम् ॥ ५३ ॥

मृतरजतस्य मात्रानिरूपणम्

रक्तिकायास्तुरीयाशाद्रक्तिकैकमित परम ।
मृत तार नियुञ्जीत बलकालाद्यपेक्षया ॥ ५४ ॥

अस्य आमयिक प्रयोग

यवानिकादेवपुष्पचूर्णेन रजत मृतम् ।
शीलित नाशयन्त्याशु कोष्ठवात चिरोत्थितम् ॥ ५५ ॥

एलाचूर्णयुतं तारं सततं परिशीलितम् ।
अजीर्णरोगजनितं हृदयस्पन्दनं हरेत् ॥ ५६ ॥
एलासितोपलाचूर्णयुतं तारं तु शीलितम् ।
सूर्यावर्तं च तथा निहन्त्यर्धावभेदकम् ॥ ५७ ॥
रससिन्दूरलोहाढ्यं सशिलाजतुताप्यकम् ।
शीलितं चन्द्रलोहं तु वरावारा विशेषतः ॥ ५८ ॥
वामडिम्बाशयोद्भूततीव्रवेदनयान्वितम् ।
गर्भाशयच्युतिं घोरां नाशयत्यविलम्बितम् ॥ ५९ ॥
टङ्काभ्ररससिन्दूरसयुक्तं चन्द्रलोहकम् ।
युक्तं नलानराकाथैस्त्रीणोरुव्यथयान्वितम् ॥ ६० ॥
वामडिम्बाशयोद्भूतव्यथया ह्युपलक्षितम् ।
विनिहन्ति विशेषेण त्वण्डाधारभवामयम् ॥ ६१ ॥
रससिन्दूरसौभाग्यसयुतं चन्द्रलोहकम् ।
शीलितं रजनीवारा मस्ताहद्वितयोन्मितम् ॥ ६२ ॥
क्षतान्वितं चातिमात्रं पूतिस्रावसमायुतम् ।
गर्भाशयस्य सङ्कोचं नाशयत्यविकल्पतः ॥ ६३ ॥
तारं सलोहं माक्षीकरससिन्दूरसयुतम् ।
यवानीचित्रकक्काथयुतं तु परिशीलितम् ॥ ६४ ॥
गृध्रसीं चैव विश्वाचीं तथैव त्रिकवेदनाम् ।
त्रिविधस्थानसभूतं नाडीशूलं व्यपोहति ॥ ६५ ॥
पर्पटोशीरधान्यादिपित्तघ्नक्काथसयुतम् ।
चन्द्रलोहं निहन्त्याशु पित्तं शाखासमाश्रितम् ॥ ६६ ॥
राजावर्तसमायुक्तं रजतं परिशीलितम् ।
मदात्ययात्ययकरं समाख्यातं विशेषतः ॥ ६७ ॥
चोपचीनीसमायुक्तं रजतं परिशीलितम् ।

आध्मानं चिरसञ्जातं नाशयत्याशु निश्चितम् ॥ ६८ ॥
सितोपलायुतं रौप्यं यत्नतः परिशीलितम् ।
सत्वरं नाशयत्येव दाहं शाखाश्रितं ध्रुवम् ॥ ६९ ॥
सिताघृतैलासंयुक्तं रजतन्तु निषेवितम् ।
उन्मादं नाशयत्येव ह्यचिरादेव दारुणम् ॥ ७० ॥
त्रिजातकसमायुक्तं रजतं परिशीलितम् ।
प्रमेहादिकरोगांश्च द्रुतमेव निवारयेत् ॥ ७१ ॥
क्षीरकाकोलिकोपेतं चोपचीनीसमन्वितम् ।
रससिन्दूरसंयुक्तं रजतं परिशीलितम् ॥ ७२ ॥
गर्भाशयाज्जायमानं सशूलं सकुसुमोद्गमम् ।
श्लैष्मिकन्तु कलास्रावं द्रुतमेव विनाशयेत् ॥ ७३ ॥

स्थिरात्मगुप्ताशतमूलिकाभि-
र्निषेवितं वै खलु चन्द्रलोहम् ।
मासद्वयेनैव निहन्ति कार्श्यं
बल्यञ्च वृष्यञ्च परं प्रदिष्टम् ॥ ७४ ॥

कृमिघ्नभल्लातकनिश्चरर्के-
र्यत्नेन तारं परिशीलितन्तु ।
मासैकयोगेन हि सुन्दरीणां
सौन्दर्यवृद्धिं जनयेन्नितान्तम् ॥ ७५ ॥

अथ सोरकाम्लीयरजतस्य निर्माणप्रकारः

सूचीवेध्यानि पत्राणि रजतस्य समाहरेत् ।
कर्तर्या कर्तयेच्चाथ कणान् सूक्ष्मांस्तु राजतान् ॥ ७६ ॥
निधाय काचचषके विशुद्धं सोरकाम्लकम् ।
विन्दुशो निक्षिपेत्तत्र यावच्च द्रुतिमाप्नुयात् ॥ ७७ ॥

मोरकद्रावसम्पाते धूमोऽत्युग्रोऽभिजायते ।
अतो द्राव क्षिपन् वक्त्रमन्यत परिवर्तयेत् ॥ ७८ ॥
सताम्र चेद्भवेत्तार तदा नीलो भवेद् द्रव. ।
निर्मल चेद्भवेत्तार द्रव. शुक्लस्तदा भवेत् ॥ ७९ ॥
द्रवेऽस्मिन्नथ वै तीक्ष्ण लवणद्रावक क्षिपेत् ।
यावत्तत्र किलाटाभ तार विनिपतत्यध ॥ ८० ॥
निवृत्ते तु किलाटाभवस्तुपाते तु निश्चितम् ।
न क्षिपेल्लवणद्राव रसायननिधानवित् ॥ ८१ ॥
अल्पकालावसानेऽथ जलीयाश तदूर्ध्वगम् ।
निपातयेत्प्रयत्नेन किलाटाभपदार्थत ॥ ८२ ॥
पीताश्मसुमाकारप्रणाल्या सारक दलम् ।
विन्यस्य चेम रजत क्षालयेद्विमलाम्भसा ॥ ८३ ॥
जल सारकपत्रान्तर्निर्यात तलपात्रगम् ।
परीक्षेत प्रयत्नेन रसायनविधानवित् ॥ ८४ ॥
आदायैतज्जल प्राज्ञ शरावे स्वल्पमात्रकम् ।
नृसारवाष्पसयुक्त द्रव किञ्चिद्विनिक्षिपेत् ॥ ८५ ॥
नृसारवाष्पसयुक्तद्रवक्षेपेण चेदिदम् ।
जल नीलत्वमायाति तदा धौत तु रौप्यकम् ॥ ८६ ॥
सताम्रमधुनापीति व्यवस्येद्रसकोविद ।
तार प्रक्षालयेद्यावन्न जहाति हि नीलताम् ॥ ८७ ॥
ताम्राशरहित रौप्य काचपात्रे ततो न्यसेत् ।
जलेनाप्लाव्य स्वल्प तु लवणद्रावक क्षिपेत् ॥ ८८ ॥
यशदस्य च पत्राणि स्वल्पानीह क्षिपेत्तथा ।
अल्पकालावसानेऽथ रौप्य ताम्रादिवर्जितम् ॥ ८९ ॥
भस्मप्रभ काचपात्रतलग जायते ध्रुवम् ।

तत. खलु व्यतिक्रान्ते सप्ताहे वा दिनाष्टके ॥ ९० ॥
रौप्य रक्षन् जलीयाश प्रयत्नेनापसारयेत् ।
ततः सारकपत्रेण रौप्य भस्मप्रभ पुनः ॥ ६१ ॥
नारिकेणाम्भसा निज्ञः चालयेदविलम्बितम् ।
तत' सारकपत्रान्तर्निर्यात सलिल पुन ॥ ६२ ॥
प्रयत्नेन परीक्षेत रसायननिशारद ।
आदायतज्जल स्वल्प काचपात्रे तु निन्यसेत् ॥ ६३ ॥
नृसारबाष्पसयुक्त जल किञ्चिद्विनिक्षिपेत् ।
नृसारबाष्पसयुक्तजलक्षेपेण चेदिदम् ॥ ९४ ॥
जल शुक्लत्वमायाति तदा तारन्तु निश्चितम् ।
सद्भावमधुनापीति व्यवस्येद्रसकोविद ॥ ६५ ॥
तारत्प्रक्षालयेद्यावत्तन्न त्यजति शुक्लताम् ।
द्रावकांशोज्झित तार तत काचशरावके ॥ ९६ ॥
न्यस्याथ गोरकद्राव दत्त्वा मद्रावयेत्सुधी. ।
तत सुराप्रदीपाग्रौ पचेद्यत्नेन कोविदः ॥ ९७ ॥
यथा नोत्प्लवते तोय तथा सशोषयेद् द्रवम् ।
क्षीणे जले भवेच्छुक्ल शलाकाकारचूर्णम् ॥ ९८ ॥
गोरकाम्लीयरजतमेतदुक्त भिषग्वरै ।
ततो निधापयेन्नीलकाचकुप्या निधानवित् ॥ ९९ ॥
इद निनिहित शुक्लकाचकुप्यामिनाशुभि' ।
स्पृष्ट कृष्णत्वमायाति तस्मात्सरक्षयेत्तथा ॥ १०० ॥

प्रसङ्गात्प्रयसादरबाष्पद्रवस्य निर्माणप्रकार

सुदग्ध चूर्णपाषाण नारा निर्वापित भृशम् ।
द्विभागिक शुष्कचूर्ण, भागिक नरसादरम् ॥ १ १
चूर्णीकृत प्रयत्नेन काचकुप्या तु निन्यसेत् ।
निप. निन्यस्य कूपीं, कूपीमुखे तत ॥ १०

मेलयेत्काचनलिकामुखमेकं प्रयत्नतः ।
अपरं च मुखं तस्या नित्यमेव जलपूरितम् ॥ १०३ ॥
अन्यस्मिन्काचकूपे तु तोयमञ्जनपूर्वकम् ।
ततस्त्रिपादिकाधस्तात्सुरादीपं प्रदीपयेत् ॥ १०४ ॥
रसायनविधानज्ञस्तानन्मन्दाग्निना पचेत् ।
नृसारबाष्पं द्रवतां याति यावज्जले भृशम् ॥ १०५ ॥
संजायते स्वच्छजलप्रकाशो
द्रवः सुतीव्रः खलु चातिरम्यः ।
समीरितोऽयं भिषजां वरेण्यै-
र्नृसारबाष्पद्रवनामधेयः ॥ १०६ ॥

नवसादरबाष्पद्रवस्य गुणाः

नवसादरबाष्पोत्थद्रवोऽयमतिशोभनः ।
वरटीवृश्चिकादीनां विशेषाद्विषनाशनः ॥ १०७ ॥
सम्मेल्य प्रचुरं तोयं रसायनपरीक्षणे ।
द्रवोऽयं विनियोक्तव्यो रसायनविशारदैः ॥ १०८ ॥

अस्य आमयिकः प्रयोगः

सजलोऽयं द्रवो युक्त्या भृशमाघ्रापितो द्रुतम् ।
विनाशयति मूर्च्छां च तत्तदुत्थानमम्भसम् ॥ १०९ ॥

अथ सोरकाम्लीयरजतस्य गुणाः

सोरकाम्लीयरजतं द्रवशक्तिप्रभेदतः ।
अभिष्यन्दहरं कामं पोथक्यादिविकारनुत् ॥ ११० ॥
विसर्पस्फोटशमनं व्रणमेहक्षतापहम् ।
तथैव च समाख्यातं श्वेतप्रदरनाशनम् ॥ १११ ॥

सोरकाम्लीयरजतद्रवस्य निर्माणप्रकारः

परिस्रुतं तु सलिलं हरेत्सार्द्धपलद्वयम् ।

निर्मले काचचषके विन्यसेद्रसकोविदः ॥ ११२ ॥
सोरकाम्लीयरजतं गुञ्जाष्टकमितं क्षिपेत् ।
द्रवीभूतं ततो नीलकाचकुप्यां निधापयेत् ॥ ११३ ॥
सोरकाम्लीयरजतद्रवोऽयं भाषितो बुधैः ।
विशेषतो ह्यभिष्यन्दपोथक्याद्यक्षिरोगनुत् ॥ ११४ ॥

अस्य आमयिकः प्रयोगः

सोरकाम्लीयरजतद्रवस्यास्य निरन्तरम् ।
अक्ष्णोः सुविस्फारितयोर्नरस्योत्तानशायिनः ॥ ११५ ॥
विन्दुक्षेपकयन्त्रेण द्वित्रिर्विन्दुप्रयोगतः ।
पोथक्यभिष्यन्दभवा बाधा शीघ्रं प्रशाम्यति॥ ११६ ॥

द्वितीयः सोरकाम्लीयरजतद्रवः

सोरकाम्लीयरजतं द्वात्रिंशद्गुञ्जमभितम् ।
सार्द्धद्वितोलकमिते परिस्रुतजले क्षिपेत् ॥ ११७ ॥
विज्ञाय विद्रुतं नीलकाचकुप्यां न्यसेद् द्रुतम् ।
सोरकाम्लीयरजतद्रवोऽयं स्फोटकादिनुत् ॥ ११८ ॥

अस्य प्रयोगविधिः

विसर्पशोथं परितो द्रवोऽयं खलु लेपितः ।
विनिहन्त्यचिरादेव विसर्पस्य विसर्पिताम् ॥ ११९ ॥
अनेनैव प्रकारेण विस्फोटश्चयथो भृशम् ।
लिप्तो द्रवोऽयं हन्त्याशु विस्फोटस्य विसर्पिताम् ॥ १२० ॥

तृतीयः सोरकाम्लीयरजतद्रवः

परिस्रुते तु सलिले पञ्चतोलकसम्मिते ।
सोरकाम्लीयरजतं गुञ्जैकं वा तदर्धकम् ॥ १२१ ॥
क्षिप्त्वाथ विद्रुतं नीलकाचकुप्यां तु विन्यसेत् ।
सोरकाम्लीयरजतद्रवोऽयं प्रदरादिनुत् ॥ १२२ ॥

अस्य प्रयोगविधिः

उत्तराह्वयनस्त्युक्तरीत्या युक्तस्तनय द्रन ।
निहन्ति व्रणमेहश्च श्वेतप्रदरजा रुजम् ॥ १२३ ॥

इति रजतविज्ञानीयो नाम षोडशस्तरङ्गः

---

## अथ ताम्रविज्ञानीय सप्तदशस्तरङ्ग

ताम्रस्य नामानि

ताम्र शुल्व रक्तक म्लेच्छरक्त
नेपालीय म्यम्बक सूर्यलोहम् ।
त्वाष्ट्र त्वर्क सूर्यपर्यायसञ्ज
द्विष्ट द्वयष्ट त्वम्नक कीर्तित तत् ॥ १ ॥
उदुम्बरश्चारविन्द सूर्याङ्क लोहितायसम् ।
रविप्रिय भास्वर च ताम्रक च प्रकीर्तितम् ॥ २ ॥

ग्राह्यताम्रस्य स्वरूपम्

घनघातसह सुचिक्कण विमलश्चाथ जपासुमप्रभम् ।
मृदु चैव मदाकरोद्भव रविलोह खलु कीर्तित नरम् ॥ ३ ॥

प्रकारान्तरेण जात्यताम्रस्य स्वरूपम्

स्निग्ध मृदु घन स्वच्छ जपाकुसुमसप्रभम् ।
लोहनागादिरहितं जात्य ताम्र प्रकीर्तितम् ॥ ४ ॥

त्याज्यताम्रस्य स्वरूपम्

मदल पाण्डुरश्चैव कठिन लघु भङ्गुरम् ।
ममल स्वगनिन्दन्तु वर्जयेद्रसकर्मणि ॥ ५ ॥
घनघातासह कृष्ण श्वेत लोहादिसङ्गतम् ।
अतिस्तब्धश्च रूक्षञ्च ताम्र त्याज्य निगद्यते ॥ ६ ॥

ताम्रस्य द्वैविध्यम्

नेपाल म्लेच्छक चेति ताम्र द्विविधमुच्यते ।
नेपाल जात्यमाख्यात म्लेच्छक त्वपर स्मृतम् ॥ ७ ॥

नेपालस्य लक्षणम्

घनघातसह स्निग्ध कोमल गुरु लोहितम् ।
निर्मल गुणकृच्चैव नेपाल ताम्रमुच्यते ॥ ८ ॥

म्लेच्छकस्य स्वरूपम्

कृष्णच्छाय सुकठिन सितञ्चारुणक तथा ।
सुधौतमपि कृष्ण स्यान्म्लेच्छक ताम्रमुच्यते ॥ ९ ॥

ताम्रशोधनस्य प्रयोजनम्

ताम्र निहन्ति निमला खलु कायकान्ति
नून नितान्तमचिराज्जनयेच्च भ्रान्तिम् ।
भ्रान्ति तथा जनयतीह हि नैति शान्ति
चेत्ताम्रक त्वनिमल खलु मारित स्यात् ॥ १० ॥

शुल्व निरर्दयति मर्गजगात्रताप
क्षिप्र नयत्यपि च शोषमशेषधातून् ।
काम विरेचयति वै जनयेच्च मूर्च्छा
मशुद्धिहीनमिह चेत्खलु मारित स्यात् ॥ ११ ॥

ताम्रस्य प्रथम शोधनप्रकार

पत्रीकृतन्तु तरणि ज्वलने प्रतप्त
चाङ्गेरिकादलरसे खपयेद्विधिज्ञ ।
इत्थ निशोधितमल खलु सूर्यलोह
मयोजयेन्मृतिनिधौ भिषजा वरेण्य ॥ १२ ॥

द्वितीय शोधनप्रकार

रविलोहदल पिठरीनिहित

खलु शीतमहस्यरसे तु दिनम् ।
परिपाचितमत्यचिराच्छियत
निर्मलत्वमुपैत्यतिवेलमिदम् ॥ १३ ॥

तृतीय शोधनप्रकार

नेपालशुल्बस्य दलानि सूक्ष्माण्यादाय सिन्धूत्थसमन्वितानि
सम्वेदयेन्मन्दिरवारिपूरे त्वनुत्तमा शुद्धिमिहोपयाति ॥ १४॥

चतुर्थ शोधनप्रकार

सिन्धूत्थनत्यर्कपय प्रलिप्तान्यादाय पत्राणि रविप्रियस्य ।
प्रताप्य वह्नावथ सिन्दुवारद्रवे निषिञ्चेत् खलु सप्तवारम् ॥१५॥
अनेन तु विधानेन विशुद्ध लोहितायसम् ।
मारणाय प्रयुञ्जीत नीतशङ्को भिषग्वर ॥ १६ ॥

पञ्चम शोधनप्रकार

वस्त्रेशसिन्धूत्थसमन्वितानि
नेपालशुल्बस्य दलानि कामम् ।
गोमूत्रयुक्तानि पचेद् द्वियाम
रविप्रिय शुद्ध्यति नात्र शङ्का ॥ १७ ॥

षष्ठ शोधनप्रकार

नाराम्ललिप्तानि तु ताम्रपत्रा
ण्यग्नौ प्रताप्य स्नपयेत्तु तक्रे ।
क्वाथे कुलत्थप्रभवे च ताम्र
प्रयाति शुद्धिं खलु निर्विशेषाम् ॥ १८ ॥

ताम्रस्य प्रथमो मारणप्रकार

तुल्याशसशोधितहिङ्गुलेन मलुङ्गनीरेण रवेर्दलानाम् ।
पिष्टिं विधायाथ विशोष्य घर्म सुश्लक्ष्णचूर्णञ्च ततो विदध्यात् १९

१-नीलपुष्प शीतसहोनिर्गुण्डी नीलसिन्दुका-इतिधन्वन्तरि ।

ऊर्ध्वपातनयन्त्रे च निधानज्ञस्ततः पचेत् ।
निर्विशेषविशुद्धश्च रसराज समाहरेत् ॥ २० ॥
एव वारत्रय कुर्याद्वारमेकमथापि वा
रविचूर्णसमञ्चाथ गन्ध दत्त्वा विमर्दयेत् ॥ २१ ॥
त्रिवार पुटयेदेव वारद्वयमथापि वा ।
इत्थ मृत ताम्रक स्यादमृतीकरणोचितम् ॥ २२ ॥

द्वितीयो मारणप्रकार

पादांशसशोधितपारदेन सुसूक्ष्मपत्राणि रवेर्विमर्द्य ।
चाङ्गेरिकापत्ररसप्रपिष्टतुल्यांशगन्धेन च पेषयेद्वै ॥ २३ ॥
विशोष्य घर्मे खलु सम्पुटस्थ पुटेत् त्रिवार भिषगप्रमत्त. ।
इत्थ मृत ताम्रकमामयज्ञ' प्रयोजयेत्खल्वमृतक्रियायै ॥२४॥

तृतीयो मारणप्रकार

विशुद्धशुल्वस्य दलानि निम्बुद्रवप्रपिष्टेश्वरगन्धलेपात् ।
विशोष्य घर्मे पुटितानि नून वारत्रयेणेह मृतिं प्रयान्ति ॥२५॥

चतुर्थो मारणप्रकार

ताम्र पत्रीकृत शुद्ध भिषग् दशपलोन्मितम् ।
ताम्रद्विगुणितश्चैव गन्ध दत्त्वा विमर्दयेत् ॥ २६ ॥
सम्पुटस्थ ततः कृत्वा मृदा सन्धि निरोधयेत ।
अहोरात्र पचेद्यत्नाद् वालुकायन्त्रग भिषक् ॥ २७ ॥
स्वाङ्गशीतन्तु विज्ञाय सम्पुट त्ववतारयेत् ।
ताम्रोन्मित बलि दत्त्वा शुल्व खल्वेऽथ पेषयेत् ॥ २८ ॥
इत्थ त्रिवार पुटयेत्तुल्य गन्ध विनिक्षिपन् ।
एव मृत ताम्रक स्यादञ्जनादौ गुणावहम् ॥ २९ ॥

पञ्चमो मारणप्रकार

नेपालशुल्वस्य दलानि शुद्धान्यादाय पूर्वं भिषजा वरेण्य ।

तुल्यांशगन्धेशजकज्जलेन पादांशिकां गैरिकशिलाञ्च शुद्धाम् ॥३०॥
दत्त्वा तदर्धं हरितालकञ्च कन्याद्रवेणेह विमर्द्य वैद्य ।
विशोष्य घर्मे पुटयेद्विधिज्ञ' प्रयाति ताम्रं मृतिमाशुपूर्वाम् ॥३१॥

अथ मारणप्रकार

सूचीसुवेध्य खलु ताम्रपत्रं तुल्यांशगन्धेशजकज्जलेन ।
सम समादाय भिषग्वरेण्य' सम्पेषयेद्धि स्वरसे' कुमार्याः ॥ ३२ ॥
विशोष्य घर्मेऽथ शरावमध्ये पुटेद्विधिज्ञो लवणाग्न्ययन्त्रे ।
इत्थं दिनार्द्धं परिपाचनेन यनुत्तमां याति मृतिन्तु ताम्रम् ॥३३॥

अमृतीकरणस्य प्रयोजनम्

मृतमप्यरविन्दन्तु ह्यमृतीकरणोज्झितम् ।
सेवितं दर्शयत्यष्टौ दोषानाशु विषोपमान् ॥ ३४ ॥
तस्मान्मृतस्य ताम्रस्य दोषाष्टकनिवृत्तये ।
अमृतीकरणं यत्नाद् विदध्याद्भिषजाग्रणी' ॥ ३५ ॥

दोषाष्टकनिरूपणम्

भ्रान्तिर्भ्रान्तिश्चित्तसन्तापशोषा
शाटोत्क्लेदश्चारुचिर्दाहमोहौ ।
इत्यष्टौ वै शुल्बलोहस्य दोषा
पूर्वाचार्यै क्लेशदा सम्प्रदिष्टाः ॥ ३६ ॥

प्रथमोऽमृतीकरणप्रकार

सुमृतं ताम्रचूर्णन्तु तदर्धं गन्धकं तथा ।
पञ्चामृतेन सम्पेष्य विधानज्ञो भिषग्वर ॥ ३७ ॥
शरावसम्पुटे न्यस्य ताम्रं निहितचक्रिकम् ।

---

१-तुल्यांशौ समानभागिनौ यौ गन्धेशौ गन्धकपारदौ ताभ्यां जातं निष्पादितमिति यावत् यत् कज्जलं कज्जलिका तदित्यर्थ । तद्यानुक्तमानत्वेन ताम्रपत्रं समं ग्राह्यम् ।

त्रिवारं पुटयेदेवं रसतन्त्रविचक्षणः ॥ ३८ ॥

श्लक्ष्णखल्वेऽथ सम्पेष्य काचकुप्यां तु विन्यसेत् ।
अमृतीकरणादेवं ताम्रं स्यादमृतोपमम् ॥ ३९ ॥

द्वितीयोऽमृतीकरणप्रकारः

सम्यङ्मृतं सूर्यसखस्य चूर्णम्
तदर्धमशोधितगन्धकञ्च ।
दत्त्वा ततोऽम्ले खलु निम्बुकोत्थे
सम्पेषयेद् याममलं रसज्ञः ॥ ४० ॥

गोलं निधायाऽथ रविप्रियस्य
ह्युपयर्धं सूरणकन्दसंस्थम् ।
मृत्कर्पटैश्चाथ विलिप्य गोलं
पुटे गजाख्ये पुटयेद्विधिज्ञः ॥ ४१ ॥

रसागमज्ञैरनया तु रीत्यामृतक्रियायां खलु पाचितन्तु ।
भ्रान्त्यादिकं न प्रकरोति नूनं ताम्रं निकामं त्वमृतोपमं स्यात् ।४२।

तृतीयोऽमृतीकरणप्रकारः

सम्यङ्मृतं सूर्यसखस्य चूर्णं
सम्पेषयेद्धि स्वरसे कुमार्याः ।
विशोष्य घर्मेऽथ शरावसंस्थं
पचेद् वराहाख्यपुटेऽष्टवारम् ॥ ४३ ॥

रीत्यानया वै ह्यमृतीकृतन्तु
रविप्रियं शीलितमप्यमन्दम् ।
दोषाष्टकं नैव करोति नूनं
ताम्रं निकामं त्वमृतोपमं स्यात् ॥ ४४ ॥

मृतताम्रस्य गुणाः

ताम्रं तिक्तं तुवरमधुरं पाकतश्चोष्णवीर्यं
त्वम्लं स्निग्धं खलु विषहरं सारकं लेखनञ्च ।
पित्तोद्भूतानपि च कफजान् श्लेष्मपित्तोत्थितान् वा ।
घोरान् रोगानपि हि चिरजानप्यशेषांश्च हन्यात् ॥ ४५ ॥

अपि च

ताम्रं दीपनमुत्तमं क्रिमिहरं कुष्ठामयध्वंसनं
कासश्वासविधूननं क्षयहरं पाण्ड्वामयघ्नं परम् ।
दुर्नामग्रहणीगदप्रशमनं नेत्रामयेपूत्तमं
स्थौल्यध्वंसकरं त्वलं नहुगिरा नानामयध्वंसनम् ॥ ४६ ॥
ताम्रं मृतं ज्वरहरं व्रणरोपणञ्च
स्तन्यं परं गरहरं हृदुरामयघ्नम् ।
आयुष्यमप्युभयतः परिशोधनञ्च
निर्धारितं खलु रसायनतन्त्रविज्ञैः ॥ ४७ ॥

अपि च

रसनिप्रियन्तु सुमृतं परं शूलनिषूदनम् ।
अम्लपित्तप्रशमनं यकृत्प्लीहोदरापहम् ॥ ४८ ॥
अपस्मारप्रशमनं विषूचीक्रिमिनाशनम् ।
आक्षेपापहमत्यन्तं तथा खल्लीप्रणाशनम् ॥ ४९ ॥
अग्निमान्द्यहरञ्चैव परिणामाख्यशूलनुत् ।
अन्त्रशोथान्तकञ्चापि समाख्यातं भिषग्वरैः ॥ ५० ॥

त्रिशिष्टा गुणाः

मृतन्तु ताम्रं शमयत्यवश्यं
शाखाश्रितं कोष्ठसमाश्रितं वा ।
जन्तूद्गमश्चापि मलाभिधानं
पित्तं कफञ्चापि परं प्रवृद्धम् ॥ ५१ ॥

ताम्रस्य मात्रानिरूपणम्

अष्टमाशाद्रक्तिकाया रक्तिकार्द्धमित परम् ।
मृत ताम्र प्रयुञ्जीत बलकालाद्यपेक्षया ॥ ५२ ॥

अथ मृतताम्रस्य आमयिक प्रयोग

समरसमलिनिम्बूद्रावपिष्ट्या निपक्क
त्रिकटुमरिचयुक्त रक्तिकार्द्ध तु ताम्रम् ।
अपहरति नितान्त हस्तकम्पादिवात
त्वपनयति च काम पक्षघातादिरोगान् ॥ ५३ ॥

गुञ्जार्द्धमात्र खलु सूर्यलोह
द्विरक्तिकोशीररजोविमिश्रम् ।
सनागपुष्प शिशिरेण वारा
पीत हरत्येव जनेन मूर्छाम् ॥ ५४ ॥

रविप्रिय शीलितमाज्ययुक्त
दुगलभाक्काथविमिश्रितन्तु ।
विनाशयत्याशु गद भ्रमाख्य
यथा समीरः खलु मेघवृन्दम् ॥ ५५ ॥

करञ्जबीजोत्थरजोविमिश्र
गुञ्जार्द्धमात्र मृतसूर्यलोहम् ।
पित्तोद्भव वापि कफोत्थित वा
शूल निहन्यान्नहि सशयोऽत्र ॥ ५६ ॥

कटुत्रिकाढ्य मृतशङ्खयुक्त
गुञ्जार्द्धमात्र खलु सूर्यलोहम् ।
प्लीहानमत्युग्ररुज समन्तात्
निहन्ति मासैकनिषेवणेन ॥ ५७ ॥

यराटभस्मसमयुत द्विगुञ्जजीरकान्वितम् ।
रविप्रियन्तु शीलित निहन्ति सूतिकामयम् ॥ ५८ ॥
कणाचूर्णसमायुक्त मधुना परिशीलितम् ।
रविप्रिय समाख्यात त्वग्निमन्दीपन परम् ॥ ५६ ॥
धात्रीचूर्णसमायुक्त ताम्र गुञ्जार्धसम्मितम् ।
अम्लपित्त निहन्त्याशु वृक्ष शक्राशनिर्यथा ॥ ६० ॥
भार्ङ्गीविनीतकोपेत गुञ्जार्धप्रमित मृतम् ।
ताम्र मार्द्रेण मलीढ कामश्वास व्यपोहति ॥ ६१ ॥
नागपुष्पासमामिश्र ताम्रक मधुसयुतम् ।
शीलित माससमात्रेण मर्शाण्यर्शांसि नाशयेत् ॥ ६२ ॥
अश्वत्थवल्कभस्माढ्य रविलोहन्तु शीलितम् ।
गुञ्जापादाशमात्रेण छर्दिं जयति दारुणाम् ॥ ६३ ॥
नीनपूरद्रवोपेत रविलोह समाक्षिकम् ।
निषेवित निहन्त्याशु हिक्का पञ्च सुदारुणा ॥ ६४ ॥
रविलोह तु सुमृत केवल बलिनारितम् ।
अञ्जनाद्विनिहन्त्याशु दोषान्पटलसंश्रितान् ॥ ६५ ॥
कटुत्रिकाढ्य खलु सूर्यलोह कणाशिफाचूर्णयुत तु लीढम् ।
क्षौद्रेण सप्ताहनिषेवित तु द्रुत यकृद्दाल्युदर निहन्ति ॥ ६६
दुरालभाक्वाथयुत सघृत रविलोहकम् ।
व्यपोहति विशेषेण भ्रमरोग सुदारुणम् ॥ ६७ ॥
ताम्र समविष धूर्तद्रवेण परिभावितम् ।
शीलित त्वार्द्रकद्रावैं सन्निपात व्यपोहति ॥ ६८ ॥
आर्द्रकस्वरसोपेत ताम्र तु परिशीलितम् ।
नागिनीदलमध्यस्थ गुल्मरोग व्यपोहति ॥ ६९ ॥
रसमिन्दूरसयुक्त रविलोहसनारतम् ।

कण्टकारीफलोद्भूतरजसा परिशीलितम ॥ ७० ॥
सशब्दमाक्षेपयुतमानीलाननमण्डलम् ।
प्ररुद्धश्वासनिश्वासं काम नाशयति द्रुतम् ॥ ७१ ॥
अत्यल्पमात्रया ताम्र दग्धाश्वत्थत्वचाम्भसा ।
बर्हिपक्षविभूतिर्वा छर्दि जयति दुर्जयाम् ॥ ७२ ॥
व्योपचित्रकणामूलमार्गीभार्ङ्गीकषायतः ।
पिप्पल्यादिगणक्काथयुत वा रविलोहकम् ॥ ७३ ॥
तीव्रहृच्छूलसयुक्त तथाक्षेपसमन्वितम् ।
शीलित नाशयत्याशु शूल सकष्टसज्ञकम् ॥ ७४ ॥
ताम्र समस्वर्णयुत जटामासीरजोन्वितम् ।
शीलित विनिहन्त्याशु त्वाक्षेपमतिदारुणम ॥ ७५ ॥
प्रबद्धमुष्टिक काममानीलाननमण्डलम् ।
पानाशनादिसमये घुर्घुरायितकण्ठकम् ॥ ७६ ॥
अत्यल्पकालिक चापि दारुण दैर्घकालिकम् ।
तथा पादोदरगता खल्लीं खल्वतिदारुणाम ॥ ७७ ॥
रेणुकाशुण्ठिकाकन्यासारदारुसितान्वितम् ।
अनारत विशेषेण रविलोह तु शीलितम् ॥ ७८ ॥
निम्नोदरे नक्षसि वा युतमाक्षेपपीडया ।
सचीत्कार सप्रलाप दारुणव्यथयान्वितम् ॥ ७९ ॥
सनाभि वा त्रिनाभिपायुत खल्लीसमन्वितम् ।
बाधक वा रजोरोध विनाशयति सत्वरम् ॥ ८० ॥
रसमिन्दूरसयुक्त सुमृत ह्यमृतीकृतम् ।
शीलितं रविलोह तु सदकर्पूरसयुतम् ॥ ८१ ॥
श्वेतातितरलात्यच्छमला भूयस्तृषान्विताम् ।
 [illegible] र्गं खल्लीसमन्विताम् ॥ ८२ ॥

प्र गिणनाटिका क्रामभानीलाननमण्डलाम् ।
शीलित शमयत्याशु दारुणा तु विश्वचिकाम् ॥ ८३ ॥
कज्जलीरसगन्धेन्द्रयुत ताम्र तु शीलितम् ।
जानीलोद्य चातिफेन परिश्रान्तकनीनिकम् ॥ ८४ ॥
मन्दन मचीत्कार चारुधाक्षेपमुल्बणम् ।
आरटन्मचलद्दन्तमपस्मार विनाशयेत् ॥ ८५ ॥
लोहस्वर्णसमायुक्त ताम्र गन्धकजारितम् ।
शीलित नाशयत्याशु श्वास पस्मदारुणम् ॥ ८६ ॥
प्रचुराक्षेपसयुक्तमानीलमुखमण्डलम् ।
आश्वासपथसङ्कोचक्रियाप्रत्ययकारिणम ॥ ८७ ॥
तिक्तामृतापर्पटकाकिरातान्दकपायत ।
ताम्र तु शीलित हन्ति पुनरावर्तकज्वरम ॥ ८८ ॥
पुनर्नवानिशासिपश्रृङ्गीद्रवनिभावितम् ।
ताम्र गन्धहत स्यात व्रणशोधनरोपणम् ॥ ८९ ॥
रविलोह बलिहत तोलकैकमित शुभम् ।
तोलकाष्टमित चैव सुघृष्ट रक्तचन्दनम ॥ ९० ॥
भावित भृङ्गनीरेण तत्रयार प्रयत्नत ।
मधुनाञ्जनत स्यात तिमिरापहमुत्तमम ॥ ९१ ॥
तारताप्ययुत ताम्र चित्रकद्रवभावितम् ।
सूर्यावर्तादिकान् घोरान् शिरोरोगान् विनाशयेत् ॥ ९२ ॥
यवक्षाऽऽम्लसमायुक्त रसगन्धकजारितम् ।
शीलित रविलोह तु मत कुष्ठापह परम् ॥ ९३ ॥

रविताण्डवरस

पत्रीकृत सुविमल पलैक रविलोहकम् ।
सूतद्विगुणगन्धाश्मकृतकज्जलिका समाम् ॥ ९४ ॥

दत्त्वा कुमारीतोयेन पेषयेत्तु दिनत्रयम् ।
विधाय गोलकमथ शोषयेदातपे भृशम् ॥ ९५ ॥
सम्पुटस्थं तत' कृत्वा हण्डिकाया निधापयेत् ।
आपूर्य भस्मनाऽऽकण्ठं चुल्लिकाया तु विन्यसेत् ॥ ९६ ॥
प्रखरेणानलेनाथ पचेद् यामत्रयं ततः ।
स्वाङ्गशीतमथोद्धृत्य रविलोहं समाहरेत् ॥ ९७ ॥
निम्बूद्रवेण सम्पेष्य पुटयेत्सप्तधा ततः ।
म्रियते रविलोहं तु भस्म स्यात्कपिशं शुभम् ॥ ९८ ॥

अस्य गुण

रविलोहमिदं स्यात रवितापडवसञ्ज्ञकम् ।
परं भगन्दरहरं निशेपात्परिकीर्तितम् ॥ ९९ ॥

हृदयार्णवरस

कज्जलीद्विगुणं ताम्रं ह्यमृतीकृतमुत्तमम् ।
वरावारा काकमाचीद्रवेण परिमर्दयेत् ॥ १०० ॥
वटिका' कारयेद्धीमो रक्तिकापादसमिताः ।
हृदयार्णवसञ्ज्ञोऽस्य रसो हृद्रोगनाशन ॥ १०१ ॥

त्र्यम्बकेश्वररस

सूक्ष्मपत्रीकृतं ताम्रं त्रिधा गोमूत्रशोधितम् ।
समाहरेद्भिषग्वर्यस्तोलकाष्टकसमितम् ॥ १०२ ॥
रसेश्वरं च निमलं पलपञ्चकसमितम् ।
पेषयेदतियत्नेन निम्बूकद्रवयोगत ॥ १०३ ॥
चत्वारिंशत्तोलमितं गन्धकं निर्मलीकृतम् ।
दत्त्वा तु नागिनीवारा पेषयेद् दिवसद्वयम् ॥ १०४ ॥
विधाय गोलकमथो सम्पुटस्थं तु कारयेत् ।
सन्धिलेपं तत' दत्त्वा त्वतिमन्दाग्नियोगत' ॥ १०५ ॥

पचेद्भूधरयन्त्रेण यत्नतो यामपञ्चकम् ।
स्वाङ्गशीतमथोद्धृत्य मृतं ताम्रं समाहरेत् ॥ १०६ ॥

रविलोहमिदं ख्यातं सम्योपं वह्निमान्द्यहृत् ।
परमर्द्धाङ्गवातघ्नं कम्पवातहरं परम् ॥ १०७ ॥

सूर्यावर्तरसः

सुमृतं रविलोहं तु तोलकाष्टकसम्मितम् ।
सूताभ्रगन्धककृतकज्जलीं ताम्रसमामिताम् ॥ १०८ ॥
दत्त्वा कुमारीनीरेण पेषयेदतियत्नतः ।
निधाय गोलकं सम्यगातपे परिशोषयेत् ॥ १०९ ॥
सम्पुटस्थं ततः कृत्वा वालुकायन्त्रगं पचेत् ।
स्वाङ्गशीतमथोद्धृत्य रविलोहं समाहरेत् ॥ ११० ॥
सूर्यावर्तरसो ह्येष समाख्यातस्तु नामतः ।
विशेषेण मतश्चैतत्खलु श्वासनिषूदनम् ॥ १११ ॥

शूलभञ्जरसः

पलैकप्रमितं ताम्रं पारदं विमलं समम् ।
द्विपलं गन्धपाषाणं त्रिपलं शुद्धतालकम् ॥ ११२ ॥
सम्मेल्य सर्वं यत्नेन पेषयेत्प्रहरद्वयम् ।
विशोष्य घर्मे च ततः सम्पुटस्थं तु कारयेत् ॥ ११३
अजापयःपिष्टटङ्कपिष्ट्या सन्धिं प्रलेपयेत् ।
ऊर्ध्वाधो लवणं दत्त्वा हण्डिकाया तु विन्यसेत् ॥ ११४ ॥
प्रखरेणानलेनाथ वारणाख्यपुटे पुटेत् ।
एवमेकपुटेनैव म्रियते रविलोहकम् ॥ ११५ ॥

अस्य गुणः

समाख्यातो रसोऽस्य तु नाम्ना शूलगजकेशरी ।
अमोघास्त्रमिह ख्यातं शूलनिर्मूलने परम् ॥ ११६ ॥

अथ भूनागसत्त्वपातनप्रकारः

नर्पता भूभुजंगान् उर्णायूद्दीपगुडैः ।
सौभाग्यालक्तकझर्पैः पिण्याकक्षोदयुतैः ॥ ११७ ॥
सम्पेष्य प्राज्ञवरो मूपास्थं तं ध्मयेत् ।
ताम्राभं सत्त्वमयो मुञ्चति क्षिप्रतरम् ॥ ११८ ॥

भूनागसत्त्वस्य मारणम्

भूनागसत्त्वं पलममितन्तु
रसेश्वरं द्वन्दमितञ्च शुद्धम् ।
पलोन्मितं शुद्धसुगन्धचूर्णं
दत्त्वा पुटेद् वन्यकरीषवह्नौ ॥ ११९ ॥
भूनागसत्त्वं पुटितं निर्धनं
त्वनुत्तमां याति मृतिं निकामम् ।
रसागमाम्भोनिधिकर्णधारः
प्रयोजयेत्ताम्रविधानरीत्या ॥ १२० ॥

अस्य गुणाः

भूनागसत्त्वं सुमृतं तु नरं कुष्ठनाशनम् ।
विषघ्नञ्च विशेषेण ताम्रसद्गुणकारकम् ॥ १२१ ॥

अस्य आमयिकप्रयोगः

भूनागसत्त्वं मतिमान् ताम्रवद्विनियोजयेत् ।
ताम्रवच्चानुपानानि सहपानानि चादिशेत् ॥ १२२ ॥

---

१-भूभुजगा -भूनागा ।
२-ऊर्णायु -ऊर्णनाभि (मकड़ी का जाला इति हिन्दीभाषायाम्)
उद्दीप -गुग्गुलु ।
३-सौभाग्य टङ्कणम्, अलक्तम् लाक्षा, झषो मत्स्य ।
४-पिण्याकक्षोद -तिलकिट्टचूर्णमिति यावत् ॥

अथ मयूरपक्षस्य सत्वपातनम्

भूनागसत्वमार्गेण सत्व मायूरपक्षजम् ।
निपातयेन्मारयेश रसतन्त्रविचक्षणः ॥ १२३ ॥
भूनागसत्ववचास्य गुणान् खलु समादिशेत् ।
आमयेषु च यत्नेन ताम्रवद्विनियोजयेत् ॥ १२४ ॥

इति ताम्रविज्ञानीयो नाम सप्तदशस्तरङ्गः

---

## अथ वङ्गविज्ञानीयोऽष्टादशस्तरङ्ग

अथ वङ्गस्य नामानि

वङ्गश्च वङ्गक रङ्ग रङ्गक शुभ्रलोहकम् ।
कुरूप्य त्रपुसञ्चैव त्रपुप त्रपु कीर्तितम् ॥ १ ॥

वङ्गस्य द्वैविध्यम

खुरक मिश्रक चेति वङ्गक द्विविध मतम् ।
खुरक श्रेष्ठमाख्यात मिश्रक त्ववर स्मृतम् ॥ २ ॥

खुरकस्य लक्षणम्

मृदुल निर्मलञ्चैव चन्द्रलोहसमप्रभम् ।
द्रुतद्रावञ्च नि:शब्द खुरक समुदीरितम् ॥ ३ ॥

मिश्रकस्य लक्षणम्

द्रावेऽतिकठिन रूक्ष त्वन्यधातुनिमिश्रितम् ।
धूसर कठिनञ्चैव मिश्रक वङ्गमुच्यते ॥ ४ ॥

वङ्गस्य ग्राह्याग्राह्यत्वनिरूपणम्

खुरकाख्य शुक्लोह ग्रहणाय प्रशस्यते ।
मिश्रक हेयमाख्यात रसतन्त्रविचक्षणै ॥ ५ ॥

वङ्गशोधनस्य प्रयोजनम्

निशुद्धिहीनं खलु शुक्रलोहं
निषेवितं वाप्यमृतं तु नूनम् ।
निहन्ति सर्वां खलु कायकान्तिं
कुष्ठं किलासश्च परं विदध्यात् ॥ ६ ॥

गुल्मप्रमेहक्षयपाण्डुशोथश्लेष्मज्वरादींश्च भगन्दरञ्च ।
शुक्राश्मरीं रक्तनिकारजातान् रोगाननेकान् जनयेच्च नूनम् ॥७॥

अथ वङ्गशोधनस्य प्रथम प्रकार

सुराभिधानं खलु शुक्रलोहं
निधाय दर्व्यां भिषजा वरेण्यः ।
चुल्लीगतश्चाप्यथ गालयित्वा
विशुद्धचूर्णोदकपूर्णगर्भे ॥ ८ ॥

गाढन्तु सच्छिद्रपिधानकेन
क्षिपेत्समाच्छन्नमुखे तु कुम्भे ।
इत्थं निषिक्तं भिषजाश्चवारं
वङ्गं निशुद्धिं समुपैति नूनम् ॥ ९ ॥

द्वितीय शोधनप्रकार

वङ्गकं गालितं लोहदर्वीगतं
सूर्यदुग्धे भृशञ्चैव निर्वापयेत् ।
पूर्वमार्गेण वै शेपकर्माचरेत्
सत्वरं वङ्गकं याति शुद्धिं पराम् ॥ १० ॥

---

१-पूर्वमार्गेण-अव्यवहितप्रदर्शितेन वङ्गशोधनस्य प्रथमप्रकारोक्तमार्गेण शेपकर्म-इहानुक्तमवशिष्टं कर्म (कुम्भस्य अर्कदुग्धेन गर्भदेशपर्यन्तापूरणम्, सच्छिद्रसुदृढपाषाणपिधानकेन तन्मुखस्याच्छादनम् गालितवङ्गस्य परिपेकसमये समुत्प्लवननिरासार्थं [illegible] मृदादिभि स्थिरीकरणादिकञ्च) [illegible] प्रघट्टाभिप्राय ।

तृतीय शोधनप्रकार

वङ्गक द्रावित मिन्दुवारद्रवे
रात्रियुक्तं त्रिधा चेह निर्वापयेत् ।
शेषकर्माचरेत् पूर्वमार्गेण वै
शुभ्रलोह द्रुत याति शुद्धिं पराम् ॥ ११ ॥

द्रावितस्य तु वङ्गस्य द्रवादौ परिषेचने ।
औचित्येनाचरेन्नोचेदुत्प्लुत्योरप्लुत्य निर्दहेत् ॥ १२ ॥

चतुर्थ शोधनप्रकार

वङ्ग प्रद्राव्य यत्नेन लोहदर्वीगत तत ।
निर्वापयेदम्लतक्रे पूर्वोक्तविधिना भिषक् ॥ १३ ॥
तत कुमारिकाद्रावे तद्वदेव निषेचयेत् ।
अनेन विधिना वङ्ग शुद्धिमायाति सर्वथा ॥ १४ ॥

अथ वङ्गमारणस्य प्रथम प्रकार

विशुद्ध वङ्गमादाय कटाहे चुल्लिकास्थिते ।
विनिक्षिपेद् भिषग्वर्यश्चुल्लिकाग्निं प्रदीपयेत् ॥ १५ ॥
वङ्गात् कलांशिक सूत विशुद्ध तत्र निक्षिपेत् ।
विशुद्ध हरितालञ्च स्वल्प स्वल्प मुहुर्मुहु ॥ १६ ॥
निक्षिप्य वनकार्पासदण्डेन परिचालयेत् ।
यावद्भस्म भवेत्तावत्तालचूर्णं समार्पयेत् ॥ १७ ॥
तत शरावेणाच्छाद्य पचेत्तीव्राग्निना भिषक् ।
अनेन विधिना वङ्ग पञ्चता यात्यनुत्तमाम् ॥ १८ ॥

द्वितीयो मारणप्रकार

निर्मल वङ्गमादाय चुल्लिकोपरिसंस्थिते ।
विनिक्षिपेत् कटाहे तु ततो वह्निं प्रदीपयेत् ॥ १९ ॥
विद्रुत वङ्गक ज्ञात्वा रसकर्मविशारद ।

पादांशापामार्गचूर्णं स्वल्पं स्वल्पं मुहुर्मुहुः ॥ २० ॥
निक्षिप्य लोहदण्डेन यत्नतः परिचालयेत् ।
वङ्गभस्म भवेद्यावच्चूर्णं तावत्समापयेत् ॥ २१ ॥
राशीकृत्य ततो भस्म शरावेण पिधापयेत् ।
ततो यामिकपर्य्यन्तं तथा वह्निं प्रदीपयेत् ॥ २२ ॥
ज्वलदङ्गारवर्णं स्याद् वङ्गभस्म यथा ध्रुवम् ।
स्वतः शीतं ततो ज्ञात्वा वङ्गभस्म समाहरेत् ॥ २३ ॥
शङ्खकुन्देन्दुधवलं वङ्गभस्म भवेद् ध्रुवम् ।
इत्थं मृतं वङ्गकन्तु गीतरङ्गे प्रयोजयेत् ॥ २४ ॥

तृतीयो मारणप्रकार

विशुद्धं वङ्गमादाय कटाहे गालयेद्भिषक् ।
पादांशिकं विशुद्धञ्च तत्र सूतं विनिक्षिपेत् ॥ २५ ॥
दत्त्वा सम्मर्द्य यत्नेन द्रुतमेवावतारयेत् ।
वङ्गार्द्धं तालकं दत्त्वा खल्वे सम्पेषयेत्ततः ॥ २६ ॥
श्लक्ष्णचूर्णं ततः कृत्वा रविदुग्धेन मर्दयेत् ।
पिप्पलत्वक्समुत्थाच्छक्षारमध्यगतं भिषक् ॥ २७ ॥
शरावसम्पुटे न्यस्य लावकाख्यपुटे पुटेत् ।
इत्थं पुटद्वयेनैव वङ्गं तु मृतिमाप्नुयात् ॥ २८ ॥

चतुर्थो मारणप्रकार

विशुद्धं वङ्गमादाय कटाहे गालयेद्भिषक् ।
शुष्कपिप्पलवल्कोत्थं चूर्णं तुल्यं विनिक्षिपेत् ॥ २९ ॥
स्वल्पं स्वल्पं मुहुश्चैव लोहदर्व्या प्रचालयेत् ।
वङ्गभस्म भवेद्यावच्चूर्णं तावत्समापयेत् ॥ ३० ॥
राशीकृत्य ततो भस्म शरावेण पिधापयेत् ।
ज्वलदङ्गारवर्णं स्याद् वङ्गभस्म यथा चिरम् ॥ ३१ ॥

तथा प्रदीपयेदग्नि याममेकं भिषग्वर ।
स्वतःशीतं ततो ज्ञात्वा सुमृतं वङ्गमाहरेत् ॥ ३२ ॥
बहुशः क्षालयेत्तोयैः क्षारहीनं यथा भवेत् ।
ततः सर्वप्रयोगेषु वीतशङ्कः प्रयोजयेत् ॥ ३३ ॥

प्रसङ्गात् क्षारशून्यत्वपरीक्षणम्

क्षारशून्यत्वविज्ञानं भिषजां स्यात्कथं स्वतः ।
रसायनोक्तमार्गेण सर्वं तदुपदिश्यते ॥ ३४ ॥
रक्तं वर्णकपत्रं चेद्भस्मनाम्भसि संस्थितम् ।
सर्वथा नीलतां नैति क्षारशून्यं ततो वदेत् ॥ ३५ ॥

पञ्चमो मारणप्रकारः

वङ्गं विशुद्धं प्रद्राव्य मृदुपत्राणि कारयेत् ।
ततोऽर्कदुग्धपिष्टेन तालेन परिलेपयेत् ॥ ३६ ॥
घर्मे संशोष्य यत्नेन वङ्गपत्राणि वै पृथक् ।
चिञ्चात्वक्क्षारमध्यस्थानीह कृत्वा पुटेद्भिषक् ॥ ३७ ॥
एवं पुटत्रयेणैव वङ्गकं याति पञ्चताम् ।
इत्थं मृतं वङ्गकन्तु वीतशङ्कः प्रयोजयेत् ॥ ३८ ॥

सुमृतवङ्गस्य गुणाः

वङ्गं मृतं लघु सरं शिशिरञ्च रूक्षं
मेध्यं सतिक्ततुवरं लवणञ्च किञ्चित् ।
मदोहरं रुचिकरञ्च रसायनञ्च
श्लेष्मामयप्रशमनं खलु सम्प्रदिष्टम् ॥ ३९ ॥

---

१-रक्तं वर्णकपत्रं (आङ्गलभाषायां Red Litmus Paper इति नाम्नाप्रसिद्धम्) वङ्गभस्मधावनाम्भसि निक्षिप्तं यदि नीलवर्णतां नापद्यते तर्हि वङ्गभस्म क्षारशून्यं सञ्जातमिति जानीयात् । अन्यथा सक्षारमिति व्यवस्येत् ।

वङ्ग वान्तिहर पर व्रणहर सर्वप्रमेहापह
चक्षुष्य सुमतिप्रदं क्षयहर शुक्रैकसम्वर्द्धनम् ।
श्वेतासृग्दरनाशन व्रणहर जन्त्वामयध्वंसन
कामं कामविवर्द्धन धृतिकर वर्ण्यं निकाम तथा ॥ ४० ॥
वङ्ग काम मदनजनन स्वप्नमेहामयघ्न
कासश्वासप्रशमनपटु प्रीणन कार्श्यभाजाम् ।
वृष्य बल्य पवनशमन पाण्डुहृद्याऽतिवेल
नाग्जालैः किं भवति नितरा सौख्यद देहभाजाम् ॥४१॥
गर्भाशयच्युतिहर श्वासकृच्छ्रप्रणाशनम् ।
शोषोद्भूतनिशास्वेदोल्बणश्लेष्महर परम् ॥ ४२ ॥

विशिष्टा गुणाः

मृतन्तु वङ्ग परिशीलितन्तु विनाशयेन्नातिचिरेण नूनम् ।
चिरोत्थित श्वासनलीविलग्न कफ प्रवृद्ध मलनामधेयम् ॥४३॥

अपि च

मृतन्तु वङ्ग परिशीलित वै निवारयेन्नातिचिरेण कामम् ।
सर्वाङ्गग मानमनङ्कृतोत्थ प्रसादसञ्ज पवन प्रवृद्धम् ॥ ४४ ॥

वङ्गस्य आप्ण्यशैत्यजनने हेतु

वङ्ग गन्धादियोगेन मारित तूष्णतां व्रजेत् ।
क्षारादिना मृतश्चेह शीतता याति निर्भरम् ॥ ४५ ॥

अस्य मात्रानिरूपणम्

रक्तिकात समारभ्य रक्तिद्वितयसम्मिताम् ।
पूर्णमात्रा प्रयुञ्जीत मृतवङ्गस्य कोविद ॥ ४६ ॥

---

१-प्रमादनामधेय प्रवृद्ध पवनं शमयतीति ज्ञेयम् ।

अस्य आमयिक प्रयोग

गुडूचिकासत्त्वरजोविमिश्र मृतन्तु वङ्ग मधुनावलीढम् ।
विनाशयेन्नातिचिरेण मेहान् मत्तद्विपानन यथा मृगेन्द्र ॥४७

वङ्ग शिलाजतुयुत मधुनावलीढ,
माम निपेवितमल विनिहन्ति मेहान ।
क्षीणाल्पशुष्ककृशदूषितरेतसाञ्च,
वीर्याभिवर्द्धनविशुद्धिविधौ च शस्तम् ॥ ४८ ॥

साज्य वङ्ग शीलितन्तु द्रुत पाण्ड्वामय हरेत् ।
सौभाग्यचूर्णसयुक्त गुल्मञ्चापि विनाशयेत् ॥ ४९ ॥

पिप्पलीचूर्णसयुक्त वङ्गन्तु परिशीलितम् ।
अग्निमान्द्य निहन्त्याशु ज्वरजीर्णं पूगसयुतम् ॥ ५० ॥

हरिद्रया निषेवित मृतन्तु वगमुद्धरेत् ।
निकाममूर्ध्नमारुत तथैव रक्तपित्तकम् ॥ ५१ ॥

रससिन्दूरसयुक्त वङ्ग तु परिशीलितम् ।
काममार्द्रनिशावारा व्रणमेह व्यपोहति ॥ ५२ ॥

वरुणादिगणोद्दिष्टभेषजक्वाथयोगत ।
शीलित वङ्गभसित मत व्रणहर परम् ॥ ५३ ॥

चम्पकस्वरसोपेत सकर्पूरमथापि वा ।
वग निषेवित हन्यान्मुखदौर्गन्ध्यमुल्वणम् ॥ ५४ ॥

वङ्ग कस्तूरिकोपेत वीर्यस्तम्भकर परम् ।
जातीफलक्षौद्रयुत शुक्रपुष्टिकर परम् ॥ ५५ ॥

खदिरक्वथितेनेह वङ्ग चर्मामय हरेत् ।
समुद्रफेनसयुक्त दुष्ट शुक्र विशोधयेत् ॥ ५६ ॥

अपामार्गस्य चूर्णेन वङ्गन्तु परिशीलितम् ।
रक्तिद्वयमित यत्नात पाण्ड्यमाशु विनाशयेत् ॥ ५७ ॥

शाल्मलीमूलसयुक्त वङ्ग रक्तिद्वयोन्मितम् ।
सक्षौद्र सहरिद्रञ्च वीर्यवृद्धिकर परम् ॥ ५८ ॥
लघुशाल्मलिमूलोत्थचूर्णेन परिशीलितम् ।
साभ्रक शुक्रलोहन्तु शुक्रमञ्जनन परम् ॥ ५९ ॥
वङ्गन्तु शर्करोपेत पित्तघ्न समुदाहृतम् ।
निम्बूकस्वरसोपेत देहदाहहर मतम् ॥ ६० ॥
तुलसीदलसयुक्त वङ्ग मेहान् निवारयेत् ।
नागिनीस्वरसोपेत निबन्ध नाशयेद् ध्रुवम् ॥ ६१ ॥
लोहशुक्तिकयोपेत वङ्ग तु परिशीलितम् ।
निगुञ्जरालसहित श्वेतप्रदरनाशनम् ॥ ६२ ॥
वङ्ग शशासृजा वापि निशाकुङ्कुमचन्दनै ।
महिषीक्षीरसपिष्ट मुखच्छाया व्यपोहति ॥ ६३ ॥
रससिन्दूरसयुक्त वगन्तु परिशीलितम् ।
नाशयत्यचिरादेव प्रमेह क्षीणशुक्रताम् ॥ ६४ ॥
तालमूलिकयोपेत वगन्तु परिशीलितम् ।
मासमात्रप्रयोगेण शुक्रतारल्यहृत्परम् ॥ ६५ ॥
नृपावर्तायमयुत रससिन्दूरसयुतम् ।
चन्दनक्वाथसपीत जीर्णज्वरमपोहति ॥ ६६ ॥
ताप्यतारसमायुक्त वग तु परिशीलितम् ।
ऊर्ध्वजत्रुसमुद्भूत नाडीशूल व्यपोहति ॥ ६७ ॥

अथ स्वर्णवङ्गस्य प्रथमो निर्माणप्रकार'

कर्षत्रयमित वग दर्व्यां न्यस्यानले न्यसेत् ।
निद्रुते तत्सम सूत द्रुत तत्र विनिक्षिपेत् ॥ ६८ ॥
द्रुत निक्षिप्य खल्वे च पेषयेदतियत्नत. ।
अम्लेन केनचिद्वापि सह सम्मर्दयेत्तत' ॥ ६९ ॥

विमर्द्य सैन्धवं दत्त्वा बहुशः क्षालयेत्ततः ।
विशुद्धं गन्धकञ्चाथ दद्यादीश्वरसम्मितम् ॥ ७० ॥
चूलिकालवणञ्चैव रवितुल्यं विनिक्षिपेत् ।
सम्पेष्य चातियत्नेन श्लक्ष्णचूर्णन्तु कारयेत् ॥ ७१ ॥
सप्तसन्मृत्तिकालिप्तकाचकूप्यां ततो न्यसेत् ।
यत्नतः सिकतायन्त्रे चतुर्यामं पचेत्ततः ॥ ७२ ॥
निर्धूमे जायमाने च काचकूपीमुखे भिषक् ।
मन्दशेन गृहीत्वा च कूपीं भूमौ तु विन्यसेत् ॥ ७३ ॥
काचकूपीं विभिद्याथ कूपिकातलमास्थितम् ।
स्वर्णवर्णं स्वर्णवङ्गं भिषग्यत्नात् समाहरेत् ॥ ७४ ॥
कूपीभेदनकाले तु सूक्ष्मदर्शी भिषग्वरः ।
सूक्ष्मान् काचकणान् सम्यङ् निरीक्ष्य परिवर्जयेत् ॥ ७५ ॥
वङ्गं सञ्जायते यस्मात् कीर्णं स्वर्णकणैरिव ।
तस्माद्रसायनाचार्यैः स्वर्णवङ्गं प्रकीर्तितम् ॥ ७६ ॥

द्वितीयो निर्माणप्रकारः

वङ्गं सूर्यमितं[1] द्रुतं रसमितं सूतञ्च सम्पर्पयेत् ।
प्रक्षाल्याम्लरसैः क्षिपेद् बुधवरो नागोन्मितं[2] गन्धकम् ।
अंगाशं नवसादरञ्च[3] विमलं सम्पेष्य यत्नात्पचेत्
कूपीस्थं सिकताख्ययन्त्रविधिना कूपीं ततस्त्वाहरेत् ॥ ७७ ॥
कूपीं विभिद्य यत्नेन रसतन्त्रविचक्षणः ।
स्वर्णरम्यं स्वर्णवर्णं स्वर्णवङ्गं समाहरेत् ॥ ७८ ॥

१–सूर्यमितं द्वादशभागिकं द्रुतं वङ्गं रसमितं षड्भागिकं सूतं सम्मेल्य सम्पर्पयेत् ।

२–नागोन्मितं अष्टभागिकं गन्धकम् । तच्च प्रागुक्तप्रथमविधिविशुद्धं ग्राह्यम् ।

३–अङ्गांशं षड्भागिकञ्च नवसादरं दत्त्वा सम्पेष्य कूप्यां निधाय पचेत् ।

आयुर्वेदमहाम्भोधिकर्णधारधुरन्धरैः ।
मिश्रवंशावतंसैस्तु गुरुवर्यमहोदयैः ॥ ७९ ॥
श्रीमन्नरेन्द्रनाथाख्यैस्त्वयमाविष्कृतो विधिः ।
प्रकाशितः खलु मया लोकानुग्रहकाम्यया ॥ ८० ॥

अस्य गुणाः

सुवर्णवङ्गं शिशिरञ्च रूक्षं
सरं सतिक्तं लवणञ्च साम्लम् ।
रसायनं मेहहरञ्च मेध्यं
बल्यञ्च नेत्र्यं परमं प्रदिष्टम् ॥ ८१ ॥
लावण्यदं वह्निविवर्धनञ्च
श्लेष्मामयघ्नं परमञ्च वृष्यम् ।
मेदोहरं शुक्रकरं निकामं
सुवर्णवङ्गं कथितं रसज्ञैः ॥ ८२ ॥

अस्य मात्रानिरूपणम्

गुञ्जैकतः समारभ्य गुञ्जाद्वितयसम्मितम् ।
सुवर्णवङ्गं युञ्जीत बलकालाद्यपेक्षया ॥ ८३ ॥

अस्य आमयिकः प्रयोगः

स्वर्णवङ्गं विशेषेण वर्गोक्तैरनुपानकैः ।
तत्तद्रोगेषु नियतं प्रयुञ्जीत भिषग्वरः ॥ ८४ ॥

[ गीतिका ]

बहुलारजोविमिश्रं त्वपि नागकेशराढ्यम् ।
यवलोध्रभृतियुक्तं सुचिरं सुवर्णवङ्गम् ॥ ८५ ॥
परिशीलितं सपथ्यं दिनसप्तकं प्रयत्नात् ।
विनिवारयेद्धि शुक्रप्रदरोत्थितां तु बाधाम् ॥ ८६ ॥
परिशीलितं तथैव खलु मासमात्रयोगात् ।
विनिहन्ति शुक्रमेहं सुचिरोत्थितं प्रकामम् ॥ ८७ ॥

ममसाधवोचिताढ्य सुनिभ सुवर्णवगम् ।
परिशीलित द्विगुञ्ज व्रणमेहहृत्प्रदिष्टम् ॥ ८८ ॥
मधुना सुवर्णवग रजनीरसप्रगाढम् ।
अशित ह्यमोघशस्त्र व्रणमेहनाशनाय ॥ ८९ ॥
सितसारिवाश्रृतेन ह्यशित सुवर्णवगम् ।
व्रणमेहमुग्रवेग खलु नाशयेन्निकामम् ॥ ९० ॥
ससुरभियोत्थचूर्ण ह्यशित सुवर्णवगम् ।
निविनाशयेद्विशेषाद् द्रुतमेव रात्रिमेहम् ॥ ९१ ॥
लघुशाल्मलीशिफाया रजसा समन्वितन्तु ।
ह्यशित सुवर्णवग बलवीर्यद प्रदिष्टम् ॥ ९२ ॥

अपि च

प्रतनुमधुविमिश्र मासमक सपथ्य
मृतयशदसमेत शीलित स्वर्णवगम् ।
अपनयति विशेषाच्छुक्रतारल्यमारा-
ज्जनयति बलवृद्धि भूयसीं भावुकानाम् ॥ ९३ ॥
समभागिकसिन्दूररससम्मिश्रित तथा ।
सुवर्णवग मधुना वासरे तु द्विवारकम् ॥ ९४ ॥
सतत मासमात्रेण शीलित पथ्यभोजिभि ।
अवश्य नाशयत्याशु शुक्रदौर्बल्यमुल्बणम् ॥ ९५ ।

अथ सुवर्णवङ्गपञ्चकरसायनम

सुवर्णवगमुज्ज्वल तु तोलकद्वयोन्मितम् ।
विशोधित शिलामय सुवर्णवगसमितम् ॥ ९६ ॥
मृत तु तीक्ष्णलोहक शिलामयार्द्धभागिकम् ।

---

१-माधवोचितम्-कक्कोलम् (शीतलचीनी-हिन्दी) कक्कोलक कृतफल कोलक कटुक फलम् । चूर्णे कन्दफल द्वीप मारीच माधवोचितम् ॥ धन्वन्तरीयनिघण्टु ॥
२-सुरभियम्-कक्कोलम् ।

सुशोभन तथाभ्रक मत तु तोलकार्द्धकम् ॥ ९७
स्मरध्वजाङ्कपूर्वक ध्वजाह्वय तथा रसम् ।
निमर्द्य खल्वके भृश वटीं त्रिगुञ्जसमिताम् ॥ ९८ ॥
विधाय काचकूपके न्यसेत्ततो भिषग्वर' ।
यथानुपानयोगतो द्विवारमेकवासरे ॥ ९९ ॥
प्रयोजयेद्विशेषविद्बलानलाद्यपेक्षया ।
रसायन मत त्विद सुवर्णवङ्गपञ्चकम् ॥ १०० ॥
वर्ङ्गीये. श्रीरमानाथमेनवैद्यमहोदयै' ।
विचार्याविष्कृतमिद सुरम्यन्तु रसायनम् ॥ १०१ ॥
प्रकाशित खलु मया लोकानुग्रहकाम्यया ।
अमोघास्त्रमिद ख्यात शुक्रमेहस्य नाशने ॥ १०२ ॥
बलवर्णकर वृष्य पर बुद्धिविवर्द्धनम् ।
समाख्यात विशेषेण शुक्रतारल्यनाशनम् ॥ १०३ ॥
सितासराज्यसयुतप्रतप्तदुग्धयोगतः ।
सुवर्णवङ्गपञ्चक निषेवित द्विमासकम् ॥ १०४ ॥
निहन्ति वै चिरोत्थित तु शुक्रमेहमुल्बणम् ।
तथा करोति कामिनीमदापनाशनक्षमम् ॥ १०५ ॥

इति वङ्गविज्ञानीयो नाम अष्टादशस्तरङ्ग

---

१-स्मर -कामदवस्तस्य ध्वजोऽ ध्वजाचिन्ह, मकर, तत्पूर्वक ध्वजाह्वय रस मकरध्वजमत्तकरम (भ्रमपुस्प) इत्यादिनि नाम ।

# अथ सीसकादिविज्ञानीय एकोनविंशस्तरङ्ग

## अथ सीसकस्य नामानि

सीसक शीपक सीस नागक नागनामकम् ।
कुवङ्कं कुरङ्गश्च तथा सिन्दूरकारणम् ॥ १ ॥

### ग्राह्यसीसकस्य स्वरूपम्

सुगौरव मृदु स्निग्ध छेदने मलिनोज्ज्वलम् ।
बहिःश्याम द्रुतद्राव सीसक जात्यमादिशेत् ॥ २ ॥

### अग्राह्यसीसकस्य स्वरूपम्

बहि शुक्ल भारहीन रूक्ष छेदे च निष्प्रभम् ।
समल कठिनद्राव सीसक हेयमादिशेत् ॥ ३ ॥

### सीसकशोधनस्य प्रयोजनम्

सीस निहन्ति निमला तु शरीरशोभा
कुष्ठ किलासकमल जनयेच नूनम् ।
सन्धीन् प्रपीडयति पक्षवध प्रकुर्यात्
सशुद्धिहीनमिह चेत् खलु मारित स्यात् ॥ ४ ॥
शुद्धिपाकविहीनन्तु सीसक परिशीलितम् ।
गुल्म प्रमेहमानाह श्वयथुश्च भगन्दरम् ॥ ५ ॥
वह्निमान्ध त्वमशोथ बाह्वोर्निश्चेष्टता तथा ।
शूल क्षयादिकान् रोगान् जनयत्यविकल्पत ॥ ६ ॥

### सीसकस्य प्रथम शोधनप्रकार

सीसक दर्विकामस्थ चुल्लिकाया निधापयेत् ।
विद्रुतश्चाथ विज्ञाय रसतन्त्रविचक्षण ॥ ७ ॥
सिन्दुवारशिफाजातस्वरसापूरितोदरे ।
क्षिपेद् घटे तु सच्छिद्रपिधानपिहितास्यके ॥ ८ ॥
निर्वापयेत्सप्तवार विधानज्ञो भिषग्वर ।

इत्थ विशोधित सीस मारणाय प्रयोजयेत् ॥९॥

द्वितीय शोधनप्रकार

सीसक द्रावयेल्लोहदर्वीगतं
स्वच्छचूर्णोदके चाथ निर्वापयेत् ।
पूर्वमार्गेण वै शेपकर्माचरेत्
सीसक सत्वर याति शुद्धिं पराम् ॥१०॥

अथ सीसकस्य प्रथमो मारणप्रकार

सीसक शुद्धमादाय कटाहे गालयेद्भिपक् ।
विशुष्काश्वत्थवल्कोत्थ सम चूर्णं विनिक्षिपेत् ॥११॥
स्वल्प स्वल्प मुहुश्चाथ लोहदर्व्या प्रचालयेत् ।
सीसभस्म भवेद्यावच्चूर्ण तावत्समापयेत् ॥१२॥
राशीकृत्य ततो भस्म शरावेण पिधापयेत् ।
ज्वलदङ्गारवर्णं स्यात्सीसभस्म यथा चिरम् ॥१३॥
स्वाङ्गशीत ततो ज्ञात्वा मृत सीस समाहरेत् ।
बहुशः क्षालयेत्तोयै क्षारहीन यथा भवेत् ॥१४॥
सीसतुल्या रोगशिला विमला तत्र निक्षिपेत् ।
निम्बूकवारिणा वापि काञ्जिकेनाथ पेषयेत् ॥१५॥
सम्पुटस्थ तत कृत्वा पुटयेदतियत्नत ।
इत्थ त्रिभि पुटैरेव सीसक मृतिमाप्नुयात् ॥१६॥
द्वितीयादिपुटे वैद्यस्तुल्यामेव शिला क्षिपेत् ।
इत्थ मृत सीसकन्तु वीतशङ्क प्रयोजयेत् ॥१७॥
भस्म सञ्जायते श्लक्ष्ण विशद कज्जलप्रभम् ।
पक्षाघातादिकान् नागदोपान् नैव करोति च ॥१८॥

---

(१) पूर्वमार्गेण अन्यवहितप्रदर्शितेन सीसकशोधनोक्तप्रथममार्गेण शेषकर्म कुम्भे स्वच्छचूर्णोदकस्य प्रक्षेपणम् सच्छिद्रसुदृढपिधानकेन कुम्भमुखस्य आच्छादनमित्यादिकमिहानुक्त कर्म समाचरेदिति भाव ।

द्वितीयो मारणप्रकार

निशुद्ध सीममादाय कटाहे तु निधापयेत् ।
चुल्लिकाया निधायाथ वह्निं प्रज्वाल्य गालयेत् ॥१६॥
सीसक विद्रुत ज्ञात्वा स्वल्प स्वल्प मुहुर्मुहु ।
निशुद्धरुनटीचूर्णं तुल्य दत्त्वा विमर्दयेत् ॥२०॥
सीसभस्म भवेद् यावच्चूर्णं तावत्समापयेत् ।
स्वत शीत ततो ज्ञात्वा सीसभस्म समाहरेत् ॥२१॥
भस्मतुल्य यलि दत्त्वा निम्बूर्नीरेण मर्दयेत् ।
घर्मे निशोष्य यत्नेन सम्पुटस्थ तत पुटेत् ॥२२॥
इत्थ त्रिभि पुटैरेव सीसक मृतिमाप्नुयात् ।
इत्थ मृत सीसकन्तु वीतशङ्क प्रयोजयेत् ॥२३॥

तृतीयो मारणप्रकार

नाग विशुद्धन्तु कटाहमस्थ प्रद्रावयेत्तीव्रतरानलेन ।
द्रुतन्तु निशाय भिषग्वरेण्यो मयूरचूर्णं क्रमश क्षिपेद्वै ॥२४॥
यामा विशुष्का च समान्तु दत्त्वा सञ्चालयेद्वै श्रुपदण्डदर्व्या ।
सुचूर्णितञ्चाथ विलोक्य वैद्य प्रक्षालयेदच्छजलेन कामम् ॥२५॥
चूर्णं समादाय तता रसज्ञस्तुल्या मनाज्ञां विमला तु दत्त्वा ।
वासारसेनाथ विमर्द्य सम्यक् पुटेत् त्रिवार रसतन्त्रवैद्य ॥२६॥
भस्म सजायते श्लक्ष्ण विशद कज्जलप्रभम् ।
पक्षाघातादिकान् नागदोषान् नैव करोति च ॥ २७ ॥
सुचिर सेवनेनापि विकारान्नैव दर्शयेत् ।
अतो रसायनाचार्यो वीतशङ्क प्रयोजयेत् ॥ २८ ॥

चतुर्थो मारणप्रकार

नाग विशुद्धन्तु निधाय दर्व्यां प्रद्रावयेत्तीव्रतरानलेन ।
द्रुत समालोक्य भिषग्वरेण्य पादाशमीश द्रुतमेव दद्यात् ॥२९

द्रुतन्तु भूमाववतार्य खल्वे सम्पेषयेत्सत्वरमेन यत्नात् ।
प्रक्षाल्य साम्लेन जलेन नून विशोष्य नीरं विदधीत चूर्णम् ।२०
निक्षिप्य सीसाद् द्विगुणन्तु गन्धं सम्पेषयेद्यामयुगं प्रयत्नात् ।
निलोक्य चूर्णं खलु कज्जलाभं निधापयेद्वैद्यवरः शरावे ॥२१॥
शरावसम्पुटस्थितं पुटेन्महापुटे ततः ।
स्वतः सुशीतता गते शरानमाहरेद्भिषक् ॥ २२ ॥
विभिद्य सम्पुटाच्चत. शुभं सुकज्जलप्रभम् ।
मृतन्तु सीममाहरेद्रसायनागमार्यमा ॥ २३ ॥

पञ्चमो मारणप्रकार

चूर्णमयूरादिसमुत्थितैस्तु चूर्णीकृत सीसकमग्नियोगात् ।
प्रक्षाल्य च क्षारहतिं विधाय सीसार्द्धमानं विमलालचूर्णम् ॥२४॥
दत्त्वाथ सम्पेष्य शरावसस्थं पुटेत्प्रमाणार्हपुटे रसज्ञः ।
स्वतः सुशीतन्तु निलोक्य विद्वान् समाहरेत्सम्पुटकं प्रयत्नात् ॥२५॥
रीत्यानया नातिचिरेण नूनमनुत्तमां याति मृतिन्तु सीसम् ।
विलुप्तशङ्को भिषजां वरेण्य प्रयोजयेद् भूतिमिमां रसेषु ॥२६॥

षष्ठो मारणप्रकार

नाग कटाहनिहितं द्रावयेद् वह्नियोगत ।
तत शुद्धशिलाचूर्णं स्वल्पं स्वल्पं मुहुर्मुहु ॥ २७ ॥
समाशेन तु निक्षिप्य लोहदर्व्या प्रचालयेत् ।
नागभस्म भवेद्यावच्चूर्णं तावत्समापयेत् ॥ २८ ॥
ततः सीसोन्मिता शुद्धा शिला दत्त्वा भिषग्वर ।
रविदुग्धेन सम्पेष्य पुटयेदतियत्नत. ॥ २९ ॥
एवं नातिचिरादेव नागकं मृतिमाप्नुयात् ।
इत्थं मृतं नागकन्तु सर्वयोगेषु योजयेत् ॥ ४० ॥

सप्तमः मारणप्रकारः

सीसकं द्रावयेन्मृत्कटाहस्थितं
विद्रुतं वीक्ष्य वै वैद्यविद्याचणः ।
निक्षिपेत् चूर्णितं शुद्धसौगन्धिकं
सीसकं सर्वथा याति यावन्मृतिम् ॥ ४१ ॥
वीक्ष्य सम्यङ् मृतं सीसकं कोविदः
स्वाङ्गशीते सति स्यादसीतं द्रुतम् ।
सीसमेवं मृतं वीतशङ्को भिषक्
योजयेत्सर्वथा चाद्ययोगेऽनिशम् ॥ ४२ ॥

अथ मृतसीसकस्य गुणाः

मृतन्तु सीसं मधुरञ्च तिक्तं स्निग्धं तथोष्णं गुरु लेखनञ्च ।
सरं तथा वह्निविवर्द्धनञ्च रसागमज्ञैः खलु सम्प्रदिष्टम् ॥ ४३ ॥

अपि च

प्रमेहकरिकेशरी पवनरोगकालानलः
ग्रहण्यतिनिरासनः खलु गुदाङ्कुरेभाङ्कुशः ।
गलामयगदतस्करो व्रणगणैकसङ्कर्षणः ।
परं विजयतेतरां गदहरो भुजङ्गो मृतः ॥ ४४ ॥

अपि च

नागस्तु नागसमतां द्रुतमातनोति
गुल्मद्विपं दलयतीह चिरप्रमत्तम् ।
घोरं हरेत्प्रदरमाशु हि रक्तपूर्वं
तूर्णन्तु रोगनिवहान् विनिहन्ति नूनम् ॥ ४५ ॥

मृतसीसकस्य मात्रा

पादाग्रतो रक्तिकाया रक्तिकैकमितं शुभम् ।
मृतं सीसं प्रयुञ्जीत बलकालाद्यपेक्षया ॥ ४६ ॥

अथ मृतसीसकस्य आमयिक प्रयोग

गुञ्जकप्रमित सीसं निशामलकसयुतम् ।
मधुना शीलित तूर्णं प्रमेहं विनिवारयेत् ॥ ४७ ॥
अशोकक्वाथसयुक्त मृत सीसन्तु शीलितम् ।
अचिरादेव चिरज रक्तप्रदरमुद्धरेत् ॥ ४८ ॥
गुञ्जकप्रमित सीस नागकेशरसयुतम् ।
रक्तार्शस निहन्त्याशु वृक्षमिन्द्राशनिर्यथा ॥ ४९ ॥
गुडूचिकासत्वरजोविमिश्र मृतन्तु सीस मधुनावलीढम् ।
विनाशयेन्नातिचिरेण नून नलासरातप्रभवन्तु मेहम् ॥ ५० ॥
सुवर्णरससिन्दूरताम्राढ्य खलु सीसकम् ।
शीलित विनिहन्त्याशु त्वन्त्रशोथ सुदारुणम् ॥ ५१ ॥
आत्मगुप्तानलामूलमासीक्वाथेन सीसकम् ।
वृक्कशोथसमुद्भूतमाक्षेप नाशयत्यलम् ॥ ५२ ॥
रससिन्दूरताम्राढ्य सीसक परिशीलितम् ।
सर्वाङ्गकम्पनारब्धं हन्ति पचनधामयम् ॥ ५३ ॥
प्रसारणीनलारास्नाकपिकच्छूकषायत ।
सतारयशद सीस सुमृत परिशीलितम् ॥ ५४ ॥
अङ्गप्रसारणीपेशीगतदोषसमुत्थितम् ।
विनिहन्ति विशेषेण पक्षाघात सुदारुणम् ॥ ५५ ॥

अन्त्रशोथान्तक रस

शिलया निहत सीस तोलकद्वयसमितम् ।
कान्तपाषाणभस्मित सीसकप्रमित शुभम् ॥ ५६ ॥
निश्चन्द्रिक सुवर्णं तु तथा यशदकारणम् ।
गगन रविलोह च पृथक् तोलकसमितम् ॥ ५७ ॥
सर्वार्द्धं गन्धक दत्त्वा पेषयेत्कन्यकाम्भसा ।
त्रिधा वराहाख्यपुटे पुटयेद्भिषजा वर ॥ ५८ ॥

खल्वे सञ्चूर्ण्य च ततो काचकुप्या तु निन्यसेत् ।
समाख्यातो रसोऽय तु ह्यन्त्रशोपान्तकाभिध ॥ ५९ ॥
श्रीमद्भिर्गुरुवर्यैस्तु ह्ययमाविष्कृतो रसः ।
प्रकाशित खलु मया लोकानुग्रहकाम्यया ॥ ६० ॥

अस्य गुणा

अन्त्रशोपापहरणो ग्रहणीविनिवारण ।
जीर्णाजीर्णप्रहरणो यक्ष्मलक्ष्मनिवर्हण ॥ ६१ ॥
अरोचकाद्युपगत दारुण दीर्घकालजम् ।
अतीसार निहन्त्याशु काम यक्ष्मसमाश्रयम् ॥ ६२ ॥
आध्मानापहमत्यन्त गुल्मप्लीहनिषूदनम् ।
जीर्णज्वरप्रशमन वलमञ्जनन परम् ॥ ६३ ॥
गुञ्जार्द्धत॰ समारभ्य गुञ्जैकप्रमित परम् ।
प्राणाचार्यः प्रयुञ्जीत बलकालाद्यपेक्षया ॥ ६४ ॥

अथ आरनालीयसीसकस्य नामानि

काञ्जिकाम्लीयसीसञ्च त्वारनालीयसीसकम् ।
तदेव च समाख्यात काञ्जिकाम्लीयनागकम् ॥ ६५ ॥

आरनालीयसीसस्य निर्माणप्रकार

चत्वारिंशद्भागिकन्तु सुतीव्र काञ्जिकाम्लकम् ।
परिस्रुतञ्च विमल जल विंशतिभागिकम् ॥ ६६ ॥
मृद्दारशृङ्गचूर्णन्तु चतुर्विंशतिभागिकम् ।
काचपात्रे सुनिर्मले स्थापयेद्भिपजा वर. ॥ ६७ ॥
चुल्लिकाया निधायाथ काम मन्दाग्निना पचेत् ।
द्रवीभूत ततो ज्ञात्वा चुल्लीतस्त्ववतारयेत् ॥ ६८ ॥
तत सारकपत्रेण स्रावयेदातियत्नत ।
पुनर्मन्दानलेनैव स्रावित सलिल पचेत् ॥ ६९ ॥

किञ्चिज्जलावशेषे च पात्रमाश्ववतारयेत् ।
स्वाङ्गशीत समालोक्य ततः पात्रतलस्थितान् ॥७०॥
आरनालीयसीसस्य हिमकुन्देन्दुसन्निभान् ।
सूक्ष्मान् कणान् निपतितान् भिषग्रत्नः समाहरेत् ॥७१॥

अथ आरनालीयकसीसद्रवस्य निर्माणप्रकार

आरनालीयसीसन्तु निर्मल शरभागिकम् ।
सार्द्धत्रिभागिकञ्चैव शुद्ध मृद्दारशृङ्गकम् ॥७२॥
परिस्रुतञ्च निर्मल जल त्रिंशतिभागिकम् ।
सम्मेल्य काचपात्रे च चुल्लिकाया निधापयेत् ॥७३॥
पचेन्मन्दाग्निना तावत् यावदेति द्रुतिं पराम् ।
यावज्जल प्रशुष्येत द्रुतिपर्यन्तमग्निना ॥७४॥
निनिक्षिपेज्जल तावद्रसतन्त्रविचक्षणः ।
काचकुप्या निधायाथ भिषग्रत्नः प्रयोजयेत् ॥७५॥

प्रसङ्गात् सुतीक्ष्णकाञ्जिकाम्लस्य निर्माणप्रकार

अत्यम्ल निर्मल शुक्त गृहनीरमथापि वा ।
समाहरेद्भिषग्वर्या रसेरकसमितम् ॥७६॥
काचलिप्ते तु मृत्पात्रे नाडिकायन्त्रयोगत. ।
पचेन्मन्दाग्निना तावत्पञ्चसेरकसमितम् ॥७७॥
यावत्तु गृहनीरस्थ जलांश न परिस्रवेत् ।
परिस्रुताम्बुसन्त्यक्त जायते तीव्रकाञ्जिकम् ॥७८॥

अथ सजलारनालीयकसीसद्रवस्य निर्माणप्रकार

आरनालीयकाहेस्तु द्रवे शुभ्राशुभागिके ।
निक्षिपेद्रसतन्त्रज्ञस्तन्मिता निर्मला सुराम् ॥ ७९ ॥

---

१—अत्र "अल्पार्थे कन्" इत्यल्पार्थे कन् प्रत्ययो विहित ।
तस्मादङ्गभाषाप्रसिद्ध Sul-इत्युपसर्गप्रत्यायक इत्यवधेयम् ।

परिस्रुतञ्च सलिलं शुद्धं रसवमागिकम् ।
दत्त्वा सम्मेलयेद्वैद्यः काचकूप्यां निधापयेत् ॥ ८० ॥
अयमेव समाख्यातो रसायनविचक्षणैः ।
द्रव खलु ससलिलः काञ्जिकीयकसीसजः ॥८१॥

अथ सजलारनालीयकसीसद्रवस्य प्रयोगमाह

आरनालीयकासीसस्य द्रवन्तु सजलं भिषक् ।
सलिले सप्तगुणिते सम्मेल्य विनियोजयेत् ॥८२॥

अस्य आमयिक प्रयोग

जलामस्राविणां दाहवतां पूयवतामपि ।
व्रणानां धावनार्थन्तु विधानज्ञः प्रयोजयेत् ॥८३॥
मेढ्रमार्गेण चेन्नृणां व्रणमेहस्य हेतुना ।
स्रावो जायेत मतिमान् वस्तिकर्मविचक्षणः ॥८४॥
आरनालीयकासीसस्य द्रवन्तु सजलं तदा ।
जलेनोद्दिष्टमानेन युञ्ज्यातोत्तरवस्तिना ॥८५॥
रक्तिद्वयमितं सारं स्वहिफेनसमुद्भवम् ।
पश्चिन्दुमितञ्चैव काञ्जिकाम्लीयकाहिजम् ॥८६॥
द्रवन्तु सजलञ्चाथ सार्द्धकोलद्वयं जलम् ।
सम्मेल्य भिषजा नयस्त्वक्शोफे तु विसर्पजे ॥८७॥
अभिघातोत्थशोथे च घृष्टसर्पिश्चितास्थिषु ।
धावनार्थं प्रयुञ्जीत सर्वथैव विधानतः ॥८८॥
अभिघातोत्थितं दाहं कण्डूतिञ्च हरेद् ध्रुवम् ।
योनिपायुप्रदेशोत्थां कण्डूतिञ्चापि नाशयेत् ॥८९॥
नागद्रवं स्वन्तरालं मणिशिश्नाग्रचर्मणो ।
काचवस्तिप्रयोगेण धन्यमित्त प्रदापयेत् ॥९०॥

नाशयेदाशु योगोऽयं निरुद्धप्रकशामयम् ॥६१॥

अस्य प्रयोगनिषेध

अक्ष्णोर्नाञ्जीत मतिमान् खलु द्रवमिमं भिषग्ः ।
अञ्जनेन भवेदान्ध्यं व्रणशुक्रमथापि वा ॥९२॥

अथ अशुद्धामृतसीसकसेवनविकृतौ विधानम्

अविशुद्धामृताह्युत्थविकारपरिशान्तये ।
निशुद्धगन्धचूर्णन्तु योजयेद् भिषजां वरः ॥६३॥

## अथ यशदस्य नामानि

यशदं यसदञ्चैव जशदं जसदं तथा ।
रीतिहेतुः खर्परजं समाख्यातं भिषग्वरैः ॥९४॥

ग्राह्ययशदस्य स्वरुपम्

छेदे समुज्ज्वलं स्निग्धं मृदुलं निर्मलं तथा ।
द्रुतद्रावं महाभारं यशदं ग्राह्यमुच्यते ॥६५॥

अग्राह्ययशदस्य स्वरुपम्

कठिनं कठिनद्रावं रूक्षं रूक्षप्रभं लघु ।
मलिनं यशदं यत्तु तदग्राह्यं प्रकीर्तितम् ॥६६॥

अथ यशदशोधनस्य प्रयोजनम्

विशुद्धिहीनं यशदं मृतञ्चेद्
विशोधितं वाप्यमृतं त्वविज्ञैः ।
निषेवितं वै जनयेद् विकारान्
गुल्मप्रमेहक्षयकुष्ठकादीन् ॥९७॥

यशदस्य प्रथमं शोधनप्रकारः

जात्यं यशदमादाय लोहदर्व्यान्तु विन्यसेत् ।
तीव्राग्निना तु विद्राव्य चूर्णवारिप्रपूरिते ॥६८॥
सच्छिद्रेण पिधानेन पिहितास्ये घटे क्षिपेत् ।
सप्तवारं प्रयत्नेन यशदं शुद्धिमाप्नुयात् ॥६६॥

द्वितीय शोधनप्रकार

यशद द्रावित यत्नात् सप्तवार निधानत. ।
सिन्दुवारशिफाद्रावे स्नपयेद्भिषजा वरः ॥१००॥
रीत्यानया तु यशद शुद्धिमायात्यनुत्तमाम् ।
एव शुद्धन्तु यशद मारणाय प्रयोजयेत् ॥१०१॥

तृतीय शोधनप्रकार

यशद द्रावित यत्नाद् गोदुग्धे स्नपयेद्भिषक् ।
त्रिसप्तवार यत्नेन यशद शुद्धिमाप्नुयात् ॥१०२॥

चतुर्थ शोधनप्रकार

प्रद्राव्य यशद नैव सुधादुग्धे निषेचयेत् ।
सप्तवार प्रयत्नेन शुद्धिमायान्त्यनुत्तमाम् ॥१०३॥

अथ यशदस्य प्रथमो मारणप्रकार

शुद्ध यशदमादाय कटाहे तीव्रवह्निना ।
प्रद्राव्य भिषजा वर्य समपारदगर्भके ॥१०४॥
खल्वे विनिक्षिपेद्यत्नात्तत सम्पेषयेद् द्रुतम् ।
पिष्टिं विधाय यत्नेन क्षालयेन्निम्बुवारिणा ॥१०५॥
यशदप्रमित गन्ध दत्त्वा सञ्चूर्णयेत्तत ।
शरावसम्पुटस्थन्तु पुटयेदथ यत्नत ॥१०६॥
रीत्यानया तु यशद मृतिमायात्यनुत्तमाम् ।
इत्थ मृतन्तु यशद सर्वयोगेषु योजयेत् ॥१०७॥

द्वितीयो मारणप्रकार

[ गीतिका ]

यशद विशुद्धमादौ विनिधाय वै कटाहे ।
अतितीव्रवह्नियोगात् खलु गालयेन्निकामम् ॥१०८॥
दृढनिम्बदण्डदर्व्या परिचालयेत्प्रयत्नात् ।
सुमृत ततो विलोक्य त्ववतारयेत्कटाहम् ॥१०९॥

निमल प्रदाय ताल चरणांशिक रसज्ञः ।
खलु पेषयेत्मयत्नात् पुटनित् पुटेत् पुटस्थम् ॥११०॥
रीत्यानया तु यशद मृतिमेति निर्विशेषाम् ।
निविधानुपानयोगाद् वितरेत्तु वीतशङ्कः ॥१११॥

तृतीयो मारणप्रकार

यशद निमल न्यस्य कटाहे गालयेद्भिषक् ।
अपामार्गस्य चूर्णञ्च स्वल्प स्वल्पं मुहुर्मुहुः ॥११२॥
निनिक्षिपेद् भिषग्वर्यो लोहदर्व्याथ चालयेत् ।
भस्म यावद् भवेत्सम्यक् चूर्णं तावत् समापयेत् ॥११३॥
राशीकृत्य ततो भस्म शरावेण पिधापयेत् ।
ज्वलदङ्गारवर्णं स्याद्यशद तु यथा चिरम् ॥११४॥
तथा प्रदीपयेदग्निं याममेक भिषक्तमः ।
स्वत'शीत ततो ज्ञात्वा यशद मृतमाहरेत् ॥११५॥

चतुर्थो मारणप्रकार

कटाहसस्थ यशद निमलन्तु शनैः शनैः ।
निघृष्टेल्लोहदर्व्या पचेत्तीव्राग्निना भिषक् ॥११६॥
यशद चूर्णता यात वस्त्रपूतन्तु कारयेत् ।
स्थूलाशञ्च पुनः काम कटाहस्थ निपाचयेत् ॥११७॥
एव नातिचिरादेव यशद मृतिमाप्नुयात् ।
कुन्देन्दुधवल भस्म जायते चातिशोभनम् ॥११८॥
रीत्यानया खलु मृत यशदन्तु विधानत' ।
नावनाञ्जनकार्यादौ योजयेद्भिषजां वरः ॥११९॥

अथ सुमृतयशदस्य गुणा

यशद तुवर शिशिर कटुक
परम नयनामयनाशकरम् ।
कफपित्तसमुत्थितरोगहर

बलवीर्याग्निनेत्राणां समृद्धिकरम् ॥१२०॥
यशदं पाण्डुशमनं बहुमेहनिषूदनम् ।
कासश्वासप्रशमनं निशास्वेदनिवर्हणम् ॥१२१॥
यशदं परमं श्लेष्मक्लमकोचकृन्मतम् ।
समाख्यातं विशेषेण व्रणमस्रावरोधनम् ॥१२२॥
श्रमावसादशमनं रज:स्रावनिषूदनम् ।
कम्पवातापहं चैव विशेषात्परिकीर्तितम् ॥१२३॥
यशदस्य विशिष्टो गुणः
सशीलितं वै यशदं मृतन्तु
विनाशयेदाशु भृशं विशेषात् ।
प्रमादजं पवनं प्रवृद्ध-
मेकाङ्गगं वै सकलाङ्गगं वा ॥१२४॥
मृतयशदस्य मात्रा
गुञ्जार्द्धतः समारभ्य गुञ्जैकप्रमितं मृतम् ।
यशदं विनियुञ्जीत बलकालाद्यपेक्षया ॥१२५॥
अथ यशदस्य आमयिकः प्रयोगः
एलादारुसितापत्रचूर्णेन परिशीलितम् ।
यशदं सुमृतं यत्नात् त्रिदोषं नाशयेद् ध्रुवम् ॥१२६॥
अग्निमन्थशिफावल्कचूर्णेन यशदं मृतम् ।
शीलितं ह्यचिरादेव दीपयेज्जठरानलम् ॥१२७॥
पुराणेन तु गव्येन सर्पिषा परिशीलितम् ।
सचितं यशदं यत्नात् द्रुतं दृष्टिं विवर्धयेत् ॥१२८॥
रक्तिकार्द्धमितं शुभ्रं यशदं वह्निजारितम् ।
सघृतं नस्ययोगेन प्रत्यहं मासमात्रकम् ॥१२९॥
पुनः पुनः समुद्‌भूतप्रतिश्यायसमुत्थितम् ।

नासिकाश्लेष्मिककलादौर्गल्य विनिहन्त्यलम् ॥१३०॥
प्रवालभस्मसहितं यशदं परिशीलितम् ।
निहन्यादचिरादेव निशाखेद क्षयोत्थितम् ॥१३१॥
लिप्ता यशदविभूतिर्गव्येनाज्येन चात्र सप्ताहम् ।
नाशयतीह निकाम चिरजामपि विचर्चिकामचिरात् ॥१३२॥
मृतगगनसमेतं शीलित क्षौद्रयुक्त
सुमृतयशदचूर्णं रक्तिकैकप्रमाणम् ।
हरति झटिति कास श्वासकञ्चोग्रवेग
व्यपनयति निशेषाद् राजरोगोत्थकासम् ॥१३३॥
आर्द्रकस्वरसोपेत मक्षौद्र यशद मृतम् ।
शीलित नाशयत्याशु श्वास परमदारुणम् ॥१३४॥
आत्मगुप्ताशिफारास्नानलैरण्डकषायत. ।
कम्पयुक्त पक्षवध यशद हन्ति शीलितम् ॥१३५॥
लोहाभ्रकसमायुक्त यशद परिशीलितम् ।
कणार्द्रेण हन्त्याशु श्वास प्रतमकाभिधम् ॥१३६॥
स्वर्णवङ्गसमायुक्त यशदं परिशीलितम् ।
चित्तानमादसयुक्त स्वममेह व्यपोहति ॥१३७॥
अशोकत्वक्कषायेण यशद परिशीलितम् ।
त्रिचतुर्मासमम्भृतरजोरोधसमुत्थितम् ॥१३८॥
अतिप्रनलवेगेन जायमान सुदारुणम् ।
तीव्रवेदनयोपेत रज स्राव निवारयेत् ॥१३९॥
लोहमर्जरसोपेत यशद परिशीलितम् ।
निहन्ति शुक्लप्रदर रजोरोधसमुत्थितम् ॥१४०॥
यशद रसमिन्दूरयुत कर्पूरसयुतम् ।

---

(१) प्रवालभस्म गुञ्जार्धम्, मृत यशद गुञ्जैकमानम् द्वय सम्मेल्य मधुना प्राशयेदिति सम्प्रदाय ॥

सप्रलापं कम्पवातं हन्ति वै सान्निपातिकम् ॥१४१॥
टङ्काभ्रवङ्गजायुक्तं यशदं परिशीलितम् ।
श्वासं निवारयत्याशु सकष्टकफनिर्गमम् ॥१४२॥
यशदं रससिन्दूरयुतं क्षौद्रेण शीलितम् ।
हन्ति मस्तिष्कदौर्बल्यं विषादश्रमसंयुतम् ॥१४३॥
सुवर्णभस्मसंयुक्तं यशदं परिशीलितम् ।
समाख्यातं विशेषेण योषापस्मारनाशनम् ॥१४४॥
सतारताप्यं यशदं त्रिवर्कफायसंयुतं ।
अर्धावभेदकं सूर्यावर्तं नाशयत्यलम् ॥१४५॥

अथ यशदामृतमलहर

त्रिकर्षं सिक्थतैलन्तु पूर्वोक्तविधिसाधितम् ।
गोलकाकमिव दद्यात् यशदं वह्निजारितम् ॥ १४६ ॥
खल्वेऽतिमसृणे क्षुद्रे मर्दयेदतियत्नतः ।
समाख्यातो मलहरो यशदामृतसंज्ञकः ॥ १४७ ॥

अस्य गुणा

मतो मलहरोऽयं तु विविधव्रणरोपणः ।
विचर्चिकाहरः काममग्निदग्धव्रणापहः ॥ १४८ ॥

अथ गन्धकाम्लीययशदस्य निर्माणप्रकारः

विमलयशदचूर्णं काचपात्रे तु पूर्वं
विशदविपुलबुद्धिः स्थापयेद्वैद्यवर्यः ।
तदनु खलु सनीरं गन्धकाम्लं क्षिपेद्वै
द्रवति यशदचूर्णं यावता द्रावकेण ॥ १४९ ॥
ततः सारकपत्रेण मारयेत्तु विधानतः ।
काचपात्रे निधायाथ पचेन्मन्दाग्निना भिषक् ॥ १५० ॥
जलांशं शोषयेद्यत्नाद्रसकर्मविचक्षणः ।
किञ्चिज्जलांशशेषे च पात्रं भूमौ निधापयेत् ॥ १५१ ॥

समुज्ज्वलं सुधवलं काचपात्रतलस्थितम् ।
गन्धकाम्लीययशदचूर्णं शुद्धं समाहरेत् ॥ १५२ ॥

गन्धकाम्लीययशदस्यगुणा

गन्धकाम्लीययशदचूर्णं पूयप्रमुत्तमम् ।
व्रणसस्रावशमन नेत्राभिष्यन्दनाशनम ॥ १५३ ॥
व्रणमेहहर चैव श्वेतप्रदरकप्रणुत् ।
सङ्कोचकृद्विशेषेण कीर्तित रसवेदिभि. ॥ १५४ ॥
शुष्क गन्धाम्लयशद क्षारकर्मकर परम् ।
क्षारकर्मप्रयोगार्थमतस्तद् विनियुज्यते ॥ १५५ ॥
गन्धकाम्लीययशद शुष्क प्रायो न युज्यते ।
योजयेद्विधिना वैद्यो द्रवीकृत्य विधानत' ॥ १५६ ॥

अथ गन्धकाम्लीययशदद्रवस्य प्रथमो निर्माणप्रकार

गन्धकाम्लीययशद रक्तिकैकमित शुभम् ।
सार्द्धद्वितोलकमिते सलिले तु परिस्रुते ॥ १५७ ॥
सद्राव्य खलु यत्नेन काचकुप्या निधापयेत् ।
गन्धकाम्लीययशदद्रवोऽय नामतो मत ॥ १५८ ॥

अस्य गुणा

गन्धकाम्लीययशदद्रवोऽय व्रणमेहहृत् ।
नेत्राभिष्यन्दशमनो रोपणो भूतनाशन' ॥ १५९ ॥

अस्य आमयिक प्रयोग

बिन्दुक्षेपकयन्त्रेण द्रवोऽय लोचनार्पित ।
विनिहन्त्यचिरादेव नेत्राभिष्यन्दजा रुजम् ॥ १६० ॥
मेढ्रमूल दृढ बध्वा स्फीतकेन विधानतः ।
यत्नादुत्तरबस्त्युक्तविधानेन ह्यनारतम् ॥ १६१ ॥
गन्धकाम्लीययशदद्रवोऽय विनियोजित' ।
सप्ताहद्वितयेनैव व्रणमेह व्यपोहति ॥ १६२ ॥

गन्धकाम्लीययशदद्रवस्य द्वितीयो निर्माणप्रकार

गन्धकाम्लीययशद षट्त्रिंशद्रक्तिकोन्मितम ।
परिस्रुते तु सलिले षष्टितोलकसमिते ॥ १६३ ॥
सद्राव्य खलु यत्नेन काचकुप्या निधापयेत् ।
गन्धकाम्लीययशदद्रवोऽय भाषितो बुधै ॥ १६४

अस्य गुणा

गन्धकाम्लीययशदद्रवोऽय व्रणरोपण ।
सङ्कोचकृद्विशेषेण श्वेतप्रदरनाशन ॥ १६५ ॥

अस्य प्रयोगविधि

यत्नादुत्तरबस्त्युक्तरीत्या तु विनियोजित ।
द्रवोऽय नाशयत्याशु श्वेतप्रदरमुल्बणम् ॥ १६६

अथ यशदामृतद्रवस्य निर्माणप्रकार

गन्धकाम्लीययशद युगरक्तिकसमितम् ।
टङ्कणाम्लद्रवे रम्ये पञ्चतोलकसंमिते ॥ १६७ ॥
निक्षिप्य खलु यत्नेन काचकुप्या तु निन्यसेत् ।
समाख्यातो द्रवोऽय तु यशदामृतसज्ञक ॥ १६८

अस्य गुणा

यशदामृतसज्ञोऽय द्रव शोथव्रणाशन ।
शिशिरश्चैव रक्ताभिष्यन्दादिनिषूदन ॥ १६९

अस्य आमयिक प्रयोग

विन्दुक्षेपकयन्त्रेण द्रवोऽय नेत्रयोजित ।
विनिहन्त्याशु रक्ताभिष्यन्दाद्यक्षिगामयान् ॥ १

इति सीसकादिविज्ञानीयो नाम पञ्चोनविंशस्तरङ्ग

# अथ लोहादिविज्ञानीयो विंशस्तरङ्गः

### अथ लोहस्य भेदास्तेषां वैशिष्ट्यञ्च

मुण्डं तीक्ष्णं तथा कान्तं लोहं त्रिविधमुच्यते ।
मुण्डात्तीक्ष्णं ततः कान्तं प्रशस्तं परिकीर्तितम् ॥ १ ॥

### मुण्डलोहस्य नामानि

मुण्डं तथा मुण्डलोहं कृपिलोहं शिलात्मजम् ।
कृष्णायसं दृषत्सारमायसञ्च निगद्यते ॥ २ ॥

### तीक्ष्णलोहस्य नामानि

लोहो लोहं लोहकञ्च शस्त्रलोहञ्च तीक्ष्णकम् ।
सारलोहं काललोहं त्वयश्च तदिहोच्यते ॥ ३ ॥

### कान्तलोहस्य नामानि

कान्तलोहं तथा कान्तं त्वयस्कान्तञ्च तन्मतम् ।
कान्तायसं महालोहं तदेव निनिगद्यते ॥ ४ ॥

### मुण्डलोहादीनां परिचयः

कटाहपिष्टपचनखल्वादीनां विशेषतः ।
निर्माणाय, मुण्डलोहं साम्प्रतं विनियुज्यते ॥ ५ ॥
कृपाणादिविनिर्माणे तीक्ष्णलोहं प्रयुज्यते ।
कान्तलोहञ्च कथितं बुधैः परमदुर्लभम् ॥ ६ ॥

### मारणोचितं लोहम्

समलं मुण्डलोहं तु मारणाय न योजयेत् ।
तीक्ष्णलोहं कान्तलोहं यथालाभं प्रयोजयेत् ॥ ७ ॥

### तीक्ष्णलोहस्य लक्षणम्

उज्ज्वलं लोहफलकं धात्रीकाशीसलेपितम् ।
गिरिशृङ्गाङ्कितं यत्स्यात्तीक्ष्णलोहं तदुच्यते ॥ ८ ॥

### कान्तलोहस्य लक्षणम्

कान्तपाषाणजं लोहं कान्तलोहं प्रकीर्तितम् ।

आध्मातक्रान्तपापाणमत्वभूत तु तन्मतम् ॥ ९ ॥

लोहशोधनस्य प्रयोजनम्

हृदामय पापरुजश्च शूल दाह गुरुत्व खलु पण्ढभावम् ।
प्रगाढविद्रुतमथाश्मरीश्च त्वशुद्धलोह जनयन्त्यवश्यम् ॥१०॥

शोधनाय ग्राह्यलोहनिरूपणम्

तीक्ष्णलोहस्य फलकान्यादाय भिषजा वर ।
रतयेल्लोहकारैस्तच्चूर्णं शुद्ध्यै प्रयोजयेत् ॥ ११ ॥

अथवा

कृपाणादिविनिर्माणसुरयन्त्रालयादित ।
सुरंतित तीक्ष्णलोहचूर्णं शुद्ध्यै नियोजयेत् ॥ १२ ॥

अपि वा

सूक्ष्मकण्टकवेधीनि पत्राणि खलु कारयेत् ।
लोहस्य लोहकारैस्तु तानि शुद्ध्यै नियोजयेत् ॥ १३ ॥

शोधनाय लोहपरिमाणम्

एकमेटकतस्तीक्ष्ण समारभ्य भिषग्वर ।
मेटकत्रयपर्यन्त शोधयेन्मारयेत्तथा ॥ १४ ॥

अथ लोहशोधनस्य प्रथम प्रकार

तीक्ष्णलोहोत्थित सूक्ष्मसूक्ष्म रजो
दर्विकास्थित वह्निमन्तापितम् ।
सप्तधा स्नापित त्रैफलेनाम्भसा
लोहमेव द्रुत याति शुद्धि पराम् ॥ १५ ॥

अत्र जलक्वाथ्यनिषेच्याना परिमाणम्

त्रैफल वल्कल वै कलाभागिक
नागनेत्रक्षपानाथभाग जलम् ।
पाचित शेषित वेदभागोन्मित
सेचनीय त्वय पञ्चभागोन्मितम् ॥ १६ ॥

द्वितीय शोधनप्रकारः

अतिसूक्ष्मरजस्त्वयसो ज्वलने
परितप्तमल मुनिवारमिह ।
कदलीनगमूलजले नियत
निर्मलत्वमुपैति निषेचनतः ॥ १७ ॥

तृतीय शोधनप्रकार

वराकषायमयुते समे गवान्तु मूत्रके ।
निषेचित तु सप्तधा त्वयो विशुद्धिमाप्नुयात् ॥ १८ ॥

चतुर्थ शोधनप्रकार

शशासृजा प्रलेपित त्वयोऽर्कदुग्धतोऽपि वा ।
वराजले निषेचनाद् विशुद्धिमेत्यनुत्तमाम् ॥ १९ ॥

अथ लोहशुद्ध्यनन्तर तत्पाकक्रम

प्रथम भानुपाकेन स्थालीपाकात्तत• परम् ।
पुटपाकेन पक्वञ्च लोह सुमृतिमाप्नुयात् ॥ २० ॥

तत्रादौ भानुपाकलक्षणम्

वराक्वाथयुत लोह भानो प्रखरभानुभि ।
शुष्यन् निपच्यते यस्माद् भानुपाकस्तत स्मृत ॥ २१ ॥

अथ भानुपाकविधानम्

निर्मल खलु लोहन्तु सलिलक्षालित भिषक् ।
त्रिफलाक्वाथसयुक्त तत खल्वे निधापयेत् ॥ २२ ॥
निदाघे तु निधायाथ भानो प्रखरभानुभि• ।
शोषयेद्भिषजा वर्य कुर्यादेव तु सप्तधा ॥ २३ ॥
भानुपाके लोहतुल्या त्रिफला द्विगुण जलम् ।
पादावशेषितञ्चाथ-वराक्वाथ प्रयोजयेत् ॥ २४ ॥

### स्थालीपाकस्य लक्षणम्

त्रिफलाक्वथितोऽपि च लोहं स्थाल्यां खराग्निना ।
शुष्यन् विपच्यते यस्मात् स्थालीपाकस्ततः स्मृतः ॥ २५ ॥

### स्थालीपाकविधानम्

भानुपाकविपक्वन्तु लोहं प्रक्षालयेदलम् ।
ततः स्थाल्यां तु विन्यस्य चुल्लिकायां निधापयेत् ॥ २६ ॥
वराक्वाथेन सुपचेदतितेलं खराग्निना ।
शोषयेत्सलिलं यत्नात् लोहकर्मविचक्षणः ॥ २७ ॥
स्थालीपाके त्रिगुणिता वरा, षोडशिकं जलम् ।
अष्टभागावशिष्टश्च क्वाथमानं विधीयते ॥ २८ ॥
शतमूलीभृङ्गराजहस्तिकर्णशिफोत्थितैः ।
रसैः स्वरसैरपि भिषक् स्थालीपाकं समाचरेत् ॥ २९ ॥
यथादोषौषधेनापि स्वरसं वा कषायकम् ।
आदाय क्वाथमानञ्च स्थालीपाकं समाचरेत् ॥ ३० ॥

### पुटपाकस्य स्वरूपम्

रसादिभिर्भेषजानां खल्वे लोहं विमर्दितम् ।
पुटस्थं पच्यते यस्मात् पुटपाकस्ततः स्मृतः ॥ ३१ ॥

### पुटपाकविधानम्

स्थालीपाकविपक्वन्तु लोहं प्रक्षालयेत्ततः ।
यथादोषौषधोत्थेन रसेन क्वथितेन वा ॥ ३२ ॥
लोहखल्वे सुसम्पेष्य चक्रिकां कारयेत्ततः ।
आतपे खलु संशोष्य मृच्छरावे तु विन्यसेत् ॥ ३३ ॥
शरावेण पिधायाथ दृढं सन्धिं प्रलेपयेत् ।
वनानीतैः करीषैर्वा ह्युत्पलैर्हस्तपिण्डितैः ॥ ३४ ॥

पुटेद्गजपुटेनेह पुटपाकक्रियापटुः ।
स्वाङ्गशीत ततो ज्ञात्वा सम्पुटन्तु समाहरेत् ॥ ३५ ॥
पुनः पूर्ववदेवेह दत्त्वा क्वाथादिक पुनः ।
मर्प्येष्य सम्पुटे कृत्वा पुटेत्पुटनिधानवित् ॥ ३६ ॥
सहस्रवारमथवा शतवारमथापि वा ।
षष्टिवार पुटेद्वापि लोह गुणविवृद्धये ॥ ३७ ॥
गुणोदयो भवत्येव पुटनादुत्तरोत्तरम् ।
एव पुटविपक्वन्तु लोह सुमृतिमाप्नुयात् ॥ ३८ ॥

पुटपाके भव्यजाना परिमाणम्

पुटपाके वरादीनि यथादोषौषधानि तु ।
लोहतुल्यानि गृह्णीयात् पुटपाककलापटुः ॥ ३६ ॥
यथा यथा पुटान्यत्र दीयन्ते सुनिधानत. ।
भवेत्तथा तथाऽस्यमतिवेल गुणोदय' ॥ ४० ॥
न चैव जनयत्येतल्लोहजा कोष्ठबद्धताम् ।
स्वरभिद्कृत्वमपि वा सुचिर त्वपि सेवनात् ॥ ४१ ॥

लोहमारका गण

त्रिफला शतमूली च सिंहिका तालमूलिका ।
नीलोत्पलञ्च ह्रीवेर दशमूल पुनर्नवा ॥ ४२ ॥
वृद्धदारकमूलञ्च भृङ्ग विश्व विडङ्गकम् ।
करञ्जशिग्रुनिर्गुण्डीसुरमेरण्डमूलकम् ॥ ४३ ॥
हस्तिकर्णपलाशश्च पर्पटश्चन्दन नला ।
समाख्यातो गणोऽयन्तु लोहमारकसञ्ज्ञक ॥ ४४ ॥

अथ वातहरो गण

एरण्डमूल रास्ना च दशमूल प्रसारणी ।
मुद्गपर्णी माषपर्णी शतमूली पुनर्नवा ॥ ४५ ॥

अश्वगन्धामृता मासी बला नागबला तथा ।
गणो वातहरोऽयन्तु वातामयहरः परम् ॥ ४६ ॥

पित्तनाशको गण

उशीरनीरसिंहिकाकिरातभूरिपुत्रिका ।
पटोलचन्दनामृतासरोजतालमूलिका ॥ ४७ ॥
सुतिक्तशाल्मलीशिफासितामहीरुहामया ।
गणस्तु पित्तनाशको ह्ययं तु पित्तरोगहृत् ॥ ४८ ॥

कफनाशको गण

रास्ना मरिच चविका नागिनी विश्वभेषजम् ।
एरण्ड पिप्पलीमूल तुलसी शृङ्गवेरकम् ॥ ४९ ॥
भार्ङ्गी रक्तार्ककुसुम मूर्वा शिग्रु विभीतकम् ।
पर नलासगदजित् गणोऽयं कफनाशक ॥ ५० ॥

अथ लोहमारकगणे विशेषवक्तव्यम्

तत्तद्रोगघ्नभैषज्यैस्तत्तद्रोगापनुत्तये ।
यथालाभ पुटेत्काम प्राणाचार्यो विचक्षण ॥ ५१ ॥
पुटितस्यायसोऽभावे तत्तद्रोगघ्नभेषजे ।
त्रिफलापुटित लोह सर्वत्र विनियोजयेत् ॥ ५२ ॥

अथ लोहस्य द्वितीयो मारणप्रकार

निर्मल त्वायस तत्सम हिङ्गुल
कन्यकावारिणा निर्भर पेषयेत् ।
घर्मसंशोषितश्चाथ चूर्णीकृत
वारणाख्ये पुटे सम्पुटस्थ पुटेत् ॥ ५३ ॥
स्वाङ्गशीते पुन साक्षिमत्याशक
हिंगुल मेलयेत् त्रैफलेनाम्भसा ।
भृङ्गराजाथवा पेषयेदायस

पूर्ववद्धे पुटेत् धूत्तसच्चक्रिकम् ॥ ५४ ॥
इत्थमेवायस खाण्डिसख्यैः पुटै-
र्निश्चित जायते रक्तपद्मप्रभम् ।
तीक्ष्णकं कान्तकञ्चापि लोहद्वय
यात्यवश्य मृतिं त्वाशु चात्युत्तमाम् ॥ ५५ ॥

तृतीयो मारणप्रकार

[ गीतिका ]

निम्लीकृतन्तु लोह खलु सेटकमानम् ।
विनिधाय खल्वमध्ये सममिङ्गलीयचूर्णम् ॥ ५६ ॥
अथ निम्बुकोत्थवारा खलु पेषयेद् द्विघस्रम् ।
अथ पिष्टिता प्रयात कृतचक्रिकञ्च लोहम् ॥ ५७ ॥
परिशोषयेन्निदाघे रसतन्त्रकर्मविज्ञः ।
विधिना त्रिवारमेव पुटयेच्च सम्पुटस्थम् ॥ ५८ ॥
अथ निम्बुकोत्थवारा खलु केवलेन पिष्टम् ।
पुटयेत्तु तावदेव समुपैति पद्मकान्तिम् ॥ ५९ ॥
अचिरेण लोहमेव मृतिमेति निर्विशेषाम् ।
एव मृतन्तु लोह युञ्जीत निर्विशङ्क' ॥ ६० ॥

चतुर्थो मारणप्रकार

निमल लोहचूर्णन्तु निम्बूकोत्थेन वारिणा ।
भृश सम्पेष्य यत्नेन चक्रिका॰ कारयेच्चत ॥ ६१ ॥
सम्पुटस्थ ततः कृत्वा पुटेद्गजपुटेन तु ।
पञ्चाशद्भि पुटैरेव लोह सुमृतिमाप्नुयात् ॥ ६२ ॥
भस्म सञ्जायते चैव रक्तोत्पलसमप्रभम् ।
एव मृत त्वायसन्तु सर्वत्र विनियोजयेत् ॥ ६३ ॥

पञ्चमो मारणप्रकारः

[ गीतिका ]

विमलन्तु लोहचूर्णं खलु सेटकैकमानम् ।
खरलोहखल्वमध्ये निदधीत वैद्यवर्यः ॥ ६४ ॥
अथ लोहमानतुल्यां दत्त्वा शिलां विशुद्धाम् ।
त्वालिङ्ग्यमूलसलिलैः परिपेषयेन्निकामम् ॥ ६५ ॥
प्रनिधाय शुष्कचूर्णं त्वथ वै पुटे गजाख्ये ।
पुटयेत्तु मृच्छरावद्वयमध्यगं ततोऽग्नौ ॥ ६६ ॥
समशुद्धनागजिह्वायुतमायसं त्रिधैवम् ।
पुटितं ततः प्रयाति त्वतिसूक्ष्मचूर्णभावम् ॥ ६७ ॥
परिपेष्य चाथ यत्नाद् विदधीत वस्त्रपूतम् ।
स्थूलावशिष्टलोहं शिलया पुनः पुटेद्वै ॥ ६८ ॥
त्रिफलार्द्रकाग्निभृङ्गद्वयहस्तिकर्णकानाम् ।
कुलिशस्य सूरणस्य स्वरसेन चाग्निमुग्न्या ॥ ६९ ॥
स्वरसे पुनर्नवायाः पुटयेच्च भूरिवारम् ।
पुटितन्तु लोहमेवं मृतिमेति निर्विशेषाम् ॥ ७० ॥
विधिना त्वनेन यत्नाद् विहिता तु लोहभूतिः ।
गुदजामयप्रणुत्त्यै कथिता त्वतिप्रशस्ता ॥ ७१ ॥

षष्ठो मारणप्रकारः

विमलं कान्तलोहं तु पलपञ्चकसंमितम् ।
पादिकं मृतमाक्षीकं दत्त्वा निम्बूकवारिणा ॥ ७२ ॥
सम्पेषयेत्प्रयत्नेन शुष्कचूर्णञ्च कारयेत् ।
सम्पुटस्थं ततः कृत्वा पुटेद्गजपुटे ततः ॥ ७३ ॥
स्वाङ्गशीतं ततो ज्ञात्वा वस्त्रपूतञ्च कारयेत् ।
एवं पुटत्रयं दद्याद्रसतन्त्रविचक्षणः ॥ ७४ ॥

माक्षिकञ्च प्रतिपुटमवश्यं दापयेत्ततः ।
स्थूलानशिष्टलोहञ्च पुटेदेव प्रयत्नतः ॥ ७५ ॥
उक्तपित्तप्रभेषज्यैर्यथालाभमथापि वा ।
धात्रीरसेन पुटयेद्यावन्मृतिमवाप्नुयात् ॥ ७६ ॥
एतत्तु माक्षिकहतं कान्तलोहं भिषग्वरः ।
तत्तद्विशिष्टयोगेषु प्रयुञ्जीत विधानतः ॥ ७७ ॥

सप्तमो मारणप्रकारः

विशोधितं कान्तलोहं धात्रीस्वरसपेषितम् ।
पुटेद्गजपुटैर्नर शतधा कृतचक्रिकम् ॥ ७८ ॥
शतधा पुटितं कान्तं यत्नेन मृतिमुत्तमाम् ।
रसायनं परमिदं तथायुष्करमुत्तमम् ॥ ७९ ॥

अथ लोहनिरुत्थीकरणम्

मृतं लोहं गव्यमाज्यं तथा शुद्धञ्च गन्धकम् ।
दत्त्वा कन्याम्भसा पिष्ट्वा शुष्कचूर्णञ्च कारयेत् ॥ ८० ॥
सम्पुटस्थं ततः कृत्वा पुटेद् गजपुटे भृशम् ।
इत्थमेकपुटेर्नैव भवेल्लोहं निरुत्थितम् ॥ ८१ ॥

निरुत्थीकृतलोहस्य परीक्षणम्

विविधविधिहतं वै स्यायसं तीक्ष्णकान्तं
घृतमधुपुरगुञ्जाटङ्कणक्षोदयुक्तम् ।
सुपुटितमनलस्थं चेन्न यात्यात्मभावं
भवति सुमृतमेतत्सर्वयोगोपयुक्तम् ॥ ८२ ॥

अथ मृतलोहस्य गुणाः

लोहं रूक्षं सुमधुरमलं पाकतश्चाथ तिक्तं
वीर्ये शीतं गुरु च तुवरं लेखनञ्चातिनेत्र्यम् ।
बल्यं वृष्यं जठरगदनुत् श्लेष्मपित्तामयघ्नं
वर्ण्यं मेध्यं खलु किमधिकं हन्ति नानामयौघम् ॥ ८३ ॥

अपि च

लोह दीपनमुत्तम क्षयहर हुष्टामयध्वसन
गुल्मप्लीहविधूनन क्रिमिहर पाण्ड्वामयघ्न परम् ।
मेदोमेहनिबर्हण गरहर दुर्नामरोगान्तकृद्
छर्दिश्वासहर स्वल मद्गिरा योगेन नानार्विनुत् ॥ ८४ ॥

अपि च

विसर्पकरिकेशरी प्रबलशूलनिर्मूलन,
क्षयक्षयकरः पर चिरजशोथमङ्कोचन ।
यकृद्गदविधूननो गुदमहागदेभाङ्कुश
पर विजयतेतरा विधिहतस्तु लोहो ह्ययम् ॥ ८५ ॥

अपि च

श्वास नाशयति क्रिमीन् कशयति धिष्ण्य क्षिणोति द्रुत
शोप शोषयति भ्रम त्वपहरेच्छूल समुन्मूलयेत् ।
काम शमयति क्षय क्षपयति भ्रान्ति निहन्त्यन्तो
स्थौल्य विह्वलयत्यल दलयति श्लेष्मामयान् सर्वथा ॥ ८६ ॥

अथ लोहस्य गुणा

पुरातनमतीसार गण्डमाला नवोत्थिताम् ।
रक्तरोध वृक्कशोथ हृद्रोग विषमज्वरम् ॥ ८७ ॥
फिरङ्गज पाण्डुरोग कामलाञ्च हलीमकम् ।
योषापस्मारकञ्चैव श्वेतप्रदरजा रुजम् ॥ ८८ ॥
मधुमेह मासतानं सभेद शोषमुल्वणम् ।
तथैव ताण्डवगद सूतिकाज्वरमेव च ॥ ८९ ॥
गलक्षतञ्चामवात यकृद्रोग भगन्दरम् ।
पीनसञ्चाम्लपित्तञ्च रक्ताशस्तश्च विनाशयेत् ॥ ९० ॥
सामान्यत श्रुतिपुटनासागर्भाशयादित ।
अल्पा रक्तस्रुतिं प्रायोभाविनीमाशु नाशयेत् ॥ ९१ ॥

यौवनारम्भकालीनयोपित्पाण्ड्वामय तथा ।
आमपक्काशयगतक्षतजासृक्स्रुति जयेत् ॥ ९२ ॥
नाडीशूलमनिद्राञ्च पाण्ड्वामयसमुत्थिताम् ।
आमवातभनामस्थिनिकृतिञ्चापि नाशयेत् ॥ ९३ ॥
शारीरिकरुजञ्चापि मानसीमवपण्णताम् ।
रजःक्षयसमुद्भूता वार्द्धक्ये नाशयेद् ध्रुवम् ॥ ९४ ॥
वातसस्थानदौर्बल्य बहूत्थानसमुत्थितम् ।
अचिरादेव नियत मृत लोह विनाशयेत् ॥ ९५ ॥
आरोग्योन्मुखकाले तु यस्य कस्यामयस्य वै ।
मृत लोह प्रशसन्ति विशेषाद्बलवृद्धये ॥ ९६ ॥

अथास्य विशिष्टा गुणा

शाखाश्रित कोष्ठसमाश्रित वा
पित्तं विवृद्धन्तु मलाभिधेयम् ।
मृतन्तु लोह शमयेन्नितान्त
यथा समीर खलु मेघवृन्दम् ॥ ९७ ॥

अस्य मात्रानिरूपणम्

आरभ्य गुञ्जपादाशात् गुञ्जाद्वितयममितम् ।
मृत लोह प्रयुञ्जीत प्राणाचार्य' प्रयत्नत' ॥ ९८ ॥

अस्य आमयिक प्रयोग

लोह चतुर्जातयुत सितया च समन्वितम् ।
शीलित मात्रया तूर्णं रक्तपित्त व्यपोहति ॥ ९९ ॥
वासाद्राक्षाकणाचूर्णयुक्त लोह निषेवितम् ।
विशेषात् खलु कासाना पञ्चता पञ्चता नयेत् ॥ १०० ॥
भार्ङ्गीव्योषसमायुक्त मृत लोह निषेवितम् ।

श्वासवेगं निहन्त्याशु मेघवृन्दं यथानिलः ॥ १०१ ॥
कज्जलीपिप्पलीक्षौद्रयुतं लोहं तु शीलितम् ।
विनिहन्त्यचिरादेव निशेषात् श्लेष्मिकामयान् ॥ १०२ ॥
शुण्ठीचूर्णयुतं लोहं वातबाधां व्यपोहति ।
रससिन्दूरसितया लोहं पित्तामयान् हरेत् ॥ १०३ ॥
फलत्रिकसमायुक्तं मृतं लोहं निषेवितम् ।
सम्वत्सरप्रयोगेण वलीपलितनाशनम् ॥ १०४ ॥
ताम्बूलवीटिकोपेतं लोहन्तु परिशीलितम् ।
रससिन्दूरसंयुक्तं वृष्यं वर्ण्यञ्च कीर्तितम् ॥ १०५ ॥
हिङ्गुव्योषघृतोपेतं मृतं लोहं निषेवितम् ।
शूलमुन्मूलयत्याशु मेघवृन्दं यथानिलः ॥ १०६ ॥
धात्रीकणाचूर्णयुतं तुल्यया सितया सह ।
लोहं विनाशयेद्रक्तपित्तञ्चैवाम्लपित्तकम् ॥ १०७ ॥
विडङ्गत्रिफलामुस्तशिरारीबीजसंयुतम् ।
लोहं विनाशयत्याशु भस्मकाख्यं महागदम् ॥ १०८ ॥
गिरिजतुमधुपेतं शीलितं लोहचूर्णं ।
त्वभिनवकुशकाशक्वाथसंयोगतो वा ।
प्रतनुदिवसमात्रेणैव नात्यल्पहेतुं
व्यपनयति विशेषाद्दारुणं मूत्रकृच्छ्रम् ॥ १०९ ॥
पुनर्नवाढ्यं सुमृतं तु लोहं
प्रभूतगोक्षीररसानुपीतम् ।
मासत्रयेणैव जराकृशानां
पुनर्नवत्वं प्रददाति नूनम् ॥ ११० ॥
मृतघृतयुतं लोहं कटुकीद्रवभावितम् ।
मासद्वयप्रयोगेण सर्वाङ्गिकाङ्गदानहन् ॥ १११ ॥

घृतमधुविनियुक्त या हरिद्रारसाढ्य
त्वशितमिह हि लोह चापि कव्वीशिवाभ्याम् ।
अपहरति विशेषान्मासमात्रप्रयोगात्
सुचिरजमपि पाण्डु कामलाञ्चातिघोराम् ॥ ११२ ॥
विमलबलिसमेत क्षौद्रगव्याज्ययुक्तम्
कलितरुफलपथ्याधात्रिकोद्भूतवारा ।
कृतसमुचितपथ्यो वर्षमात्रप्रयोगात्
जनयति युवभाव ज्यायसाश्चापि पुसाम् ॥ ११३ ॥
लोह गोक्षुरक्षुद्रैलाचूर्णेन परिशीलितम्
निनिहन्त्यचिरादेव मूत्रकृच्छ्र सुदारुणम् ॥ ११४ ॥
खदिरासनसाराभ्या सप्तधा परिभावितम् ।
लोह निषेवित हन्ति कुष्ठादीन् विविधान् गदान् ॥ ११५ ॥
गन्धमारितताम्राढ्य लोह तु परिशीलितम् ।
नलात्मगुप्ताकायेन सर्वाङ्गिकाङ्क्षवातनुत् ॥ ११६ ॥
धात्रीरसहत कान्तलोह त्रिफलयान्वितम् ।
सेवित वर्षमात्र तु परमायुष्कर मतम् ॥ ११७ ॥

प्रदरान्तकलोह

लोह द्वितोलकमित रङ्ग तोलकसमितम् ।
सुवर्णगैरिकञ्चैव गव्याज्यपरिपाचितम् ॥ ११८ ॥
श्वेतमर्जरसोद्भूत चूर्ण कर्षद्वयोन्मितम् ।
सुचूर्णित मोचरस तोलकैकमित शुभम् ॥ ११९ ॥
समादाय भिषग्वर्य' काचकूप्या निधापयेत् ।
प्रदरान्तकलोहोऽय नामत' परिकीर्तित ॥ १२० ॥
अनुपानविभेदेन सर्वप्रदरनाशन ।
रक्तचन्दनजक्वाथैर्वाशोकत्वक्कषायत ॥ १२१ ॥

निहन्ति रक्तप्रदरं विविधाम्लावसंयुतम् ।
श्वेतचन्दनपङ्केन श्वेतप्रदरनाशनः ॥ १२२ ॥

अथ मण्डूरस्य स्वरूपम्

प्रतापितस्य लोहस्य घनाघातच्युतम् मलम् ।
कालेन पिण्डतां याति क्षितौ, मण्डूरमुच्यते ॥ १२३ ॥

मण्डूरस्य नामानि

मण्डूरं तु समाख्यातं किट्टं लोहभवं तथा ।
लोहकिट्टं लोहमलं लोहोच्छिष्टञ्च तन्मतम् ॥ १२४ ॥

मण्डूरस्य माहात्म्यम्

षष्टिवर्षीयमधमं मध्यं सप्ततिवार्षिकम् ।
सर्वश्रेष्ठं समाख्यातं मण्डूरं शतवार्षिकम् ॥ १२५ ॥

प्रकारान्तरेण ग्राह्यमण्डूरस्य स्वरूपम्

स्निग्धं गुरु दृढं चैव कृष्णं कोटरवर्जितम् ।
जीर्णनष्टपुरःस्थञ्च मण्डूरं ग्राह्यमुच्यते ॥ १२६ ॥

मण्डूरस्य शोधनविधि

ध्मातं बिभीतकाङ्गारैर्गोमूत्रे परिषेचितम् ।
सप्तवारं लोहमलं शुद्धिमायात्यनुत्तमाम् ॥ १२७ ॥

प्रकारान्तरेण मण्डूरस्य शोधनविधि

प्रखरदहनतप्तं लोहकिट्टं पुराणं
त्रिसुलसुरभिमूत्रे सप्तवारं निषिक्तम् ।
निगदितविधियोगान्मारणायानुरूपां
कलयति खलु शुद्धिं सत्वरं निर्विशेषाम् ॥ १२८ ॥

अथ मण्डूरस्य मारणप्रकार

चूर्णीकृतं तु मण्डूरं त्रिफलाक्वथिताम्भसा ।
सम्पेष्य सम्पुटं कृत्वा निशङ्कारं ततः पुटेत् ॥ १२९
एवं नातिचिरादेव रक्तचन्दनसप्रभम् ।
मण्डूरं जायते चूर्णं ततो योगेषु योजयेत् ॥ १३० ॥

लोहमारकगणोदितैस्तुतैं भेषजैरपि सह प्रपेषितम् ।
लोहकिट्टमथ सम्पुटीकृतं पाचितं खलु समेति पञ्चताम् ॥१३१

मृतमण्डूरस्य गुणा

मण्डूर सुमृत वृष्य शिशिर रुचिर परम् ।
दीपन पित्तशमन रक्तवृद्धिकर परम् ॥ १३२ ॥
पाण्डुप्रमत्तमातङ्गमदमर्दनकेशरी ।
कामलाकुडयकुलिश मण्डूर तु विशेषतः ॥ १३३ ॥
शोपप्रशमनश्चैव तथा शोफप्रणाशनम् ।
हलीमक च प्लीहान मण्डूर हन्त्यशेषतः ॥ १३४ ॥

मण्डूरस्य मात्रा

आरभ्य गुञ्जापादांशाल्लोहमात्राविधानवित् ।
गुञ्जाद्वितयपर्यन्त मण्डूर विनियोजयेत् ॥ १३५ ॥

मण्डूरस्य आमयिक प्रयोग

पुनर्नवाष्टककाथसयुक्त लोहकिट्टकम् ।
निषेवित निहन्त्याशु शोफजा महतीं रुजम् ॥ १३६ ॥
कदलीफलत्रिकनिशायुग्मचूर्णेन शीलितम् ।
मण्डूरमचिरादेव नाशयेत्कामला परम् ॥ १३७ ॥
विडङ्गत्रिफलापञ्चकोलाब्दपरिशीलितम् ।
मण्डूर कृमिशोफार्शोग्रहणीप्लीहपाण्डुनुत् ॥ १३८ ॥
रससिन्दूरसयुक्त मण्डूर तु निषेवितम् ।
मासमात्रप्रयोगेण रक्तवृद्धिकर परम् ॥ १३९ ॥
दशमूलकषायेण मण्डूर परिशीलितम् ।
सशोथ सज्वर सातिसार पाण्ड्वामय हरेत् ॥ १४० ॥

इति लोहविज्ञानीया नाम विंशस्तरङ्ग ।

## अथ उपधात्वादिविज्ञानीय एकविंशस्तरङ्ग.

### अथ सुवर्णमाक्षिकस्य नामानि

सुवर्णमाक्षिक स्वर्णमाक्षिक हेममाक्षिकम् ।
माक्षीक माक्षिकञ्चैव ताप्यञ्च धातुमाक्षिकम् ॥ १ ॥
माक्षीकधातुश्च तथा तापीजश्चापि तन्मतम् ।
ईषत्सुवर्णसाहित्यात्सुवर्णगुणसाम्यत' ॥ २ ॥
सुवर्णद्युतिमत्त्वाद्वा स्वर्णमाक्षिकमुच्यते ।
तापीतीरभवत्वाच्च ताप्य तापीजमुच्यते ॥ ३ ॥

#### ग्राह्यसुवर्णमाक्षिकस्य लक्षणम्

स्निग्ध गुरु श्यामलकान्ति किञ्चित्
कषे सुवर्णद्युतिसुप्रकाशम् ।
कोणोज्झित स्वर्णसमानवर्णं
सुवर्णमाक्षीकमिह प्रशस्तम् ॥ ४ ॥

#### हेयसुवर्णमाक्षिकस्य लक्षणम्

खर पर वै गुरुताविहीन प्रवृत्तकोण खरलोहकाभम् ।
प्रकीर्तित तत्परिहेयमेव सुवर्णमाक्षीकमिहामयघ्नै' ॥ ५ ॥

#### स्वर्णमाक्षिकशोधनस्य प्रयोजनम्

अशोधित वामृतमप्यशुद्ध निषेवित माक्षिकमक्षिबाधाम् ।
मन्दानल कुष्ठहलीमकादीन् कोष्ठानिल वै जनयेन्नितान्तम् ।६।

#### स्वर्णमाक्षिकस्य प्रथम शोधनप्रकार

सुवर्णमाक्षिक लोहखल्वे तु खलु कुट्टयेत् ।
सुकुट्टित ततो ज्ञात्वा चालन्या परिचालयेत् ॥ ७ ॥
ततो माक्षिकचूर्णन्तु चालनीपरिगालितम् ।
समादाय कटाहे तु स्थापयेद्द्विजा वर ॥ ८ ॥
निम्बूकस्वरस दत्त्वा पचेच्चुल्लीगत तत ।

दर्व्या सचालयेत्तावद्यावत्स्यादुत्पलप्रभम् ॥ ९ ॥
ताप्य तु यावल्लौहित्य नैति तावत्प्रयत्नतः ।
पुनर्निम्बूरस दत्त्वा पचेत्तीव्राग्नियोगतः ॥ १० ॥
भृश दिनत्रय वापि द्विदिन वा विधानत ।
पाचित माक्षिक नून शुद्धिमायात्यनुत्तमाम् ॥ ११ ॥

द्वितीय शोधनप्रकार॰

वर सुवर्णमाक्षिक सुचूर्णित समाहरेत् ।
विधाय पोट्टलीगत ततस्तु दोलिकागतम् ॥ १२ ॥
पचेत्ततः सम भृतादशुक्रमारिपोत्थितात् ।
ततस्तु पोट्टलीगत पतत्यधो हि माक्षिकम् ॥ १३ ॥
दिनैकमेवमाक्षिक विपाचित विधानत॰ ।
विशुद्धिमेत्यनुत्तमा न कश्चिदत्र सशय॰ ॥ १४ ॥

तृतीय शोधनप्रकार

वर सुवर्णमाक्षिक प्रताप्य तीव्रपावके ।
निषेचयेद्विधानवित् प्रशस्तनिम्बुकोदके ॥ १५ ॥
त्रिसप्तवारमेव वै निषेचित तु माक्षिकम् ।
विशुद्धिमेत्यनुत्तमा जनेन नात्र सशय ॥ १६ ॥
प्रयासशून्यमार्गतस्त्वनेन गोत्रदूषणम् ।
सुवर्णमाक्षिकस्थित विनश्यतीति निश्चितम ॥ १७ ॥

चतुर्थ शोधनप्रकार॰

सुचूर्णित माक्षिकन्तु कदलीकन्दवारिणा ।
घटिकाद्वितय पक्क विशुध्यति न सशय॰ ॥ १८ ॥

अथ स्वर्णमाक्षिकस्य प्रथमो मारणप्रकार

ताप्य निम्बाम्लमपक्क पुनर्निम्बूकवारिणा ।
सम्पेष्य सम्पुटस्थन्तु पुटयेत् कृतचक्रिकम् ॥ १९ ॥

एवं दशपुटैरेवं पञ्चतामेति माक्षिकम् ।
रक्तोत्पलदलच्छायं जायते चातिशोभनम् ॥ २० ॥

द्वितीयो मारणप्रकारः

निशाधितं माक्षिकन्तु बलिञ्चसमभागिकम् ।
खल्वे मर्दयेद्यत्नाद् भृशं निम्बूकवारिणा ॥ २१ ॥
मशोष्य सम्पुटे न्यस्य पुटयेत् कृतचक्रिकम् ।
एवं पञ्चपुटैरेवं म्रियते हेममाक्षिकम् ॥ २२ ॥

तृतीयो मारणप्रकारः

सुचूर्णिते तु माक्षिके निशाधितं तु हिङ्गुलम् ।
क्षिपेत्तदष्टमाशिकं ततस्तुनिम्बुकाम्बुना ॥ २३ ॥
सुपेष्य सम्पुटीकृतं पचेददीर्घचक्रिकम् ।
निषक्तमष्टधेव वै प्रकीर्तितेन वर्त्मना ॥ २४ ॥
प्रयाति पञ्चतां परं जवेन हेममाक्षिकम् ।
क्षिपेत्तु हिङ्गुलं पुनः पुनर्निरक्तमानतः ॥ २५ ॥

अथ स्वर्णमाक्षिकस्य गुणाः

सुवर्णमाक्षिकं वृष्यं मधुरं तु रसायनम् ।
तिक्तं स्वर्यञ्च चक्षुष्यं त्रिदोषघ्नं परं मतम् ॥ २६ ॥
क्षयमर्शांसि मेहानि विविधा वस्तिवेदना ।
पाण्डुश्वयथुकृम्याणि विषदोषादिकान् हरेत् ॥ २७ ॥
जीर्णज्वरमपस्मारं मन्दानलमरोचकम् ।
माक्षिकं नाशयत्याशु योगवाहि परं मतम् ॥ २८ ॥

स्वर्णमाक्षिकस्य मात्रानिरूपणम्

गुञ्जार्धतः समारभ्य बलकालाद्यपेक्षया ।
गुञ्जाद्वितयपर्यन्तं माक्षिकं योजयेद्भिषक् ॥ २९ ॥

अथ स्वर्णमाक्षिकस्य आमयिकः प्रयोगः

सुमृतं माक्षिकं शालमागादिगणभावितम् ।

यथालाभं प्रयुक्त तु सान्द्रमेहं विनाशयेत् ॥ ३० ॥
शिलाजत्वभ्रजन्तुघ्नमध्वभिः परिशीलितम् ।
शीलित मासमेकन्तु यक्ष्माण विनिवारयेत् ॥ ३१ ॥
यवक्षारसमायुक्त सुमृत स्वर्णमाक्षिकम् ।
नाशयत्यचिरादेव मूत्रकृच्छ्र सुदारुणम् ॥ ३२ ॥
पुनर्नवामृताशुण्ठीदार्वीक्वाथेन माक्षिकम् ।
सेवनादचिरादेव शोथ नाशयति ध्रुवम् ॥ ३३ ॥
काञ्चनारत्वचोत्थेन क्वाथेन परिशीलितम् ।
ताप्यमन्त प्रविष्टान्तु बहिःकुर्यान्मसूरिकाम् ॥ ३४ ॥
विषाकरञ्जचूर्णेन शीलितं हेममाक्षिकम् ।
नाशयेत्यचिरादेव नियत विषमज्वरम् ॥ ३५ ॥
कणाकलितरूत्थेन चूर्णेन मधुनान्वितम् ।
शीलित ताप्यमसित कासबाधा व्यपोहति ॥ ३६ ॥
रसगन्धकसयुक्त मधुना सह माक्षिकम् ।
शीलित त्वचिरादेव रक्तपित्त व्यपोहति ॥ ३७ ॥
तुगाक्षीरीरजोमिश्र शीलित स्वर्णमाक्षिकम् ।
मासद्वितयमात्रेण ददाति विपुल बलम् ॥ ३८ ॥
सिन्दूराभ्रसमायुक्त सव्योष स्वर्णमाक्षिकम् ।
निषेवित निहन्त्याशु दारुण गर्भिणीज्वरम् ॥ ३९ ॥
भागैक रससिन्दूर द्विभाग हेममाक्षिकम् ।
सम्मेल्य मधुना लीढ बलवीर्यकर परम् ॥ ४० ॥
पिण्डखर्जूरिकोपेत माक्षिक गुञ्जसमितम् ।
निहन्त्यापन्नसत्वाया रक्तस्रावमसशयम् ॥ ४१ ॥
त्रिफाबिल्वनलानिश्रयज्ञलाम्बुकषाययुक् ।
ताप्यमापन्नसत्वाया ज्वरातीसारशूलनुत् ॥ ४२ ॥

स्वर्णमाक्षिकस्य सत्त्वपातनप्रकार

गोमूत्रैरण्डतैलाभ्यां कदलीकन्दवारिणा ।
घृतेन मधुना चापि भावयेद्धेममाक्षिकम् ॥ ४३ ॥
सप्तवारं निभाव्याथ मूषायां विन्यसेत्ततः ।
ध्मापयेत्सुचिरं नियतस्त्वतिप्रखरवह्निना ॥ ४४ ॥
एवं नातिचिरादेव ध्मातं कनकमाक्षिकम् ।
मृदुलं रविलोहाभं सत्त्वं मुञ्चति शोभनम् ॥ ४५ ॥

द्वितीयः सत्त्वपातनप्रकारः

पादांशटङ्कणोपेतं मर्दितं हेममाक्षिकम् ।
ध्मातं मूषागतं सत्त्वं मुञ्चत्याशु सुनिश्चितम् ॥ ४६ ॥

तृतीयः सत्त्वपातनप्रकारः

समगन्धं पचेत्ताप्यं चतुर्यामं प्रयत्नतः ।
ततोऽर्द्धगन्धकः भृष्टटङ्कणं चार्द्धभागिकम् ॥ ४७ ॥
विन्यस्य चान्धमूषायां ध्मापयेदतियत्नतः ।
एवं नातिचिरादेव सत्त्वं शुल्वनिभं पतेत् ॥ ४८ ॥

स्वर्णमाक्षिकसत्त्वस्य मारणप्रकारः

हेममाक्षिकसत्त्वन्तु पञ्चतोलकसम्मितम् ।
तन्मितं निमलं सूतं बलिं दत्त्वा च मर्दयेत् ॥ ४९ ॥
जम्बीरस्य रसेनाथ मर्दयेदेकयामकम् ।
सशोष्य सम्पुटे कृत्वा पुटयेत्तीव्रवह्निना ॥ ५० ॥
त्रिवारं पुटयेदेवं निर्दिष्टेनैव वर्त्मना ।
एवं माक्षिकसत्त्वन्तु पञ्चतां याति निश्चितम् ॥ ५१ ॥

स्वर्णमाक्षिकसत्त्वस्य गुणाः

हेममाक्षिकसत्त्वं तु शिशिरं रुचिरं परम् ।
वृष्यं बल्यं तथा मेध्यं जीर्णज्वरविनाशनम् ॥ ५२ ॥
रक्तपित्तं क्षयं कासं दाहं हन्यात्सुदारुणम् ।

योगवाहि परञ्चैतद्रसायनमनुत्तमम् ॥ ५३ ॥

मृतस्वर्णमाक्षिकसत्वस्य आमयिक प्रयोग

हेममाक्षिकसत्त्व तु यथादोषानुपानत' ।
ताप्यनच्छीलित हन्ति दु:साध्यानामयानपि ॥ ५४ ॥

## अथ रजतमाक्षिकस्य नामानि

रौप्यमाक्षिकमारयात्त तारज तारमाक्षिकम् ।
निमल श्वेतमाक्षीक तथा रजतमाक्षिकम् ॥ ५५ ॥
ईषद्रौप्यस्य साहित्याद् वा रौप्यगुणसाम्यत. ।
रौप्यवद् द्युतिमत्त्वाद्वा रौप्यमाक्षिकमुच्यते ॥ ५६ ॥

जात्यरजतमाक्षिकस्य स्वरूपम्

स्निग्ध सकोणं गुरु च वर्तुल रजतोज्ज्वलम् ।
रौप्यनचाकचिक्याढ्य जात्य तद्रौप्यमाक्षिकम् ॥ ५७ ॥

हेयरौप्यमाक्षिकस्य स्वरूपम्

समल लघु रूक्षञ्च कपेऽतिमलिनच्छवि ।
अवर्तुल विवर्णञ्च हेय स्याद्रौप्यमाक्षिकम् ॥ ५८ ॥

रौप्यमाक्षिकस्य शोधनप्रयोजनम्

अशुद्ध रौप्यमाक्षीक स्वर्णमाक्षिकवद्ध्रुवम् ।
जनयत्याशु मन्दाग्नि तथा कुष्ठादिकान् गदान् ॥ ५९ ॥

रौप्यमाक्षिकस्य प्रथम शोधनप्रकार'

[ गीतिका ]

विमल तु जात्यमार्दा सुविचूर्ण्य खल्वमध्ये ।
अथ निम्बुकोत्थधारा निदधीत वै कटाहे ॥ ६० ॥
अथ लोहचुल्लिकाया निनिधापयेत् कटाहम् ।
चुल्ल्या प्रदीप्य वह्नि परिचालयेच्चदर्व्या ॥ ६१ ॥
विमलस्तु नैति यावच्चारक्तपङ्कजाभाम् ।
निक्षिप्य निम्बुकाम्भस्तावत्पचेत्प्रयत्नात् ॥ ६२ ॥

अरुणोत्पलप्रकाशं विमलं विलोक्य नैव ।
अस्ताग्येद्विशुद्धं विमलं प्रयोगयोग्यम् ॥ ६३ ॥

द्वितीयं शोधनप्रकारं

विमलं तु जाम्बमार्त्या सुविधाय पोट्टलीस्थम् ।
अथ दोलिकाख्ययन्त्रे क्षपपत्रतोयधारा ॥ ६४ ॥
विधिना विधानदक्षः मस्वेदयेद् द्वियामम् ।
विमलोऽतिनिर्मलोऽयं विमलत्वमेत्यनल्पम् ॥ ६५ ॥

तृतीयं शोधनप्रकारं

मपण्डूर्णीरसेनापि दोलायन्त्रे विधानतः ।
पाचितं रौप्यमाक्षिकं शुद्धिमायात्यनुत्तमाम् ॥ ६६ ॥

रौप्यमाक्षिकस्य मारणप्रकारं

विमलो लकुचद्रावैः पादांशबलिसंयुतः ।
पिष्ट्वा तु मसृणं चेह पुटितो याति पञ्चताम् ॥ ६७ ॥

रौप्यमाक्षिकस्य सामान्येन मारणम्

स्वर्णमाक्षिकवत्कार्यं रौप्यमाक्षिकमारणम् ।
प्रयोगाल्पतया चास्य व्याख्यानं नाधिकं कृतम् ॥ ६८ ॥

रौप्यमाक्षिकस्य गुणादिनिरूपणम्

स्वर्णमाक्षिकवज्ज्ञेया विमलस्य गुणा बुधैः ।
मात्रा चामयिकं योगं तथैव परिलक्षयेत् ॥ ६९ ॥

रौप्यमाक्षिकस्य सत्त्वपातनम्

पादांशटङ्कणोपेतो लकुचद्रावमर्दितः ।
विमलः सुचिरं ध्मातः सत्त्वं सीसोपमं त्यजेत् ॥ ७० ॥

अथ तुत्थकस्य नामानि

तुत्थं तु तुत्थकं तुत्थाञ्जनञ्चापि मयूरकम् ।
सस्यकं ताम्रगर्भञ्च शिखिग्रीवञ्च तन्मतम् ॥ ७१ ॥

माह्यतुत्थकस्य स्वरूपम्

शिखिकण्ठसमच्छायं गुरु स्निग्ध महोज्ज्वलम् ।
तुत्थक शस्यते विज्ञैरन्यद्धीनगुण मतम् ॥ ७२ ॥

तुत्थकस्य निर्मलीकरणम्

सुचूर्णित तुत्थक तु दशतोलकसंमितम् ।
क्षिपेदत्युष्णसलिले पञ्चतोलकसंमिते ॥ ७३ ॥
तत' मारकपत्रेण सारयेद्वासमाथवा ।
मारित मलिल विज्ञ काचपात्रतलस्थितम् ॥ ७४ ॥
तावत्सम्थापयेद्यावन्नेति तत्कणरूपताम् ।
एव कणत्वमापन्न तुत्थं शुद्धयै नियोजयेत् ॥ ७५ ॥

निर्मलीकृततुत्थस्य गुणा

तुत्थ तु तिक्तक स्वच्य ग्राहि वान्तिकर परम् ।
कफघ्नमथ चक्षुष्य व्रणदोपनिषूदनम् ॥ ७६ ॥
उपदशफिरङ्गोत्थक्षतशोधनकृत्परम् ।
श्लिष्टनर्मप्रशमन क्षारकर्मकर स्मृतम् ॥ ७७ ॥

तुत्थकद्रवस्य निर्माणप्रकार

द्विगुञ्जतश्चतुर्गुञ्ज तुत्थक निर्मलीकृतम् ।
परिस्रुते तु सलिले पञ्चतोलकसमिते ॥ ७८ ॥
निक्षिपेदथ विज्ञाय तुत्थक सर्वथा द्रुतम् ।
तुत्थद्रव प्रयुञ्जीत रसतन्त्रविचक्षण ॥ ७९ ॥

तुत्थकद्रवस्य आमयिक प्रयोग

प्रक्लिन्नपूतिमामानां सुचिरादप्यरोहताम् ।
तथात्युच्छ्रितमामाना व्रणाना पूतिगन्धिनाम् ॥ ८० ॥
उपदशफिरङ्गोत्थस्फोटानाञ्चाप्यरोहताम् ।
रोपणाय तथाक्षेपदोपनिर्हरणाय च ॥ ८१ ॥
तुत्थद्रव प्रयुञ्जीत विधानज्ञो भिषग्वर ।

द्रवेणानेन धावास्तु व्रणा रोहन्त्यसंशयम् ॥ ८२ ॥
नेत्रवर्त्मयुगे युक्त्या योजितस्तुत्थकद्रवः ।
क्लिन्नवर्त्मरुजश्चापि पोथकीमाशु नाशयेत् ॥ ८३ ॥

[ गीतिश्च ]

उपसर्गजे तु मेहे प्रदरे च शुक्लपूर्वे ।
भृशमुत्तराख्यवस्तिप्रवि पादितायनेन ॥ ८४ ॥
द्रवमाशु तुत्थकोत्थ विनियोजयेद्विधिज्ञः ।
शममेति सर्वथैव प्रथमोक्तरोगबाधा ॥ ८५ ॥

निर्मलीकृततुत्थस्य आमयिक प्रयोग

तुत्थकोदया वटी

भागैक निर्मल तुत्थ पथ्या च मधुयष्टिका ।
मरिच तु कलांश स्याद्वटी पिष्टाम्भसा कृता ॥ ८६ ॥
मापकप्रमिता नाम्ना वटीयं तुत्थकोदया ।
घृष्टाम्भसा प्रयुक्तेयं पोथक्यादिविकारनुत् ॥ ८७ ॥

तुत्थकोदया वर्तिः

पञ्चतोलोन्मित तुत्थ निधिना निर्मलीकृतम् ।
निर्मल शोरकञ्चैव स्फटिकारीञ्च तन्मिताम् ॥ ८८ ॥
कर्पूर तोलकार्द्धञ्च पेपयेद्यत्नतोऽम्भसा ।
रक्तिद्वयमिताश्चैका वर्तिं निर्मापयेत् पृथक् ॥ ८९ ॥
द्रावयित्वा वर्तिमेका पञ्चतोलोन्मिते जले ।
ततः कूर्चिकया यत्नादुष्ट्रकेशप्रणीतया ॥ ९० ॥
द्रवप्रसिक्तया वर्त्म विपर्यस्त समञ्जयेत् ।
क्लिन्नवर्त्मरुज घोरा पोथकीञ्च विनाशयेत् ॥ ९१ ॥

तुत्थकादिवर्तिः

तुत्थकुष्ठवरादार्वीदन्तीमूलनिशुम्भिलैः ।
सकणामैन्धवर्ण्द्रैः पिष्ट्वा निम्बदलाम्भसा ॥ ९२ ॥

कृतास्त्वेपणिकाकारा वर्तिका व्रणशोधिका ।
योजयेद्युक्तितो नाडीव्रणादौ च भगन्दरे ॥ ९३ ॥

शिखिग्रीवादिवर्ति

माषकैकं शिखिग्रीवं मरिचं कर्षसम्मितम् ।
तोलकप्रमितेनाथ गृहनीरेण पेषयेत् ॥ ९४ ॥
वर्तिर्विनिर्मिता घृष्ट्वा युक्तया वर्त्मनि योजिता ।
चिरोत्थ क्लेदनहुल पिल्लमुन्मूलयत्यलम् ॥ ९५ ॥
सुचूर्णितं तुत्थकन्तु यत्नतः स्वल्पमात्रया ।
प्रतिमारणसम्भिन्ने लगणे हन्ति वेदनाम् ॥ ९६ ॥

तुत्थामृतमलहर

सिक्थतैलं सुविमलं दशतोलकसम्मितम् ।
सुनिर्मलं शिखिग्रीवं खलु निंशतिगुञ्जकम् ॥ ९७ ॥
आदाय खल्वे सम्पेष्य काचकुप्यां निधापयेत् ।
कथितोऽयं मलहरस्तुत्थकामृतसंज्ञकः ॥ ९८ ॥

अस्य गुणा

तुत्थकामृतसंज्ञोऽयं नित्यं मलहरोऽचिरात् ।
विनाशयेत् प्रलेपेन पामां चिरसमुत्थिताम् ॥ ९९ ॥

तुत्थकाद्यो मलहर

घृतं द्वितोलकमितं दर्वीस्थं वह्निना पचेत् ।
तोलकादष्टमाशं वा पादिकं रालकं क्षिपेत् ॥ १०० ॥
रालं तु विद्रुतं ज्ञात्वा द्रुतं खल्वे विनिक्षिपेत् ।
दत्त्वाथ निर्मलं तुत्थं तोलकस्याष्टमांशिकम् ॥ १०१ ॥
खटीं कपर्दभमितं टङ्कञ्चैकैकतोलकम् ।
पपयेद्वारिणा तावन्मुञ्चेन्नीरन्तु नीलताम् ॥ १०२ ॥
मुहुर्मुहुः क्षिपेन्नीरं मर्दनान्नीलता गतम् ।
विशालास्ये काचकूपे निदध्यादथ यत्नत' ॥ १०३ ॥

तुत्थकाथो मलहरो व्रणसंशोधनः परम् ।
पूयनिःसारकश्चैव विविधव्रणनाशनः ॥ १०४ ॥

विशुद्धतुत्थकस्य प्रयोग

सौभाग्यपुष्पसंयुक्तं तुत्थकं त्वार्द्रकाम्भसा ।
द्विगुञ्जं वामने दद्यात्संज्ञालोपापनुत्तये ॥ १०५ ॥

आभ्यन्तरप्रयोगार्थं तुत्थकशोधनस्य प्रथम प्रकार

[गीतिका]

तुत्थं निचूर्ण्य खल्वे नवनिम्बुकोत्थवारा ।
परिपेषयेद् द्वियामं रसतन्त्रकर्मविज्ञः ॥ १०६ ॥
विधिना ह्यनेन तुत्थं परिशोधितं तु नूनम् ।
अविलम्बितं विशुद्धिं समुपैति निर्विशेषाम् ॥ १०७ ॥

द्वितीय शोधनप्रकार

रक्तचन्दनमञ्जिष्ठाकषायेण तु भावितम् ।
सप्तवारं प्रयत्नेन शुद्धिमायात्यनुत्तमाम् ॥ १०८ ॥

तृतीय शोधनप्रकार

मृद्भाजने तुत्थकन्तु पोट्टल्या सुस्थिरीकृतम् ।
गोमूत्रेण त्रियामं तु दोलायन्त्रगतं पचेत् ॥ १०९ ॥
तुत्थं मूत्रे द्रवीभूतं ज्ञात्वा मूत्रं विशोषयेत् ।
किञ्चिज्जलावशेषे च पात्रं भूमौ निधापयेत् ॥ ११० ॥
पात्रे तु शीततां याते कणतामेति तुत्थकम् ।
एवं विशोधितं तुत्थं शुद्धिमायात्यनुत्तमाम् ॥ १११ ॥

चतुर्थ शोधनप्रकार

अम्लवर्गप्रदिष्टेन एकेनाप्यौषधेन तु ।
भावितं सप्तधा तुत्थं शुद्धिमायात्यनुत्तमाम् ॥ ११२ ॥

शाधिततुत्थकस्य आमयिक प्रयोग

तुत्थामृता वटी

तोलकैकमित तुत्थ विधिना परिशोधितम् ।
पलद्वयमिता बालपथ्यामादाय चूर्णिताम् ॥ ११३ ॥
खल्वे निम्बूकतोयेन पेषयेद्दिनसप्तकम् ।
वटिका कारयेद्वैद्यो गुञ्जाद्वितयसम्मिताः ॥ ११४ ॥
ततः काचपिधानाया काचकुप्या निधापयेत् ।
वटिकेय समाख्याता बुधैस्तुत्थामृताभिधा ॥ ११५ ॥

अस्य गुणा

एकैका वटिका नित्य शीलिता शीतलाम्भसा ।
विनिहन्ति त्रिसप्ताहात् फिरङ्गमतिदारुणम् ॥ ११६ ॥
पूर्वोक्तरसपुष्पादिसूतयोगाद्यपेक्षया ।
क्वचित्क्वचिद्विशेषेण मताधिकफलप्रदा ॥ ११७ ॥
स्फीतता दन्तवेष्टेषु प्रयोगेऽस्य न जायते ।
शालिगोधूममुद्गाज्य पथ्यमत्रप्रकीर्तितम् ॥ ११८ ॥

अथ तुत्थकमारणस्य प्रथम प्रकार

[ गीतिका ]

नवनिम्बुकोत्थधारा परिशोधित तु तुत्थम् ।
कृतचक्रिक निदध्याद् परिशोषयोन्निदाघे ॥ ११९ ॥
लघुना पुटेन विज्ञ पुटयेच्च सम्पुटस्थम् ।
अथ भावयेत्प्रयत्नाद् दधिमस्तुना त्रिघस्रम् ॥ १२० ॥
विधिना ह्यनेन तुत्थ वमनादिदोषहीनम् ।
अविलम्बित प्रयत्नान्मृतिमेति निर्विशेषाम् ॥ १२१ ॥

द्वितीयो मारणप्रकार

मुनिर्मल तुत्थक तु पञ्चतोलकसम्मितम् ।
टङ्कण गन्धकञ्चैव सममेव समाहरेत् ॥ १२२ ॥

पाषाणखल्वे विन्यस्य पेषयेल्लकुचाम्भसा ।
मूषिकाया निरुध्याथ कौक्कुटे तु पुटे पुटेत् ॥ १२३ ॥
पुटद्वयं प्रदातव्यं बलिनैव प्रयत्नतः ।
तुत्थकं जायते नूनं वान्तिभ्रान्त्यादिवर्जितम् ॥ १२४ ॥

तृतीयो मारणप्रकारः

पलोन्मितं तुत्थकं तु गन्धकन्तु पलार्द्धकम् ।
शरावसम्पुटे न्यस्य मृदा च परिलेपयेत् ॥ १२५ ॥
पुटत्रयं प्रदातव्यं स्वल्पैरेव वनोत्पलैः ।
तुत्थकं मृतिमाप्नोति वान्तिभ्रान्त्यादिवर्जितम् ॥ १२६ ॥

सुमृततुत्थकस्य गुणाः

तुत्थकं लेखनं भेदि कषायं मधुरं लघु ।
क्रिमिघ्नमथ चक्षुष्यं मेहमेदोहरं परम् ॥ १२७ ॥
कफपित्तहरं बल्यं शूलहृत्कुष्ठनाशनम् ।
श्वित्रापहं त्वम्लपित्तहरं चैव रसायनम् ॥ १२८ ॥
तुत्थं सङ्कोचनकरं नाडीनां बलकृत् परम् ।
त्वग्दोषशमनं कामं विशेषाद्रुचिरं मतम् ॥ १२९ ॥

मृततुत्थकस्य मात्रानिरूपणम्

गुञ्जाष्टमांशतो गुञ्जपादिकं तुत्थकं मृतम् ।
तत्तद्रोगजयोगेन वीतशङ्कं प्रयोजयेत् ॥ १३० ॥

मृततुत्थकस्य आमयिकः प्रयोगः
तुत्थकाद्यरसायनम्

तुल्यकज्जलिकया समन्वितं
तुल्यगन्धकमृतं तु तुत्थकम् ।
मर्दितं सपदि निम्बुकाम्भसा
पेषयेत्समकटुत्रिकाम्भसा ॥ १३१ ॥
गुञ्जकद्वितयसंमिता वटीं
कारयेद्रमनिधानकोविदः ।

भापितोऽयमिह सूतचिन्तकै-
स्तुत्थकोदयरसायनाह्वयः ॥ १३२ ॥
निषेवयेद्वटीमेका नागिनीदलजद्रवैः ।
दिने वारद्वय युक्ता नाशयेद्विषमज्वरम् ॥ १३३ ॥
तक्रेण दापयेच्चैका गर्भिणीशूलशान्तये ।
शीलिता निम्बुकद्रावै शूल गुल्मञ्च नाशयेत् ॥ १३४ ॥
हिङ्गुविश्वाम्लिकानिम्बूद्रवेण प्लीहशान्तिकृत् ।
पयसा ससितेनेह शुक्रमेह समुद्धरेत् ॥ १३५ ॥
अष्टमाशकनकोत्थभस्मना सार्द्धमण्डलकमेव शीलितम् ।
तुत्थकोदयरसायन हरेत् कासनिड्ग्रहयुता क्षयव्यथाम् ॥१३६

तुत्थकसत्वपातनस्य प्रथम प्रकार

पलद्वयोन्मित तुत्थ यत्नतो विमलीकृतम् ।
टङ्कण तत्सम दत्वा मर्दयेन्निम्बुकद्रवै ॥ १३७ ॥
विन्यस्य चान्धमूषाया ध्मधमेत्खरवह्निना ।
एव नातिचिरादेव सत्व ताम्रमय पतेत् ॥ १३८ ॥

द्वितीय सत्वपातनप्रकार

पादसौभाग्यसयुक्त तुत्थक सुविचूर्णितम् ।
करञ्जतैले विन्यस्य रक्षेदेकदिन ततः ॥ १३९ ॥
विन्यस्य चान्धमूषाया ध्मधमेत् कोकिलाग्निना ।
एव नातिचिरादेव सत्व ताम्रमय पतेत् ॥ १४० ॥

तृतीय सत्वपातनप्रकार

चूर्णीकृत तुत्थक तु दशतोलकममितम् ।
निक्षिपेत्सलिले ऽत्युष्णे पञ्चतोलकमामिते ॥ १४१
द्रवीभूत ततो ज्ञात्वा लोहखण्डान् विनिक्षिपेत् ।
चूर्णरूप शुद्धताम्र तुत्थसत्व पतत्यधः ॥ १४२ ॥
जल निक्षिप्य पात्राध'प्रदेशे खलु सञ्चितम् ।

इन्द्रगोपसमाकारं तुत्थसत्त्वं समाहरेत् ॥ १४३ ॥

तुत्थसत्त्वस्य मारणं गुणाः प्रयोगश्च

तुत्थसत्त्वं सुनिर्मलं मारयेद्रविलोहवत् ।
तद्वदेव गुणास्तस्य प्रयोगश्चापि तादृशः ॥ १४४ ॥

अथ कृत्रिमतुत्थस्य निर्माणप्रकारः

विशुद्धे ताम्रचूर्णे तु गन्धकाम्लं शनैः क्षिपेत् ।
निधाय निद्रुतं ताम्रं शोषयेन्मृदुवह्निना ॥ १४५ ॥
निमर्द्यात्युष्णनीरेऽल्पे द्रवीकुर्याद्विधानवित् ।
जले शीतत्वमापन्ने कणत्वं समुपागतम् ॥ १४६ ॥
शिखिकण्ठसमच्छायं तुत्थकं तु समाहरेत् ।
इत्थं विनिर्मितं तुत्थं वीतशङ्कः प्रयोजयेत् ॥ १४७ ॥

## अथ सिन्दूरस्य नामानि

सिन्दूरं गिरिसिन्दूरं महिलाभालभूषणम् ।
गणेशभूषणञ्चैव तथा शृङ्गारभूषणम् ॥ १४८ ॥
नागजं नागगर्भञ्च तथैव नागरेणुकम् ।
मङ्गल्यं भालसौभाग्यं तदेव परिकीर्तितम् ॥ १४९ ॥

ग्राह्यसिन्दूरस्य लक्षणम्

अतिसूक्ष्मकणं स्निग्धं गुरु वर्णसमुज्ज्वलम् ।
मृदुलं विमलञ्चैव सिन्दूरं जात्यमुच्यते ॥ १५० ॥

सिन्दूरस्य गुणाः

सिन्दूरं क्षुद्रकुष्ठघ्नं त्वच्यं व्रणविशोधनम् ।
भग्नसन्धानजननं तथैव व्रणरोपणम् ॥ १५१ ॥
पामाविचर्चिकासिध्मवीसर्पशमनं परम् ।
भूतघ्नञ्च विशेषेण रक्तदोषनिषूदनम् ॥ १५२ ॥

सिन्दूरस्य आमयिकः प्रयोगः

आभ्यन्तरः प्रयोगोऽस्य सिन्दूरस्य न दृश्यते ।

अतो बाह्यप्रयोगार्थं यत्किञ्चिदुपदिश्यते ॥ १५३ ॥
सिन्दूरं घृतसंयुक्तं लेपाल्लोचनवर्त्मनि ।
नाशयत्यचिरादेव कण्डूमञ्जननामिकाम् ॥ १५४ ॥
मध्वाज्यगुग्गुलुगुडयुतसिन्दूरलेपितौ ।
कामं तु स्फुटितौ पादौ भवतस्तूत्पलप्रभौ ॥ १५५ ॥

प्रथम सिन्दूराद्यो मल्हर

निर्मलं सिक्थतैलन्तु कर्षत्रितयसंमितम् ।
तोलकार्द्धमितं टङ्कं सिन्दूरञ्चापि तन्मितम् ॥ १५६ ॥
सम्मेल्य मसृणे खल्वे काचकुप्यां निधापयेत् ।
सिन्दूराद्यो मलहरो नाम्नायं परिकीर्तितः ॥ १५७ ॥

अस्य गुणाः

सिन्दूराद्यो मलहरः पूयनिर्हरणः परम् ।
भूतसङ्घप्रशमनो व्रणशोधनरोपणः ॥ १५८ ॥

द्वितीय सिन्दूराद्यो मल्हर

अत्र टङ्कणस्थाने खलकं यदि दीयते ।
सिन्दूराद्यो मलहरस्तदायमपि कथ्यते ॥ १५९ ॥

अस्य गुणाः

सिन्दूराद्यो मलहरः पामाकण्डूतिनाशनः ।
भग्नसन्धानजननो भूतघ्नो व्रणरोपणः ॥ १६० ॥
त्वग्दोषशमनः कामं स्फुटिताङ्गविरोपणः ।
गुदामयस्फोटकुष्ठवीसर्पादिविकारनुत् ॥ १६१ ॥

सिन्दूराद्यतैलम्

तैलं सर्षपसम्भूतं शुभं दशपलोन्मितम् ।
निशार्कपत्रकल्कन्तु दद्याद्विंशतितोलकम् ॥ १६२ ॥
पलोन्मितञ्च सिन्दूरं तुत्थं रक्तिचतुष्टयम् ।

तैलपाकविधानेन पाचयेत्तैलपाकवित् ॥ १६३ ॥
गिन्द्रगायमिदं तैलं भिषग्भिः परिकीर्तितम् ।
पामाविषविस्फोटमसूरकण्डूनिकापहम् ॥ १६४ ॥

### अथ मृद्दारशृङ्गस्य नामानि

मृद्दारशृङ्गकञ्चैव मतं बोदारशृङ्गकम् ।
मुद्राशङ्खं तथा मुद्रशङ्खकञ्च निगद्यते ॥ १६५ ॥

#### मृद्दारशृङ्गस्य स्वरूपम्

मृद्दारशृङ्गं पीताभं सदलं निर्दलं तथा ।
सीसगर्भं खरस्पर्शं गुरु चैवप्रकीर्तितम् ॥ १६६ ॥

#### मृद्दारशृङ्गस्य शोधनम्

मृद्दारशृङ्गमानीय कुट्टयेत् खल्लमध्यगम् ।
प्रस्तरांश परित्यज्य पेषयेदतियत्नतः ॥ १६७ ॥
वस्त्रपूतं ततः कृत्वा पुनः सुनिर्मलाम्भसा ।
पेषयेत्पक्षमेकं तु ततो घर्मे विशोषयेत् ॥ १६८ ॥
मृद्दारशृङ्गकं काममेतद्विधिविशोधितम् ।
क्षतेऽवचूर्णनाद्यर्थं युञ्जीत भिषजां वरः ॥ १६९ ॥

#### मृद्दारशृङ्गस्य गुणाः

मृद्दारशृङ्गं शिशिरं परं वातकफापहम् ।
फिरङ्गव्रणहृत् परं केश्यं व्रणरोपणमुत्तमम् ॥ १७० ॥
भग्नसन्धानजननं पामाकण्डूक्षतिकादिनुत् ।
सङ्कोचकं विशेषेण स्वग्दोषशमनं मतम् ॥ १७१ ॥

#### मृद्दारशृङ्गस्य आमयिकः प्रयोगः

पलं मृद्दारशृङ्गं तु टङ्काम्लञ्च द्वितोलकम् ।
फिरङ्गं निनिहन्त्याशु व्रणेषु त्ववचूर्णितम् ॥ १७२ ॥

मृद्दारश्रृङ्गाद्यमलहर

पलैक सिक्थतैलन्तु पूर्वोक्तविधिसाधितम् ।
मृद्दारश्रृङ्गज चूर्णं शुद्धं तोलकसमितम् ॥ १७३ ॥
सम्मेल्य काचफलके काचकुप्या निधापयेत् ।
अथ मृद्दारश्रृङ्गाद्यो नाम्ना मलहरः स्मृतः ॥ १७४ ॥

अस्य गुणा

मृद्दारश्रृङ्गकाद्योऽय त्वच्यो मलहरः परम् ।
भग्नसन्धानजननः पामाकण्डूतिनाशन· ॥ १७५ ॥
विपादिकाप्रशमनो व्रणशोधनरोपण ।
गुदामयहरश्चाय निशेषेण प्रकीर्तित' ॥ १७६ ॥

द्वितीयो मृद्दारश्रृङ्गाद्यो मलहर

पलैकप्रमित तैलमतसीबीजसम्भवम् ।
प्रदीप्तचुल्लिकासस्थे न्यसेत्पित्तलभाजने ॥ १७७ ॥
मृद्दारश्रृङ्गज चूर्णं तोलकैकमित क्षिपेत् ।
पचेत्तावत् प्रयत्नेन यावन्नैति प्रगाढताम् ॥ १७८ ॥
ततो दृढपिधानाया काचकुप्या निधापयेत् ।
अथ मृद्दारश्रृङ्गाद्यो नाम्ना मलहर· स्मृतः ॥ १७९ ॥

अस्य गुणा

मृद्दारश्रृङ्गकाद्योऽय त्वच्यो मलहरः परम् ।
समाख्यातो विशेषेण विविधव्रणरोपण' ॥ १८० ॥

अथ खर्परस्य नामानि

खर्पर' खर्परञ्चैव तदेव खर्परीयकम् ।
रसको रसकञ्चैव मत यशदकारणम् ॥ १८१ ॥

खर्परस्य स्वरूपम्

खर्परोऽतिखरश्चैव सदलो निर्दलस्तथा ।
मृत्तिकाभश्च पीताभो भाराढ्यश्चेह शस्यते ॥ १८२ ॥

खर्परस्य द्वौ भेदौ

खर्परो द्विविधः प्रोक्तः सदलो निर्दलस्तथा ।
सदलो दर्दुराख्यः स्यात्कारवेल्लाभिधोऽपरः ॥ १८३ ॥
खर्परं दर्दुराख्यन्तु योजयेत्सत्वपातने ।
औषधेषु च सर्वत्र कारवेल्लं प्रयोजयेत् ॥ १८४ ॥

खर्परस्य प्रथमः शोधनप्रकारः

खर्परं खल्वगं लोहमुद्गरेण विघातयेत् ।
पतितं प्रस्तराशश्च यत्नतः परिवर्जयेत् ॥ १८५ ॥
प्रस्तराशपरित्यक्तं खर्परं त्वथ खल्वगम् ।
निम्बूकस्वरसोपेतं पेषयेत्सप्तवासरम् ॥ १८६ ॥
निशोषितं तु पीताभं श्लक्ष्णचूर्णं प्रजायते ।
एवं नातिचिरादेव खर्परः परिशुध्यति ॥ १८७ ॥

द्वितीयः शोधनप्रकारः

खर्परं प्रखरं वह्नौ सप्तधा परितापितं ।
निषिक्तो निम्बुकद्रावे शुद्धिमायात्यनुत्तमाम् ॥ १८८ ॥

तृतीयः शोधनप्रकारः

खर्परं परिसन्तप्तस्तक्रे वा गृहवारिणि ।
निषिक्तं सप्तवार तु विमलत्वमवाप्नुयात् ॥ १८९ ॥

खर्परस्य प्रथमो मारणप्रकारः

विशोधितं खर्परन्तु पलद्वितयसम्मितम् ।
तुल्येन चातिशुद्धेन रसेन्द्रेण विमर्दयेत् ॥ १९० ॥
श्लक्ष्णचूर्णं ततः कृत्वा सम्पुटस्थं तु कारयेत् ।
पुटयेदतियत्नेन शुष्कवन्योत्पलानले ॥ १९१ ॥
त्रिधैवं पुटितोऽयन्तु निर्विशेषां मृतिं व्रजेत् ।
इत्थं सुमृदुलं रम्यं पीताभं भस्म जायते ॥ १९२ ॥

द्वितीयो मारणप्रकार

खर्परो विमलः शुद्धतुल्यतालकपेषितः ।
मम्पुटस्थस्त्रिपुटितः सर्वथा मृतिमाप्नुयात् ॥ १९३ ॥

मृतखर्परस्य गुणा

सुमृतः खर्परः शीतः कफपित्तापहः परम् ।
चक्षुष्यः सर्वमेहघ्नो रक्तप्रदरनाशनः ॥ १९४ ॥
रक्तपित्ताश्मरीश्वासगुदामयनिषूदनः ।
जीर्णज्वरहरः काम स्नतीसारनिर्बर्हण. ॥ १९५ ॥
योगवाही विशेषेण त्रिदोषघ्नो विषापह. ।
विचर्चिकाकुष्ठहरो बलवीर्यविवृद्धिकृत् ॥ १९६ ॥

खर्परस्य मात्रानिरूपणम्

गुञ्जार्द्धतः समारभ्य गुञ्जाद्वितयसंमिता ।
खर्परस्य मता मात्रा रोगापनयनक्षमा ॥ १९७ ॥

खर्परस्य आमयिक प्रयोग

गोक्षुरक्वाथसयुक्त' खर्परः परिशीलितः ।
विनिहन्त्यचिरादेव मूत्रकृच्छ्रभवा रुजम् ॥ १९८ ॥
वशलोचनचूर्णेन खर्परः परिशीलित' ।
चिरोत्थित क्षयोत्थ वा कास श्वास समुद्धरेत् ॥ १९९ ॥
खर्पर' शीलितस्तुल्यकान्तलोहस्य भस्मना ।
विनिहन्ति गदान् पाण्डुश्वयथुप्रदरादिकान् ॥ २०० ॥
रससिन्दूररजसा खर्पर' परिशीलितः ।
निरन्तरप्रयोगेण हन्ति जीर्णज्वर परम् ॥ २०१ ॥
प्रवालमरिचोपेतो रससिन्दूरसंयुत ।
सजीरको निम्बुनारा खर्परस्तु निषेवितः ॥ २०२ ॥
धातुज्वर वह्निमान्द्य तथा जीर्णज्वरादिकम् ।
विनाशयत्याशु यथा तिमिर तु प्रभाकरः ॥ २०३ ॥

खर्परस्य प्रथमं सत्वपातनप्रकारः

लाक्षाभयाहरिद्रोमागुडरालकटङ्कणैः ।
चूर्णीकृतं खर्परन्तु गव्यदुग्धाज्यतः पचेत् ॥ २०४ ॥
निधाय गोलकं घर्मे शोषयेद्रसकोविदः ।
वृन्ताकमूषानिहितं ध्मापयेत् प्रखराग्निना ॥ २०५ ॥
निद्रुतं परितो ज्ञात्वा ढालयेत् क्षितिगर्तके ।
यशदप्रभमत्यच्छं सत्वं पतति शोभनम् ॥ २०६ ॥

खर्परस्य द्वितीयं सत्वपातनप्रकारः

लाक्षाभयाहरिद्रोमागुडरालकटङ्कणैः ।
यशदप्रभं पिष्टं एतैस्तु सममागिकैः ॥ २०७ ॥
मूकमूषागतो ध्मातः सततं प्रखराग्निना ।
यशदप्रभमत्यच्छं सत्वमाशु प्रमुञ्चति ॥ २०८ ॥

खर्परसत्वस्य मारणम्

[ गीतिका ]

सत्वं पलप्रमाणं खलु खर्परीयकोत्थम् ।
विनिधापयेत्कटाहे परिदीप्तचुल्लिकास्ये ॥ २०९ ॥
विद्रुतं विलोक्य सत्वं परिघट्टयस्तु दर्व्या ।
त्वधिनिक्षिपेद्विशुद्धं भृशमल्पमल्पमालम् ॥ २१० ॥
विधिना ह्यनेन सत्वं मृतिमेति निर्विशेषाम् ।
सुमृतं तु सत्वमेवं विनियोजयेद्विशङ्कं ॥ २११ ॥

मृतखर्परसत्वस्य गुणाः

सत्वं खर्परसम्भूतं पाण्डुश्वयथुगुल्मनुत् ।
कासश्वासक्षयहरं विषमज्वरनाशनम् ॥ २१२ ॥
रजःशूलं रक्तगुल्मं श्वेतप्रदरमुल्वणम् ।
मधुमेहं तथा हिक्कां विशेषेण विनाशयेत् ॥ २१३ ॥

मृतखर्परसत्वस्य मात्रादिनिरूपणम्

मृतखर्परसत्वस्य मात्रा यशदवन्मता ।
आमयेषु च सर्वत्र प्रयोगश्चापि तादृशः ॥ २१४ ॥

### अथ कान्तपाषाणस्य नामानि

कान्तपाषाणकः ख्यातः चुम्बको लोहकर्षकः ।
कान्तोपलः कान्तदृषत् स एव परिकीर्तितः ॥ २१५ ॥

कान्तपाषाणस्य शोधनम्

चूर्णितं कान्तपाषाणं निम्बूकद्रवसंयुतम् ।
शोभाञ्जनरसेनैव दोलायन्त्रगतं पचेत् ॥ २१६ ॥
चतुर्याम पचेद्धीमान् सततं प्रखराग्निना ।
एवं नातिचिरादेव शुद्धिमायात्यनुत्तमाम् ॥ २१७ ॥

द्वितीयः शोधनप्रकारः

चूर्णितं कान्तपाषाणमगस्त्यद्रवभावितम् ।
स्वेदितं तु वराक्वाथे शुद्धिमायात्यनुत्तमाम् ॥ २१८ ॥

कान्तपाषाणस्य मारणप्रकारः

विशुद्धं कान्तपाषाणं गोमूत्रेण विमर्दयेत् ।
त्रिफलाक्वथितेनापि विमर्द्य कृतचक्रिकम् ॥ २१९ ॥
सम्पुटस्थं पुटेद्धीमान् सप्तवारं प्रयत्नतः ।
एवन्तु कान्तपाषाणो म्रियते नात्र संशयः ॥ २२० ॥

मृतकान्तपाषाणस्य गुणाः

सुमृतः कान्तपाषाणः शिशिरो बृंहणस्तथा ।
बल्यो वृष्यस्तथा स्वच्यो मूर्च्छामोहक्लमार्दनः ॥ २२१ ॥
ज्वरघ्नश्च विषघ्नश्च तथा वार्द्धक्यनाशनः ।
रक्तसञ्जननः कामं हृद्वेपननिषूदनः ॥ २२२ ॥
रजोदोषं शुक्रदोषं रक्तपित्तं सुदारुणम् ।
हन्त्य कण्डूं कामलाञ्च क्षयं पित्तं त्वगाश्रितम् ॥ २२३ ॥

कास श्वास महाघोर प्रमेह च्चाचिरोत्थितम् ।
विनाशयेद्विशेषेण न सन्देहोऽत्र कश्चन ॥ २२४ ॥

अस्य मात्रा

कान्तपाषाणकस्येह रक्तिकाद्वितयोन्मिता ।
पूर्णमात्रा मता निर्जरैदापनयनक्षमा ॥ २२५ ॥

कान्तपाषाणस्य प्रयोग

कान्तपाषाणक' काम लोहवद्गुणकारकः ।
आमयेषु च सर्वेषु प्रयोगश्चापि तादृश' ॥ २२६ ॥

## अथ कासीसस्य नामानि

काशीशखेचर कासीस पुष्पकासीसकन्तथा ।
पाशुक पांशुकासीस खगाख्यश्च प्रकीर्तितम् ॥ २२७ ॥

कासीसस्य द्वौ भेदा

चूर्णकासीसकश्चैव पुष्पकासीसकन्तथा ।
कासीस द्विविध स्यात रसतन्त्रप्रणेतृभिः ॥ २२८ ॥

अनयो स्वरूपम्

चूर्णकासीसक श्वेतमीषत्पीतञ्च कीर्तितम् ।
पुष्पकासीसक स्वच्छहरिद्वर्णं प्रकीर्तितम् ॥ २२९ ॥

कासीसस्य शोधनम्

कासीस भृङ्गराजोत्थवारिणा घटिकात्रयम् ।
सकृत् स्विन्न प्रयत्नेन शुद्धिमायात्यनुत्तमाम् ॥ २३० ॥

कासीसस्य गुणा

कासीस तुवर ग्राहि विपाकोष्णन्तु शीतलम् ।
श्वित्रघ्न नेत्र्यमतुल विषघ्न कचरञ्जनम् ॥ २३१ ॥
वातश्लेष्मामयहर मूत्रकृच्छ्रव्रणापहम् ।
कण्डूपाण्डुक्रिमिघ्नञ्च रक्तसञ्जनन परम् ॥ २३२ ॥
रज प्रवर्तक नल्य ज्वरघ्न प्लीहनाशनम् ।

बाह्यप्रयोगे विज्ञेयं सङ्कोचनकर परम् ॥ २३३ ॥

कासीसस्य निर्माणप्रकार

विशुद्ध लोहचूर्णन्तु काचपात्रे निधापयेत् ।
सजल गन्धकद्रावं शनैस्तस्मिन् विनिक्षिपेत् ॥ २३४ ॥
तावन्त द्रावक दद्याद्यावता द्रुतिमाप्नुयात् ।
क्षणेनैवोष्णता याति फेनश्चोत्तिष्ठते परम् ॥ २३५ ॥
तत॰ सारकपत्रेण सारयेद् रसकोविदः ।
मल सारकपत्रस्थ हित्वा द्रवमिहाहरेत् ॥ २३६ ॥
द्रवोन्मिता क्षिपेत्तीव्रा निर्जला विमला सुराम् ।
सुरानिक्षेपणाद् याति कासीस तु तलस्थताम् ॥ २३७ ॥
ततो द्रवमिम हित्वा चूर्णं घर्मे निधापयेत् ।
भानुभानुविशुष्कन्तु कासीसं जायतेऽमलम् ॥ २३८ ॥
द्विभागिकन्तु कासीस सलिले तु त्रिभागिके ।
निक्षिप्त द्रवता यातीत्याहु रसविशारदाः ॥ २३९ ॥

कासीसद्रवस्य निर्माणप्रकार

सार्द्धद्वितोलकमिते सलिले तु परिस्रुते ।
पञ्चगुञ्जोन्मित शुद्ध कासीस निक्षिपेद्बुधः ॥ २४० ॥
विद्रुते जायते शीघ्र कासीसद्रव उत्तम॰ ।
गुदभ्रशविसर्पादिविविधामयनाशन॰ ॥ २४१ ॥

कासीसस्य मात्रानिरूपणम्

गुञ्जार्द्धत समारभ्य रक्तिकाद्वितयोन्मिता ।
कासीसकस्य कथिता पूर्णमात्रा भिषग्वरैः ॥ २४२ ॥

कासीसस्य आमयिक प्रयोग

प्लीहशत्रुसहासारयुत कासीसमुत्तमम् ।
निषेवित निहन्त्याशु प्लीहानमतिदारुणम् ॥ २४३ ॥

सौभाग्यकन्यकासारयुतं तु परिशीलितम् ।
कासीसं विनिहन्त्याशु रजोरोधभवां रुजम् ॥ २४४ ॥
खगो दारुसिताकन्यासारोत्थरजसान्वितः ।
शीलितो हन्ति रक्ताल्पजातां हृद्वेपनव्यथाम् ॥ २४५ ॥
कासीसद्रवसंसिक्तवसनाच्छादितो भृशम् ।
विसर्पशोथः प्रशमं याति नास्ति हि संशयः ॥ २४६ ॥
कासीसं त्रिफलायुक्तं वारिणा परिपेषितम् ।
विलिप्तं व्रणशोथानां सवर्णकरणं परम् ॥ २४७ ॥
खगः सुराष्ट्रजाहिङ्गुसुरदारुयुतोऽम्भसा ।
न्यस्तः सद्वृत्तगुटिको दन्ते कृमिगदापहः ॥ २४८ ॥
एरण्डनिम्बबीजाढ्यं कासीसं सरसाञ्जनम् ।
निषेवितं हरत्याशु विसर्पमचिरोत्थितम् ॥ २४९ ॥
कासीसं रक्तिकैकन्तु कपित्थफलमज्जया ।
शीलितं नाशयत्येव हिक्कामिह समुत्थिताम् ॥ २५० ॥
सर्जिकाक्षारसंयुक्तं कासीसं परिशीलितम् ।
मासमात्रप्रयोगेण रक्तसञ्जननं परम् ॥ २५१ ॥
धत्तूरगुञ्जाबीजाढ्यः खगस्तु परिलेपितः ।
मासद्वयप्रयोगेण श्वित्रं हन्ति चिरोत्थितम् ॥ २५२ ॥
बाकुचीबीजरजसा खगः खलु सगैरिकः ।
मासद्वयं प्रलेपेन श्वित्रं हन्यात् सुदारुणम् ॥ २५३ ॥
कासीसस्य द्रवो बस्तियोगेन विनियोजितः ।
विनिहन्ति गुदभ्रंशमर्शांसि च विशेषतः ॥ २५४ ॥

इति उपधात्वादिविज्ञानीयो नाम एकविंशस्तरङ्गः

---

# अथ मिश्रलोहादिविज्ञानीयो द्वाविंशस्तरङ्गः

## अथ पित्तलस्य नामानि

पित्तल पीतलोहञ्च कपिलोहञ्च रीतिका ।
आर तथारकूटञ्च तदेव परिकीर्तितम् ॥ १ ॥

### पित्तलस्य निर्माणप्रकार

द्विभागिक सूर्यलोह विधिना परिशोधितम् ।
भागैकिक च यशद विमल तु समाहरेत् ॥ २ ॥
निधाय गारमूषाया प्रधमेत् प्रखराग्निना ।
द्रवीभूत ततो ज्ञात्वा ढालयेद्रसकोविदः ॥ ३ ॥
रीत्याऽनया विशेषेण पित्तल खलु निर्मितम् ।
भस्मीकृत्य प्रयुञ्जीत रसेषु रसकर्मवित् ॥ ४ ॥

### ग्राह्यपित्तलस्य स्वरूपम्

प्रखरानलसतप्त काञ्जिके परिषेचितम् ।
ताम्रप्रभ भवेद्यत्तु जात्य तत्पित्तल मतम् ॥ ५ ॥

### हेयपित्तलस्य स्वरूपम्

तप्त यत्पित्तल वह्नौ निषिक्त गृहवारिणि ।
लोहप्रभ भवेत्काम तद्धेयमिह कीर्तितम् ॥ ६ ॥

### पित्तलशोधनस्य प्रथम प्रकार

प्रतनूनि च पत्राणि पैत्तलानि समाहरेत् ।
स्थाल्या वङ्गप्रलिप्ताया न्यस्य गोमूत्रसयुतम् ॥ ७ ॥
प्रखरानलयोगेन पचेद्यामचतुष्टयम् ।
पित्तल पक्वमेवन्तु शुद्धिमायात्यनुत्तमाम् ॥ ८ ॥

### द्वितीय शोधनप्रकार

तनुपत्रीकृत तप्त रजनीरजसा युते ।
क्षिप्त निर्गुण्डिकातोये पित्तल शुद्धिमाप्नुयात् ॥ ९ ॥

अथ पित्तलमारणस्य प्रथम प्रकार

सूक्ष्मपत्रीकृत शोधित पित्तल
तुल्यगन्धान्वित खल्वयन्त्रे न्यसेत् ।
पेपयेद्भास्करक्षीरसयोजित
शोपितञ्चातपे सम्पुटे विन्यसेत् ॥ १० ॥
लेपित मृत्स्नया पङ्कपिण्डाभया,
त्वग्निनार पुटेद्वारणाख्ये पुटे ।
मारित पित्तल त्वत्र रीत्यानया
जायते सुन्दर कज्जलाभ परम् ॥ ११ ॥

द्वितीयो मारणप्रकार

तनुपत्रीकृत शुद्ध पित्तल पलपञ्चकम् ।
समहिङ्गुलतालाभ्या मर्दित कन्यकाम्भसा ॥ १२ ॥
सम्पुटस्थ तत' कृत्वा वारणाख्ये पुटे पुटेत् ।
त्रिधैन पुटित यत्नात् पित्तल याति पञ्चताम् ॥ १३ ॥
कज्जलाभ भवेद्भस्म रमणीयतर शुभम् ।
इत्थ मृत पित्तल तु भवेद् भ्रान्त्यादिवर्जितम् ॥ १४ ॥

तृतीयो मारणप्रकार

पत्रीकृत पित्तल तु समगन्धशिलान्वितम् ।
कन्यानीरेण सम्पिष्ट शोपित सम्पुटे न्यसेत् ॥ १५ ॥
त्रिगार पुटयेदेव भस्म स्यात्कज्जलप्रभम् ।
एव मृत पित्तल तु वीतशङ्कः प्रयोजयेत् ॥ १६ ॥

मृतपित्तलस्य गुणा

सुमृत पित्तल रूक्ष तिक्त नातिविलेखनम् ।
कृमिघ्न कुष्ठशमन पाण्ड्वामयविनाशनम् ॥ १७ ॥

पित्तलस्य प्रयोगमात्रानिरूपणम्

पित्तलस्य प्रयोगस्तु रीतिलोहसमो मत' ।

गुञ्जार्धतस्तु गुञ्जैकमिता मात्रा च युज्यते ॥ १८ ॥

पित्तलरसायनम्

पित्तलं कान्तकं व्योमसत्त्वं मृतं
कीटविद्वेषणं त्र्यूषणं तुल्यकम् ।
होमधान्याजमोदाग्निभल्लातक-
ब्रह्मबीजोद्भवक्षोदसंयोजितम् ॥ १९ ॥
रक्तिकार्द्धोन्मितं मासमासेवितं
नाशयेद् दारुणां श्वेतकुष्ठव्यथाम् ।
वह्निसन्दीपनं स्वामयम्पाचनं
शूलनिर्मूलनं कीटकोत्सादनम् ॥ २० ॥

अथ कांस्यस्य नामानि

कंसीयं कांस्यकं कांस्यं घोषपुष्पञ्च घोषकम् ।
घोषो घोषं वह्निलोहं तदेव परिकीर्तितम् ॥ २१ ॥

कांस्यस्य निर्माणप्रकार

रविलोहं वेदभागमितं विधिविशोधितम् ।
भागिकं विमलं वङ्गं गाढं मूषागतं धमेत् ॥ २२ ॥
विद्रुतं जायते रम्यं वरघोषं तु कांस्यकम् ।
एवं विनिर्मितं कांस्यं मारणाय प्रयोजयेत् ॥ २३

ग्राह्यकांस्यस्य स्वरूपम्

सुनादं भास्वरं स्निग्धं श्वेतं मृदु च निर्मलम् ।
घनाग्निसहमत्यन्तं कांस्यं ग्राह्यमिहोच्यते ॥ २४

हेयकांस्यस्य स्वरूपम्

निरुज्ज्वलं खरं रूक्षं पीतं दहनतापितम् ।
आताम्रं मन्दनादञ्च कांस्यं हेयमुदीरितम् ॥ २५

कांस्यशोधनस्य प्रथमः प्रकार

तनुपत्रीकृतं कांस्यं वह्निसन्तापितं भृशम् ।

निर्वापित गन्धमूत्रे सप्तधा शुद्धिमाप्नुयात् ॥ २६ ॥

द्वितीय शोधनप्रकार

सूक्ष्मपत्रीकृत घोषपुष्पाह्वय
मूत्रपदन्वित स्थालिकाया न्यसेत् ।
याममम्पाचित तीक्ष्णतीक्ष्णाग्निना
सर्वदोषोज्झित जायते सत्वरम् ॥ २७ ॥

कास्यमारणस्य प्रथम प्रकार

तनुपत्रीकृत कास्य समगन्धसमन्वितम् ।
अर्कक्षीरेण सम्पेष्य शोषयेदातपे दृढम् ॥ २८ ॥
सम्पुटस्य तत कृत्वा वाराणये पुटे पुटेत् ।
एव पुटत्रयात्कास्यभस्म स्यात्सुमनोहरम् ॥ २९ ॥

द्वितीयो मारणप्रकार

तुल्यरक्तान्वित निम्बुकस्याम्भसा
सूक्ष्मपत्रीकृत कास्यक पेषयेत् ।
शोषित त्रि पुटेत् सम्पुटस्थ ततो
घोषपुष्प तदा पञ्चता यात्यलम् ॥ ३० ॥

तृतीयो मारणप्रकार

कास्य तुल्यशिलागन्धयुत कन्याम्बुपेषितम् ।
पुटेत् त्रिर्धत्र यत्नेन भस्म स्यात् कज्जलप्रभम् ॥ ३१ ॥

मृतकास्यस्य गुणा

घोषपुष्प तु तुवर तिक्तोष्ण लेखने हितम् ।
नेत्रप्रसादन रूक्ष सर च विशद परम् ॥ ३२ ॥
कृमिघ्न कुष्ठशमन कफपित्तप्रणाशनम् ।
वातघ्न दीपनञ्चैव परमेतत्प्रकीर्तितम् ॥ ३३ ॥

मृतकास्यस्य प्रयोगादय

कास्यकस्य प्रयोगस्तु रविलोहसमो मत । 

गुञ्जार्द्धतश्च गुञ्जैकमिता मात्रा प्रयुज्यते ॥ ३४ ॥

### अथ अञ्जनस्य नामानि

अञ्जन तु समाख्यातं मेचक लोचकं तथा ।

अञ्जनस्य द्वौ भेदौ

अञ्जन द्विविधं ज्ञेयं स्रोतोजञ्च सुवीरजम् ॥ ३५ ॥

तत्र स्रोतोऽञ्जनस्य नामानि

स्रोतोऽञ्जन तु स्रोतोज यामुनेयञ्च यामुनम् ।
नीलाञ्जन तदेवोक्त कपोताञ्जनकाह्वयम् ॥ ३६ ॥

सौवीराञ्जनस्य नामानि

सौवीराञ्जनक ख्यात सौवीर तु सुवीरजम् ।
कृष्णाञ्जन तथा कालाञ्जनञ्चापि प्रकीर्तितम् ॥ ३७ ॥

स्रोतोऽञ्जनस्य स्वरूपम्

भगे नीलोत्पलनिभ घर्षणे गैरिकप्रभम् ।
वल्मीकशीर्षप्रतिम मत स्रोतोऽञ्जन बुधैः ॥ ३८ ॥

सौवीराञ्जनस्य स्वरूपम

बाह्यत' खलु धूमाभ भगे त्वतिसमुज्ज्वलम् ।
घर्षे खलु मषीवर्णं सौवीराञ्जनमुच्यते ॥ ३९ ॥

स्रोतोऽञ्जनसौवीराञ्जनयो शोधनम्

अञ्जनद्वितय यत्नात्पेपित त्रिफलाम्भसा ।
दिनसप्तकमात्रेण विशुध्यति न सशयः ॥ ४० ॥

द्वितीय शोधनप्रकार

भृङ्गराजरसेनेह पेपित त्वञ्जनद्वयम् ।
दिनसप्तकमात्रेण शुद्धिमायात्यनुत्तमाम् ॥ ४१ ॥

तृतीय शोधनप्रकार

फलत्रिकनिशायुग्मभृङ्गराजरसे भृशम् ।
अञ्जनद्वितय स्विन्न यामाच्छुद्धिमवाप्नुयात् ॥ ४२ ॥

स्रोतोऽञ्जनस्य गुणाः

स्रोतोऽञ्जनं तु शिशिरं तुवरं लेखनं परम् ।
स्निग्धं स्वादु परं ग्राहि कफपित्तविषापहम् ॥ ४३ ॥
रक्तपित्तक्षयहरं नेत्रामयनिषूदनम् ।
हिक्काच्छर्दिप्रशमनं नेत्रामयहरं परम् ॥ ४४ ॥

सौवीराञ्जनस्य गुणाः

सौवीरमञ्जनं ग्राहि स्निग्धश्च तुहिनोपमम् ।
रक्तपित्तप्रशमनं नेत्रामयहरं परम् ॥ ४५ ॥
विषहिक्कापहं कामं व्रणशोधनरोपणम् ।
परं रजोरोधकरं रक्तप्रदरनाशनम् ॥ ४६ ॥

आभ्यन्तरप्रयोगे स्रोतःसौवीराञ्जनयोः मात्रा

गुञ्जार्धतः समारभ्य गुञ्जैकमितमञ्जनम् ।
दिनद्वयं त्रयं वापि प्रयुञ्जीत भिषग्वरः ॥ ४७ ॥
अञ्जनद्वितयं रक्तप्रदरे तु दिनत्रयात् ।
अधिकं नोपयुञ्जीत रसतन्त्रविशारदः ॥ ४८ ॥

अथ पुष्पाञ्जनस्य परिचयः

रीतिकाद्राणविधौ रीतिस्थं यशदं द्रुतम् ।
समेत्यम्बरपीयूषयोगेन सितचूर्णताम् ॥ ४९ ॥
तदेनं सितचूर्णन्तु पुष्पाञ्जनमुदीरितम् ।
भस्त्राध्मातं पुष्पितं तु यशदं वा तदाह्वयम् ॥ ५० ॥

पुष्पाञ्जनस्य गुणाः

पुष्पाञ्जनं तु शिशिरं स्निग्धं पित्तप्रणाशनम् ।
अभिष्यन्दप्रशमनं परं दाहविनाशनम् ॥ ५१ ॥
विचर्चिकादित्वग्दोषशमनं व्रणरोपणम् ।
समाख्यातं विशेषेण हिक्कापश्चकनाशनम् ॥ ५२ ॥

अञ्जनद्वितयस्य बाह्यप्रयोग

अञ्जनद्वितय पुष्पाञ्जनेन सहित तु वा ।
यशदेनाग्निदग्धेन ह्यभिष्यन्दहर परम् ॥ ५३ ॥

तिमिरहराञ्जनम्

तोलकैकमित सीसं विशुद्ध दर्विकागतम् ।
दसन्तिकाया विन्यस्य गालयेत्प्रखराग्निना ॥ ५४ ॥
सीसोन्मित सुनिर्मल सूत सीसे तु विद्रुते ।
निक्षिप्य द्रुतमादाय खल्वे सम्पेषयेद् दृढम् ॥ ५५ ॥
श्लक्ष्णचूर्ण ततो ज्ञात्वा द्वयोर्द्विगुणमञ्जनम् ।
सौवीर विमल दत्त्वा पेषयेद्दिनसप्तकम् ॥ ५६ ॥
मापकत्रितय चन्द्र दत्त्वाथ परिपेषयेत् ।
कुप्या न्यसेन्मतमिद तिमिरापहमञ्जनम् ॥ ५७ ॥

तुहिनाञ्जनम्

तारक तोलकार्द्धन्तु घनसारञ्च तन्मितम् ।
मलैक खलु सौवीर दत्त्वा सम्पेषयेद् भृशम् ॥ ५८ ॥
निदध्यात्काचकुप्यान्तु नाम्नेद तुहिनाञ्जनम् ।
कण्ड्दाहपरिस्रावहर परमुदीरितम् ॥ ५९ ॥

## अथ शिलाजतुनामानि

शिलाजतु च शैलेय शिलाज शैलधातुजम् ।
शिलामय शिलास्वेदः शिलानिर्यास इत्यपि ॥ ६० ॥
अश्मज त्वश्मजतुक गिरिज त्वद्रिज तथा ।
अश्मोत्थमश्मलाक्षा च गैरेयञ्च गतन्तु तत् ॥ ६१ ॥

शिलाजतुपरिचय

सूर्यसन्तापसन्तप्ताः शिलाः शैलाधिपस्य यत् ।
गाढ मुञ्चन्ति निर्यास तच्छिलाजतु कीर्तितम् ॥ ६२ ॥
शैलाधिपशिलासारो निर्गतो रवितापत ।

शुष्कः सम्मूर्ततां यातः शिलाजतु निगद्यते ॥ ६३ ॥

शिलाजतुभेदा

सौवर्णं राजतं ताम्रं लौहञ्चेति विभेदतः ।
शिलाजतु समाख्यातं भिषग्भिस्तु चतुर्विधम् ॥ ६४ ॥

तेषां रूपाणि

शिशिरं मधुरं तिक्तं कटुकं कटुपाकि च ।
जपाकुसुमसङ्काशं सौवर्णं शैलधातुजम् ॥ ६५ ॥
शिशिरं पाण्डुरं तिक्तं स्वादुपाकि च राजतम् ।
तिक्तोष्णतीक्ष्णं नीलाभं ताम्रं गिरिजमीरितम् ॥ ६६ ॥
तिक्तं सलवणं कृष्णं विपाके कटुशीतलम् ।
गुरु स्निग्धं कषायञ्च सर्वश्रेष्ठं तदायसम् ॥ ६७ ॥
सौवर्णं वातपित्तघ्नं राजतं श्लेष्मपित्तहृत् ।
कफघ्नं ताम्रजं ज्ञेयं त्रिदोषहरमायसम् ॥ ६८ ॥

शिलाजतुनः शोधनम्

[ गीतिका ]

विगताम्बुदे निवाते धरणीतलप्रदेशे ।
प्रखरे निदाघकाले प्रणयेच्छिलाजशुद्धिम् ॥ ६९ ॥
विमलानि भाजनानि त्वयसा विनिर्मितानि ।
युगसमितानि तीव्रे निदधीत सूर्यतापे ॥ ७० ॥
सुविचूर्णितं शिलाजं विनिधाय पात्रमध्ये ।
द्विगुणं प्रतप्तनीरं त्रिफलाकषायमर्द्धम् ॥ ७१ ॥
गिरिजे प्रदाय यामं निदधीत तीव्रतापे ।
कामं विमर्द्य गिरिजं विदधीत वस्त्रपूतम् ॥ ७२ ॥
विनिधाय पूर्वपात्रे निदधीत तीव्रतापे ।
अथ तीव्रतापयोगाद्विमलं सरप्रकाशम् ॥ ७३ ॥

मृदुल प्रगाढकृष्णं यदुपैति नीरपृष्ठे ।
निदधीत सोष्णतोये खलु भाजनेऽपरस्मिन् ॥ ७४ ॥
अथ वै द्वितीयपात्रात् खलु भाजने तृतीये ।
अथ भाजनात्तृतीयात् निदधीत तुर्यपात्रे ॥ ७५ ॥
सलिलं तु यावदच्छं न भवेत्तु तावदेवम् ।
विदधीत वैद्यवर्यः सततं कृतावधानः ॥ ७६ ॥
सलिलं भवेद्यदाच्छं मलमेत्यधःप्रदेशे ।
सलिलोर्ध्वभागसंस्थं गिरिज हरेद्विशुद्धम् ॥ ७७ ॥
विधिना ह्यनेन शुद्धिं तदुपैति निर्विशेषाम् ।
गिरिजं विशुद्धमेवं विनियोजयेद्विशङ्कः ॥ ७८ ॥

प्रक्षेपक्वाथमानम्

शिलाजतुसमं क्वाथ्यं जलमष्टगुणं ततः ।
पादांशशेषितः क्वाथः शिलामयविशुद्धये ॥ ७९ ॥

द्वितीयं शोधनप्रकारः

निरुक्तेनैव विधिना क्वाथस्थाने तु गोजलम् ।
दत्त्वाहृता शिलालाक्षा शुद्धिमायात्यसंशयम् ॥ ८० ॥

तृतीयः शोधनप्रकारः

पूर्वोक्तेनैव मार्गेण क्वाथे भृङ्गोत्थितं रसम् ।
दत्त्वाहृतं शिलास्वेदं परां शुद्धिमवाप्नुयात् ॥ ८१ ॥

विशुद्धशिलाजतुनः परीक्षणम्

याङ्गारसंस्था निर्धूमा पक्वा लिङ्गोपमा भवेत् ।
आस्वादे कटुतिक्ता च शिलालाक्षा तु सामला ॥ ८२ ॥

अपरं परीक्षणम्

सलिले या विनिक्षिप्ता तन्तुप्रसवकारिणी ।
आस्वादे कटुतिक्ता च शिलालाक्षा तु सामला ॥ ८३ ॥

शिलामयस्य गुणाः

शिलाजतु मतं तिक्तं विपाके कटुकं तथा ।
मूत्रलश्च विशेषेण योगवाहि रसायनम् ॥ ८४ ॥

अपि च

शिलास्वेदो बल्यः श्वयथुशमनः पाण्डुहरणः
क्षयश्वासप्लीहज्वरदहनमान्द्यापहरणः ।
अपस्मारोन्मादोदरगुदजकृच्छ्रप्रशमनः
समीरस्थौल्योरःक्षतहृदयशूलैकदलनः ॥ ८५ ॥
प्रमेहकरिकेशरी प्रबलशूलकालानलः
कृमिप्रशमनः परः सुविततारमरीशैलभित् ।
सकुष्ठवमिगुल्मजित् प्रबलवातरक्तप्रणुत्
स्मृतो रसविशारदैः खलु शिलामयो निर्मलः ॥ ८६ ॥

शिलाजतुनो मात्रा

द्विगुञ्जतः समारभ्य वसुगुञ्जमितं परम् ।
शिलामयं प्रयुञ्जीत बलकालाद्यपेक्षया ॥ ८७ ॥

शिलामयस्य आमयिकः प्रयोगः

शिलाजतु क्षौद्रयुतं शीलितं तु द्विगुञ्जकम् ।
शुक्रबन्धमपुद्धृत्य मूत्रकृच्छ्रं निवारयेत् ॥ ८८ ॥
दशमूलकषायेण शिलाजतु सितायुतम् ।
अष्ठीलिकां वातबस्तिं वातकुण्डलिकां हरेत् ॥ ८९ ॥
वरुणादिकषायेण शीलितस्तु शिलामयः ।
विनिहन्त्यचिरादेव मूत्राघातमथाश्मरीम् ॥ ९० ॥
अमृतादिकषायेण शीलितं तु शिलाजतु ।
मूत्राघातं मूत्रकृच्छ्रं नाशयत्यविलम्बितम् ॥ ९१ ॥
ससितं च सकर्पूरं शैलेयं परिशीलितम् ।
मूत्रातीतं तथा मूत्रजठरश्च विनाशयेत् ॥ ९२ ॥

गोक्षुरकाथसंयुक्ता शिलालाक्षा तु शीलिता ।
मूत्रकृच्छ्राण्यशेषाणि नाशयेदतिसत्वरम् ॥ ९३ ॥
काकोल्यादिगणोद्दिष्टभेषजैः सह शीलितं ।
शिलामयो वराशुद्धो वीर्यवृद्धिकरः परम् ॥ ९४ ॥
लोहताप्यघृतक्षौद्राभयाजन्तुघ्नसंयुता ।
शीलिता तु शिलालाक्षा यक्ष्माणमिह नाशयेत् ॥ ९५ ॥
वीरतर्वादिकगणभेषजकाथसंयुतम् ।
गिरिजं शीलितं हन्ति मूत्रकृच्छ्रादिकान् गदान् ॥ ९६ ॥
सिताक्षीरयुतं प्रातः शीलितं तु शिलाजतु ।
विनिहन्ति विशेषेण प्रमेहजनितां व्यथाम् ॥ ९७ ॥
शिलाजतु सगोमूत्रं पुरनिश्वकणायुतम् ।
ऊरुस्तम्भं महाघोरं नाशयत्यविलम्बितम् ॥ ९८ ॥
लोहभस्मयुतं नित्यं शिलाजतु समाक्षिकम् ।
शीलितं तु विशेषेण रक्तसञ्जननं परम् ॥ ९९ ॥
अर्जुनकाथसंयुक्तं शिलाजतु निषेवितम् ।
मासमात्रप्रयोगेण विनिहन्ति हृदामयम् ॥ १०० ॥
अग्निमन्थरसोपेतं शिलाजतु निषेवितम् ।
मासद्वयप्रयोगेण स्थौल्यं नाशयति ध्रुवम् ॥ १०१ ॥
शालसारादितोयेन शैलेयं परिभावितम् ।
तेनैव च कषायेण द्विमासं परिशीलितम् ॥ १०२ ॥
विनाशयेच्चिरोद्भूतं मधुमेहं विशेषतः ।
तथैव नाशयत्याशु त्वश्मरीं मूत्रशर्कराम् ॥ १०३ ॥
कणापाषाणभेदैलासंयुतस्तण्डुलाम्भसा ।
शिलामयः शीलितस्तु प्रमेहं विनिवारयेत् ॥ १०४ ॥
एलामागधिकायुक्ता शिलालाक्षा तु शीलिता ।

मूत्राघात मूत्रकृच्छ्र नाशयत्यविकल्पतः ॥ १०५ ॥
शिलामय. शिलाघृष्टः सचन्द्रः परिपूरणात ।
क्षत सद्योऽभिघातोत्थ विनापाक प्ररोपयेत् ॥ १०६ ॥
रजनीरजसोपेता शिलालाक्षा तु शीलिता ।
गोमूत्रेण समाख्याता कुम्भकामलिना हिता ॥ १०७ ॥
लोहकाञ्चनभस्माढ्य' मर्ज्जकद्रवभावितः ।
शिलामयो गुञ्जमित. सतत परिशीलितः ॥ १०८ ॥
मसूरिकाज्वर स्फोट शोणकायज्वर तथा ।
नाशयत्यचिरादेव वृक्षमिन्द्राशनिर्यथा ॥ १०९ ॥

## अथ गैरिकस्य नामानि

गैरिक त्वथ गैरेय गिरिमृद् गिरिमृत्तिका ।
रक्तधातुर्लोहधातुस्तदेव गिरिमृद्भवम् ॥ ११० ॥

### गैरिकस्य द्वैविध्यम्

गैरिक तु समाख्यात द्विविध रसकोविदै' ।
पाषाणगैरिक त्वाद्य द्वितीय स्वर्णगैरिकम् ॥ १११ ॥

### तयो स्वरूपम्

सुवर्णगैरिक स्निग्ध मसृण त्वतिकोमलम् ।
पाषाणगैरिक रूक्ष कठिन नातिलोहितम् ॥ ११२ ॥
पाषाणगैरिकात् श्रेष्ठ कथित स्वर्णगैरिकम् ।
अत सर्वत्र मतिमान् योजयेत्स्वर्णगैरिकम् ॥ ११३ ॥

### गैरिकशोधनस्य प्रथम प्रकार

सुवर्णगैरिक खल्वे चूर्णीकृत्य तत परम् ।
भावित गव्यपयसा शुद्धिमायात्यनुत्तमाम् ॥ ११४ ॥

### द्वितीय शोधनप्रकार

गव्याज्येन तु सम्भृष्ट यत्नतो मन्दवह्निना ।
सुवर्णगैरिक शीघ्र शुद्धिमाप्नोत्यसशयम् ॥ ११५ ॥

शुद्धस्वर्णगैरिकस्य गुणाः

सुवर्णगैरिकं स्निग्धं मधुरं शिशिरं परम् ।
तुवरं तापहरणं हिक्कावमिनिवारणम् ॥ ११६ ॥
रक्तपित्तप्रशमनं तथासृग्दरनाशनम् ।
विषापहं तथा वल्यं मतं लोचनयोर्हितम् ॥ ११७ ॥
उदर्दकण्डूशमनं तथैव व्रणरोपणम् ।
ज्वरघ्नं च विशेषेण वह्निदाहनिबर्हणम् ॥ ११८ ॥

गैरिकस्य मात्रानिरूपणम्

द्विगुञ्जतः समारभ्य चतुर्गुञ्जमितं परम् ।
सुवर्णगैरिकं शुद्धं युञ्जीत भिषजां वरः ॥ ११९ ॥

गैरिकस्य आमयिकः प्रयोगः

निशाघ्नीजजन्तुघ्नसोमवल्करसाञ्जनैः ।
गैरिकं वारिणा लेपात् योनिकण्डूयनं हरेत् ॥ १२० ॥
सिन्धूत्थयष्टीनिशया गैरिकं परिशीलितम् ।
विनाशयेद्विशेषेण ह्यभिष्यन्दभवां रुजम् ॥ १२१ ॥
नागरारग्वधखदीरकट्फलेन सकाञ्जिकम् ।
कर्णमूलोत्थितं शोथं हन्ति लिप्तं तु गैरिकम् ॥ १२२ ॥
सुवर्णगैरिकं गुञ्जाद्वयं मधुसमन्वितम् ।
भक्षितं विनिहन्त्याशु शीतपित्ताह्वयं गदम् ॥ १२३ ॥
सुवर्णगैरिकं शुद्धं निशया परिलेपितम् ।
शीतपित्तं तथोदर्दं नाशयत्यविकल्पतः ॥ १२४ ॥
गैरिकं चन्दनोशीरधान्यकक्वाथसंयुतम् ।
एलया सितया वापि रक्तपित्तं विनाशयेत् ॥ १२५ ॥
मालतीकलिकालाक्षारक्तचन्दनसंयुतम् ।
सुवर्णगैरिकं हन्ति व्रणशुक्रं नवोत्थितम् ॥ १२६ ॥

सुवर्णगैरिकं शुद्धं केवलं वा रसान्वितम् ।
घृतेन लिप्तं हन्त्याशु विसर्पस्य विसर्पिताम् ॥ १२७ ॥
नारिकेलस्य तैलेन विमलं स्वर्णगैरिकम् ।
प्रलिप्तं नाशयेत्पीडां वह्निदग्धव्रणोत्थिताम् ॥ १२८ ॥
रससिन्दूरसंयुक्तं विमलं स्वर्णगैरिकम् ।
शीलितं नाशयेत्तूर्णं जीर्णं वा पैत्तिकं ज्वरम् ॥ १२९ ॥

गैरिकाद्यमलहर

सुवर्णगैरिकं शुद्धं तोलकैकमितं शुभम् ।
तन्मिता रजनीश्चैव माषकं मालसूपणम् ॥ १३० ॥
सिक्थतैलं च विमलं कर्षत्रितयसम्मितम् ।
सम्पेष्य खलु यत्नेन काचकूप्यां तु विन्यसेत् ॥ १३१ ॥
गैरिकाद्यो मलहरो नामतः परिकीर्तितः ।
कण्डूदाहप्रशमनो विविधव्रणरोपणः ॥ १३२ ॥

इति मिश्रलोहादिविज्ञानीयो नाम द्वाविंशस्तरङ्गः

---

## अथ रत्नविज्ञानीयस्त्रयोविंशस्तरङ्गः

रत्नपदनिर्वचनम्

रमणीयतर यस्माद्रमन्तेऽस्मिन्नतीव वा ।
तस्माद्रत्नमिदं स्यात शब्दशास्त्रविशारदैः ॥ १ ॥

नवमहारत्नानि

हीरक त्वथ माणिक्य मौक्तिक पुष्परागकम् ।
नील तार्क्ष्यञ्च वैदूर्यं गोमेदं विद्रुम तथा ॥ २ ॥
एतानीह महारत्नान्याख्यातानि नवानि तु ।

नवग्रहाणा रत्नानि

माणिक्य मौक्तिक चैव विद्रुम तार्क्ष्यसज्ञकम् ॥ ३ ॥
पुष्परागं पविर्नीलं गोमेद च विदूरजम् ।
नवग्रहाणा क्रमशो रत्नानि परिलक्षयेत् ॥ ४ ॥

### अथ हीरकस्य नामानि

हीरको हीरक हीरमभेद्य भिदुर तथा ।
कुलिश वज्रक वज्र तथोक्त भार्गवप्रियम् ॥ ५ ॥

जात्यहीरकस्य स्वरूपम्

स्निग्ध विद्युद्विभ स्वच्छमलेप्य च निलेपनम् ।
तीक्ष्ण षट्कोणमष्टास्र जात्य हीरकमुच्यते ॥ ६ ॥

हेयहीरकस्य स्वरूपम्

वर्तुल मलिन नील भूत्याभ स्फुटित खरम् ।
सकाकपाद रेखाढ्य हेय हीरकमादिशेत् ॥ ७ ॥

हीरकस्य परीक्षणम्

यन्निकापफलके शिलातले
घृष्यते न हि निकामघर्षितम् ।
लीलयैव दलयत्यथापरान्
तद्वर भिदुरमीरित बुधैः ॥ ८ ॥

अशुद्धहीरकस्य दोषाः

अविशुद्धं मृतं हीरं शीलितं पार्श्ववेदनाम् ।
कुष्ठं तापं भ्रमादींश्च जनयत्यविलम्बितम् ॥ ९ ॥

हीरकशोधनस्य प्रथमः प्रकारः

पोट्टलीमध्यगं भार्गवस्य प्रियं
कोद्रवक्वाथतो दोलिकायन्त्रके ।
सप्तभिर्वासरैः स्वेदितं सततं
याति शुद्धिं परां निश्चितं सत्वरम् ॥ १० ॥

द्वितीयः शोधनप्रकारः

कुलत्थक्वाथसंयुक्तं हीरं दोलाख्ययन्त्रगम् ।
स्विन्नं दिनत्रयं यत्नाद्विशिष्टां शुद्धिमाप्नुयात् ॥ ११ ॥

तृतीयः शोधनप्रकारः

हीरकं परिसन्तप्तं सुधाक्षीरे निषेचितम् ।
शतवारं प्रयत्नेन शुद्धिमाप्नोत्यसंशयम् ॥ १२ ॥

चतुर्थः शोधनप्रकारः

हीरकं परिसन्तप्तं प्रखरानलयोगतः ।
शतधा वापितं मूत्रे शुद्धे शुद्धिमवाप्नुयात् ॥ १३ ॥
एवं निर्वापितं हीरं चूर्णतामेति सत्वरम् ।
अनुभूतः प्रकारोऽयं समाख्यातो महोत्तमः ॥ १४ ॥

हीरकमारणस्य प्रथमः प्रकारः

शोधितं हीरकं यत्नतश्चूर्णितं
तालकं गन्धकं हिङ्गुलं तन्मितम् ।
माक्षिकं मारितञ्चेह हीरोन्मितं
राजकोलद्रवेणेह सम्पेषयेत् ॥ १५ ॥
पिप्पलोत्थद्रवैर्भावयेत्सप्तधा
भावितस्यास्य वै कारयेद् गोलकम् ।

उत्पलस्याग्निना वारणाख्ये पुटे
सम्पुटस्थ ततो पाचयेद्यत्नतः ॥ १६ ॥
हीरक पञ्चता नैति यावद्भृश
तावदेव पुटेद्यत्नत• कोविदः ।
माक्षिक न क्षिपेद्वै द्वितीये पुटे
हीरक पञ्चतामेति सर्वात्मना ॥ १७ ॥

द्वितीयो मारणप्रकार

हीरक निमल खूत मृतन्तु समभागिकम् ।
मन•शिला गन्धकश्च सम दत्त्वा विमर्दयेत् ॥ १८ ॥
सम्पुटस्थ तु पुटयेद् वारणाख्ये पुटे भृशम् ।
तावत्पुटेत्प्रयत्नेन यावन्नायाति पञ्चताम् ॥ १९ ॥
द्वितीयादिपुटेष्वत्र सूत न विनियोजयेत् ।
एव चतुर्दशपुटैर्हीरक म्रियते ध्रुवम् ॥ २० ॥
अनुभूत प्रकारोऽय सुगमस्तु प्रकाशित' ।
एव मृत हीरकन्तु वीतशङ्क' प्रयोजयेत् ॥ २१ ॥

तृतीयो मारणप्रकार

हीरक निमल ताल तथा रोगशिलामला ।
सम सम समादाय खरखल्ने विमर्दयेत् ॥ २२ ॥
त्रिवर्षारूढकार्पासशिफास्वरसयोगत• ।
सम्पेष्य काम यामैकं निदाघे परिशोषयेत् ॥ २३ ॥
निशुष्क सम्पुटे न्यस्य पुटयेत्तु महापुटे ।
एव चतुर्दशपुटैर्हीरक याति पञ्चताम् ॥ २४ ॥

मृतहीरकस्य गुणा

सुमृत हीरक हृद्य परम षड्सान्वितम् ।
योगवाहि मतञ्चैतत्सर्वोत्कृष्ट रसायनम् ॥ २५ ॥

राजयक्ष्मप्रशमनं मेहमेदोविनाशनम् ।
पाण्डुशोथोदरहरं तथा क्लैब्यहरं परम् ॥ २६ ॥
धन्यं महापुण्यमतीव सेव्यं
वल्यं त्रिदोषप्रशमनकारि वर्ण्यम् ।
मेध्यं विशेषादिविधामयघ्नं
सुधोपमं स्यात्सुमृतं तु हीरम् ॥ २७ ॥

मृतहीरकस्य मात्रा

रक्तिकाया नवगुणभागतस्तु कलांशकम् ।
मृतं हीरं प्रयुञ्जीत बलकालाद्यपेक्षया ॥ २८ ॥

हीरकस्य मात्रानिर्माणप्रकारः

रक्तिकैकमितं हीरं रम्ये खल्वे विनिक्षिपेत् ।
मेलयेद्रससिन्दूरं चतुर्माषकममितम् ॥ २९ ॥
सम्पेष्य त्वतियत्नेन रसतन्त्रविचक्षणः ।
गुञ्जैकतः समारभ्य द्विगुञ्जं विनियोजयेत् ॥ ३० ॥

मृतहीरकस्य आमयिकः प्रयोगः

हीरकं रससिन्दूरयुतं सन्तानिकान्वितम् ।
निषेवितं निहन्त्याशु ध्वजभङ्गं सुदारुणम् ॥ ३१ ॥
हीरकं सहिरण्यन्तु रससिन्दूरसंयुतम् ।
विनिहन्त्यचिरादेव राजयक्ष्माणमुल्बणम् ॥ ३२ ॥
मकरध्वजसंयुक्तं हीरकं परिशीलितम् ।
नाशयत्यचिरादेव सर्वान् क्लैब्यान् विशेषतः ॥ ३३ ॥

कन्दर्पकोकिलरसः

सकर्पूरो हीरो हि समरससिन्दूरसहितः
सितैलासंमिश्रः प्रचुररससंयुक्तपयसा ।
निपीतः षण्मासं जनयति सुमिष्टाशनयुतो
नरं नानानारीनिधुवनसमासक्तहृदयम् ॥ ३४ ॥

लावण्येऽमलमौक्तिक रतिपतिं रूपे च सम्मोहने
भीम भोजनभक्षणे खगपतिं दूरात्सदा वीक्षणे ।
सिंहं सहतगात्रताभवमदे बुद्धौ तु वाचस्पतिं
हीरस्येह तु सेवको नरवरः प्रस्पर्द्धते निर्भरम् ॥ ३५ ॥
रसोऽय तु समाख्यातो नाम्ना कन्दर्पकोकिल. ।
सेवितव्य. सदा यत्नाच्छरीरबलवृद्धये ॥ ३६ ॥

अथ हीरकरसायनम्

हीर तार्क्ष्यञ्च माणिक्य पुष्पराग च नीलकम् ।
वैदूर्यमथ गोमेद चन्द्ररत्नञ्च विद्रुमम् ॥ ३७ ॥
भागोत्तरमिद तस्मात्पञ्चगुञ्जोन्मित हरेत् ।
योजयेन्मृतवैक्रान्त तस्मादष्टगुण तत. ॥ ३८ ॥
माक्षिकद्वयज भस्म पृथक् वैक्रान्तसम्भवम् ।
तथा सर्वंत्रिगुणिता समगन्धेशकज्जलीम् ॥ ३९ ॥
पिष्ट्वाजपयसा चैव वन्ध्याकर्कोटकीद्रवै' ।
वन्योत्पलैः कलावार पादायुधपुटे पुटेत् ॥ ४० ॥
भिषग्वरै समाख्यातमेतद्धीररसायनम् ।
गर्भिणीनान्तु नारीणा विविधामयनाशनम् ॥ ४१ ॥
हीराद्य विमल रसायनमिद सन्दीपन पाचन
बल्य मेध्यमल तथैव महिलासौभाग्यसम्वर्द्धनम् ।
योनिव्याधिनिवर्हण खलु नृणा वन्ध्यत्वरोगापह
वन्ध्याना खलु पुनरत्नजनन काकादिसज्ञात्रताम् ॥ ४२ ॥

अथ माणिक्यस्य नामानि

माणिक्य रङ्गमाणिक्य पद्मरागसमाह्वयम् ।
रविरत्न शोणरत्न कुरुविन्द च लोहितम् ॥ ४३ ॥

जात्यमाणिक्यस्वरूपम्

रक्तोत्पलदलच्छाय रम्य दीप्तप्रभं परम् ।

वृत्तायत समाङ्गञ्च माणिक्य जात्यमुच्यते ॥ ४४ ॥

त्याज्यमाणिक्यस्वरूपम्

निच्छाय लघु धूमाभ विरूप कर्कश परम् ।
मलिन चिपिट चक्र माणिक्य त्याज्यमुच्यते ॥ ४५ ॥

माणिक्यशोधनस्य प्रथम प्रकार

निम्बूकस्वरसेनेह दोलायन्त्रे विधानत• ।
यामक स्वेदित काम माणिक्य शुद्धिमाप्नुयात् ॥ ४६ ॥
अम्लवर्गोक्तभैपज्यैर्दोलिकायन्त्रयोगतः ।
विपाचित तु माणिक्य शुद्धिमायात्यनुत्तमाम् ॥ ४७ ॥

द्वितीय शोधनप्रकार

निम्बूकाम्लयुत वारा माणिक्य चपकास्थितम् ।
सुराप्रदीपे सपक शुद्धिमायात्यनुत्तमाम् ॥ ४८ ॥
आविष्कृतो विधिरय गुरुर्नयमहोदय' ।
प्रकाशित खलु मया भिपजा हितकाम्यया ॥ ४९ ॥

'माणिक्यमारणस्य प्रथम प्रकार

विमलीकृतमत्यर्थं माणिक्य सुचिचूर्णितम् ।
शिलालगन्धैर्विमलै पृथक् तु समभागिकै ॥ ५० ॥
निम्बूकस्वरसेनेह पेषयेद्दिनसप्तकम् ।
निन्यसेत्सम्पुटे घर्मे निशुष्क कृतचक्रिकम् ॥ ५१ ॥
ततस्तु पुटयेद्धीमान् पुटे वारणसञ्ज्ञके ।
रीत्यानया सुपुटितमष्टवार प्रयत्नत ॥ ५२ ॥
माणिक्य म्रियते भस्म जायते पाण्डुरप्रभम् ।
पिष्ट तु लघुचक्राणि पुटेदेवमथापि वा ॥ ५३ ॥

द्वितीयो मारणप्रकार

चूर्णीकृत शोणरत्न विमलै समभागिकै ।
पेषयेन्निम्बुकद्रावैर्मनःशिलारोगशिलेङ्गुलै ॥ ५४ ॥

विमर्द्य सुदृढे खल्वे यत्नतः सप्तवासरम् ।
पुटयेद्वारणपुटे विशुष्कं कृतचक्रिकम् ॥ ५५ ॥
रीत्यानयापि पुटितमष्टवारमसंशयम् ।
माणिक्यमचिरादेव मृतिमाप्नोत्यनुत्तमाम् ॥ ५६ ॥

अथ मृतमाणिक्यस्य गुणाः

माणिक्यं सुमृतं मेध्यं मधुरं तु रसायनम् ।
दीपनं वृष्यमायुष्यं वातपित्तहरं परम् ॥ ५७ ॥
कफप्रशमनं स्निग्धं क्षयरोगनिषूदनम् ।
वाजीकरणमत्यन्तं ध्वजभङ्गहरं मतम् ॥ ५८ ॥

अथ माणिक्यस्य मात्रा

आरभ्य गुञ्जापादांशात् गुञ्जार्द्धप्रमितं मृतम् ।
माणिक्यं योजयेद्धीमान् बलकालाद्यपेक्षया ॥ ५९ ॥

माणिक्यमिहिरोदयरसायनम्

माणिक्यं कनकं रौप्यं तार्क्ष्यं तु समभागिकम् ।
कस्तूरिकाञ्च सर्वार्द्धां दत्त्वा कन्याम्भसा ततः ॥ ६० ॥
पिष्ट्वा द्विगुञ्जप्रमिता वटिकाः कारयेद्भिषक् ।
रसोऽयं तु समाख्यातो माणिक्यमिहिरोदयः ॥ ६१ ॥
रसायनमिदं वृष्यं बल्यं वह्निप्रदीपनम् ।
क्लैब्यापहं विशेषेण ध्वजभङ्गहरं मतम् ॥ ६२ ॥

## अथ मौक्तिकस्य नामानि

मुक्ता मुक्ताफलञ्चैव मौक्तिकं मौक्तिकेयकम् ।
शुक्तिजं शौक्तिकेयञ्च शशिरत्नं शशिप्रियम् ॥ ६३ ॥

जात्यमौक्तिकस्य स्वरूपम्

चन्द्रोद्भासि स्थूलमत्यन्तरम्यं
स्निग्धं वृत्तं निर्व्रणं निर्मलं यत् ।
धत्ते न्यस्तं यत्तुलायां गुरुत्वं

अग्निरुक्तं मौक्तिकं तत्तु जात्यम् ॥ ६४ ॥

निमर्दितं शालितुषैर्गोमूत्रपटुना भृशम् ।
यन्नैति विकृतिं किञ्चित्तन्मौक्तिकमकृत्रिमम् ॥ ६५ ॥

त्याज्यमौक्तिकस्य लक्षणम्

दीर्घं पार्श्वकृशं रूक्षं त्र्यस्रं श्यामञ्च सव्रणम् ।
हतप्रभं क्षुद्रकायं मौक्तिकं हेयमीरितम् ॥ ६६ ॥

मौक्तिकशोधनस्य प्रथमः प्रकारः

जयन्तीस्वरसेनेह दोलायन्त्रे विधानतः ।
यामैकं सततं स्विन्नं मौक्तिकं शुद्धिमाप्नुयात् ॥ ६७ ॥

द्वितीयः शोधनप्रकारः

अगस्त्यद्रवयोगेन यामं स्विन्नमनारतम् ।
दोलायन्त्रे पोट्टलीस्थं शुद्धिमायाति मौक्तिकम् ॥ ६८ ॥

तृतीयः शोधनप्रकारः

सुराप्रदीपवह्निना शरावगं तु मौक्तिकम् ।
सुधोदकेन पाचितं विशुद्धिमेत्यनुत्तमाम् ॥ ६९ ॥

मौक्तिकमारणस्य प्रथमः प्रकारः

निर्मलं मौक्तिकं गव्यपयसा परिपेषितम् ।
त्रिधा लघुपुटे पक्वं मृतं स्याच्छशिसुन्दरम् ॥ ७० ॥

द्वितीयो मारणप्रकारः

मुक्ताफलन्तु तरणीपरिस्रुतजलान्वितम् ।
पिष्टं त्रिवारं पुटितं मृतिमाप्नोत्यनुत्तमाम् ॥ ७१ ॥

मृतमौक्तिकस्य गुणाः

मौक्तिकं वृष्यमायुष्यं मधुरं शिशिरं परम् ।
दीपनं दाहशमनं नेत्र्यं वर्ण्यं च कीर्तितम् ॥ ७२ ॥
जीर्णज्वरप्रशमनं त्वस्थिदन्तविवर्द्धनम् ।
हृद्यं मेहहरं मेध्यं दन्तोद्भेदज्वरापहम् ॥ ७३ ॥

मौक्तिकं सुशिशिरं क्षयापहं श्वासकासपरिकोपनाशनम् ।
अस्थिशोषशमनं विषापहं देहवीर्यबलवृद्धिवर्धनम् ॥ ७४ ॥

मृतमौक्तिकस्य मात्रानिरूपणम्

आरभ्य गुञ्जापादांशाद् गुञ्जैकप्रमितं मृतम् ।
मौक्तिकं विनियुञ्जीत बलकालाद्यपेक्षया ॥ ७५ ॥

मृतमौक्तिकस्य आमयिकः प्रयोगः

रससिन्दूरसंयुक्तं मौक्तिकं परिशीलितम् ।
विनिहन्त्यचिरादेव दन्तोद्भेदभवं ज्वरम् ॥ ७६ ॥
मृतविद्रुमगन्धेशसंयुतं मृतमौक्तिकम् ।
बीजपूराम्भसा पिष्टं पक्वं लघुपुटे ततः ॥ ७७ ॥
भक्षितं सततं चैतद् गुञ्जाद्वितयसंमितम् ।
मासमात्रप्रयोगेण निहन्ति क्षयमुल्बणम् ॥ ७८ ॥
मृतविद्रुमसंयुक्तं मौक्तिकं परिशीलितम् ।
हन्ति फुप्फुसदौर्बल्यं चिरकालसमुद्भवम् ॥ ७९ ॥
कटुकीगैरिकोपेतं सुमृतं मौक्तिकेयकम् ।
निषेवितं निहन्त्याशु हिक्कां परमदारुणाम् ॥ ८० ॥
स्वर्णार्ककान्तभसितसमेतं खलु मौक्तिकम् ।
बीजपूरस्य तोयेन हिक्कां जयति दारुणाम् ॥ ८१ ॥

अथ मुक्तापञ्चामृतरसायनम्

मौक्तिकं विद्रुमं वङ्गं शङ्खं मुक्तागृहं तथा ।
वसुवेदाक्षिचन्द्रेन्दुभागिकं क्रमशः पृथक् ॥ ८२ ॥
वरीविदारीकन्येक्षुदुग्धहंसपदीरसैः ।
पृथक् सम्पेष्य यत्नेन पञ्चधा पुटपाचितम् ॥ ८३ ॥
ततः काचपिधानेन विदध्यात्कूपिकागतम् ।
रसायनमिदं स्यात्तु मुक्तापञ्चामृताह्वयम् ॥ ८४ ॥

अनारत द्विगुञ्जन्तु गव्यदुग्धेन शीलितम् ।
मासद्वयप्रयोगेण रसायनफलप्रदम् ॥ ८५ ॥
जीर्णज्वर महाघोर राजयक्ष्माणमुल्बणम् ।
निहन्ति सर्वरोगाश्च तत्तद्रोगानुपानतः ॥ ८६ ॥

## अथ पुष्परागस्य नामानि

पुष्पराज पुष्परागः पीतरक्ताह्वयस्तथा ।
गुरुरत्न पीतमणि' स एव गुरुवल्लभः ॥ ८७ ॥

### जात्यपुष्परागस्य लक्षणम्

स्निग्ध सम सुमसृण तु सुवर्णवर्णं
स्वच्छ पर सुविमल तु सुवृत्तगात्रम् ।
यत्कर्णिकारकुसुमप्रभमुज्ज्वलञ्च
जात्य तदेव गदित खलु पुष्पराजम् ॥ ८८ ॥
निकषोपलसघृष्ट वर्णं पुष्णाति यन्निजम् ।
पुष्पराजन्तु तज्जात्य मत रत्नपरीक्षकै' ॥ ८९ ॥

### हेयपुष्पराजस्य लक्षणम्

श्यामल निष्प्रभ कर्कश द्व्यक्षक
कृष्णबिन्द्वङ्कित शर्कराङ्गप्रभम ।
उन्नत त्वानत यच्च रूक्ष पर
पुष्पराज मत तत्तु हेय बुधै ॥ ९० ॥

### पुष्पराजस्य शोधनम्

कुलत्थक्वथितोपेतै काञ्जिके स्वेदित समम् ।
दोलायन्त्रे पुष्पराज यामकेन विशुद्ध्यति ॥ ९१ ॥

### पुष्पराजस्य मारणम्

माणिक्यमारणोद्दिष्टविधिभ्यामतियत्नत ।
मारयेत्पुष्पराजन्तु रसतन्त्रविचक्षण ॥ ९२ ॥

पुष्पराजस्य गुणाः

पुष्पराजन्तु शिशिरं दीपनं पाचनं परम् ।
कफवातप्रशमनं कुष्ठच्छर्दिनिर्हरणम् ॥ ९३ ॥
विषघ्नं दाहशमनं गुदजामयनाशनम् ।
मेध्यं बृंहणमायुष्यं रसज्ञैः परिकीर्तितम् ॥ ९४ ॥

पुष्पराजस्य मात्रा

आरभ्य गुञ्जापादांशाद् गुञ्जैकप्रमितं परम् ।
सुमृतं पुष्पराजन्तु प्रयुञ्जीत भिषग्वरः ॥ ९५ ॥

अथ नीलस्य नामानि

नीलो नीलोपलो नीलं नीलरत्नं सुनीलकम् ।
महानीलश्च नीलाश्मा शनिरत्नञ्च कीर्तितम् ॥ ९६ ॥

जात्यनीलस्य लक्षणम्

स्वच्छं सच्छायममलं मसृणं तु महोज्ज्वलम् ।
स्निग्धं गुरु लसज्ज्योतिर्जात्यं नीलं मतं बुधैः ॥ ९७ ॥

हेयनीलस्य लक्षणम्

रक्ताढ्यं विगतच्छायं रूक्षं लघु च कोमलम् ।
परिहेयं शौरिरत्नं मतं रत्नपरीक्षकैः ॥ ९८ ॥

अथ नीलस्य शोधनम्

नीलीस्वरसंसयुक्तं दोलायन्त्रे विधानतः ।
यामैकं परिपक्वन्तु नीलं शुद्ध्यति निश्चितम् ॥ ९९ ॥

अथ नीलस्य मारणम्

माणिक्यमारणोद्दिष्टविधिभ्यामतियत्नतः ।
मारयेच्छनिरत्नं तु रसागमविशारदः ॥ १०० ॥

मृतनीलस्य गुणाः

नीलं तु सुमृतं वृष्यं बल्यं दीपनमुत्तमम् ।
त्रिदोषशमनं वर्ण्यं गुदजामयनाशनम् ॥ १०१ ॥

अनारतं द्विगुञ्जन्तु गव्यदुग्धेन शीलितम् ।
मासद्वयप्रयोगेण रसायनफलप्रदम् ॥ ८५ ॥
जीर्णज्वरं महाघोरं राजयक्ष्माणमुल्वणम् ।
निहन्ति सर्वरोगांश्च तत्तद्रोगानुपानतः ॥ ८६ ॥

अथ पुष्परागस्य नामानि

पुष्पराजः पुष्परागः पीतरक्ताह्वयस्तथा ।
गुरुरत्नं पीतमणिः स एव गुरुवल्लभः ॥ ८७ ॥

जात्यपुष्पराजस्य लक्षणम्

स्निग्धं समं सुमसृणं तु सुवर्णवर्णं
स्वच्छं परं सुविमलं तु सुवृत्तगात्रम् ।
यत्कर्णिकारकुसुमप्रभमुज्ज्वलञ्च
जात्यं तदेव गदितं खलु पुष्पराजम् ॥ ८८ ॥
निकषोपलसङ्घृष्टं वर्णं पुष्णाति यन्निजम् ।
पुष्पराजन्तु तज्जात्यं मतं रत्नपरीक्षकैः ॥ ८९ ॥

हेयपुष्पराजस्य लक्षणम्

श्यामलं निष्प्रभं कर्कशं द्व्यक्षकं
कृष्णबिन्द्वङ्कितं शर्कराङ्गप्रभम् ।
उन्नतं त्वानतं यच्च रूक्षं परं
पुष्पराजं मतं तत्तु हेयं बुधैः ॥ ९० ॥

पुष्पराजस्य शोधनम्

कुलत्थक्वथितोपेते काञ्जिके स्वेदितं समम् ।
दोलायन्त्रे पुष्पराजं यामेकेन विशुद्ध्यति ॥ ९१ ॥

पुष्पराजस्य मारणम्

माणिक्यमारणोद्दिष्टविधिभ्यामतियत्नतः ।
मारयेत्पुष्पराजन्तु रसतन्त्रविचक्षणः ॥ ९२ ॥

पुष्पराजस्य गुणा

पुष्पराजन्तु शिशिर दीपन पाचन परम् ।
कफवातप्रशमन कुष्ठदुर्नामनिबर्हणम् ॥ ९३ ॥
विषघ्न दाहशमनं गुदजामयनाशनम् ।
मेध्यं बृंहणमायुष्य रसज्ञैः परिकीर्तितम् ॥ ९४ ॥

पुष्पराजस्य मात्रा

आरभ्य गुञ्जापादांशाद् गुञ्जैकप्रमित परम् ।
सुमृतं पुष्पराजन्तु प्रयुञ्जीत भिषग्वरः ॥ ९५ ॥

## अथ नीलस्य नामानि

नीलो नीलोपलो नील नीलरत्न सुनीलकम् ।
महानीलश्च नीलाश्मा शनिरत्नश्च कीर्तितम् ॥ ९६ ॥

जात्यनीलस्य लक्षणम्

स्वच्छ सच्छायममलं मसृण तु महोज्ज्वलम् ।
स्निग्ध गुरु लसज्ज्योतिर्जात्य नील मत बुधैः ॥ ९७ ॥

हेयनीलस्य लक्षणम्

रक्ताद्धं विगतच्छाय रूक्ष लघु च कोमलम् ।
परिहेय शौरिरत्न मत रत्नपरीक्षकैः ॥ ९८ ॥

अथ नीलस्य शोधनम्

नीलीस्वरससयुक्तं दोलायन्त्रे विधानत ।
यामैक परिपक्वन्तु नील शुद्ध्यति निश्चितम् ॥ ९९ ॥

अथ नीलस्य मारणम्

माणिक्यमारणोद्दिष्टविधिभ्यामतियत्नत ।
मारयेच्छनिरत्न तु रसागमविशारदः ॥ १०० ॥

मृतनीलस्य गुणा

नील तु सुमृत वृष्य बल्य दीपनमुत्तमम् ।
त्रिदोषशमन वर्ण्यं गुदजामयनाशनम् ॥ १०१ ॥

स्वच्य कुष्ठादिदोषघ्न श्वासकासनिषूदनम् ।
कफपित्तानिलहर विषमज्वरनाशनम् ॥ १०२ ॥

मृतनीलस्य मात्रा

गुञ्जाष्टमाशप्रमिताद् गुञ्जार्द्धप्रमित परम् ।
सुमृत नीलरत्न तु प्राणाचार्यः प्रयोजयेत् ॥ १०३ ॥

## अथ मरकतस्य नामानि

गारुत्मत मरकत तार्क्ष्यं गारुडमश्मकम् ।
बुधरत्न रौहिणेय हरिद्रत्नञ्च तन्मतम् ॥ १०४ ॥

जात्यमरकतस्य स्वरूपम्

सच्छाय मसृण स्वच्छ गुरु स्निग्धश्च कोमलम् ।
अव्यङ्गञ्च हरिद्वर्णं जात्य मरकत मतम् ॥ १०५ ॥

हेयमरकतस्य स्वरूपम्

रूक्षन्तु विगतच्छाय विकृताङ्ग खर लघु ।
सत्रास चातिमलिन हेय मरकत मतम् ॥ १०६ ॥

अथ मरकतस्य शोधनम्

सुरभीपयसा याम दोलायन्त्रे विधानत ।
विपाचित मरकत विशुद्ध्यति सुनिश्चितम् ॥ १०७ ॥

अथ मरकतस्य मारणम्

माणिक्यमारणोद्दिष्टविधिभ्यामतियत्नत. ।
अष्टधा पुटित तार्क्ष्यं म्रियतेऽत्र न सशय ॥ १०८ ॥

मरकतस्य गुणा

मृत मरकत बल्य विषघ्न वह्निदीपनम् ।
ओजोविवर्द्धन वृष्य पाण्डुशोफनिषूदनम् ॥ १०९ ॥
श्वासच्छर्दिप्रशमन गुदजामयनाशनम् ।
समाख्यात विशेषेण सन्निपातनिबर्हणम् ॥ ११० ॥

अथ मरकतस्य मात्रा

आरभ्य गुञ्जापादांशाद्गुञ्जैकप्रमितं परम् ।
मृतं मरकतं युञ्ज्यात् बलकालाद्यपेक्षया ॥ १११ ॥

अथ वैदूर्यस्य नामानि

विदूररत्नं वैदूर्यं केतुरत्नं विदूरजम् ।
बिडालाख्यं बिडालाक्षं वायजश्च प्रकीर्तितम् ॥ ११२ ॥

जात्यवैदूर्यस्य स्वरूपम्

वैदूर्यं गुरु सुस्निग्धं बिडालेक्षणसप्रभम् ।
अमल्लुभ्रोत्तरीयाढ्यं वैदूर्यं जात्यमुच्यते ॥ ११३ ॥

हेयवैदूर्यस्य स्वरूपम्

निच्छायं लघु रूक्षश्च सत्रासं चिपिटं खरम् ।
कृष्णं तथा मृच्छिलाढ्यं वैदूर्यं हेयमीरितम् ॥ ११४ ॥

वैदूर्यस्य शोधनम्

त्रिफलाक्वथितोपेतं वैदूर्यं याममात्रकम् ।
दोलायन्त्रे परिस्विन्नं शुद्धिमायात्यनुत्तमाम् ॥ ११५ ॥

वैदूर्यस्य मारणम्

माणिक्यमारणोद्दिष्टविधिभ्यामतियत्नतः ।
विदूररत्नं पुटितं त्वष्टधा मृतिमाप्नुयात् ॥ ११६ ॥

मृतवैदूर्यस्य गुणा

सुमृतं खलु वैदूर्यं मधुरं शिशिरं परम् ।
दीपनं मेध्यमायुष्यं बल्यं च मलभेदनम् ॥ ११७ ॥
रक्तपित्तप्रशमनं चक्षुष्यं बृंहणं परम् ।
पित्तामयप्रशमनं समाख्यातं विशेषतः ॥ ११८ ॥

वैदूर्यस्य मात्रा

वसुशतो रक्तिकाया वैदूर्यं गुञ्जसमितम् ।
प्राणाचार्यः प्रयुञ्जीत बलकालाद्यपेक्षया ॥ ११९ ॥

त्वच्य कुष्ठादिदोषघ्न श्वासकासनिषूदनम् ।
कफपित्तानिलहर विषमज्वरनाशनम् ॥ १०२ ॥

मृतनीलस्य मात्रा

गुञ्जाष्टमाशप्रमितात् गुञ्जार्द्धप्रमित परम् ।
सुमृत नीलक तु प्राणाचार्य प्रयोजयेत् ॥ १०३ ॥

### अथ मरकतस्य नामानि

गारुत्मत मरकत तार्क्ष्य गारुडमश्मकम् ।
बुधरत्न रौहिणेय हरिद्रत्नञ्च तन्मतम् ॥ १०४ ॥

जात्यमरकतस्य स्वरूपम्

सच्छाय मसृण स्वच्छ गुरु स्निग्धञ्च कोमलम् ।
अव्यङ्गञ्च हरिद्वर्ण जात्य मरकत मतम् ॥ १०५ ॥

हेयमरकतस्य स्वरूपम्

रूक्षन्तु विगतच्छाय विकृताङ्ग खर लघु ।
सत्रास चातिमलिन हेय मरकत मतम् ॥ १०६ ॥

अथ मरकतस्य शोधनम्

सुरभीपयसा यामं दोलायन्त्रे विधानतः ।
विपाचित मरकत विशुद्ध्यति सुनिश्चितम् ॥ १०७ ॥

अथ मरकतस्य मारणम्

माणिक्यमारणोद्दिष्टविधिस्यामतियत्नत ।
अष्टधा पुटित तार्क्ष्यं म्रियतेऽत्र न सशय ॥ १०८ ॥

मरकतस्य गुणा

मृत मरकत बल्य विषघ्न वह्निदीपनम् ।
ओजोविवर्द्धन वृष्य पाण्डुशोफनिषूदनम् ॥ १०९ ॥
श्वासच्छर्दिप्रशमन गुदजामयनाशनम् ।
समाख्यात विशेषेण सन्निपातनिबर्हणम् ॥ ११० ॥

अथ मरकतस्य मात्रा

आरभ्य गुञ्जापादांशाद्गुञ्जैकप्रमितं परम् ।
मृतं मरकतं युञ्ज्यात् बलकालाद्यपेक्षया ॥ १११ ॥

अथ वैदूर्यस्य नामानि

विदूररत्नं वैदूर्यं केतुरत्नं विदूरजम् ।
बिडालाख्यं बिडालाक्षं वायजञ्च प्रकीर्तितम् ॥ ११२ ॥

जात्यवैदूर्यस्य स्वरूपम्

वैदूर्यं गुरु सुस्निग्धं विडालेक्षणसप्रभम् ।
भ्रमच्छुभ्रोत्तरीयाढ्यं वैदूर्यं जात्यमुच्यते ॥ ११३ ॥

हेयवैदूर्यस्य स्वरूपम्

निश्छायं लघु रूक्षञ्च सत्रासं चिपिटं खरम् ।
कृष्णं तथा मृच्छिलाढ्यं वैदूर्यं हेयमीरितम् ॥ ११४ ॥

वैदूर्यस्य शोधनम्

त्रिफलाक्वथितोपेतं वैदूर्यं याममात्रकम् ।
दोलायन्त्रे परिस्विन्नं शुद्धिमायात्यनुत्तमाम् ॥ ११५ ॥

वैदूर्यस्य मारणम्

माणिक्यमारणोद्दिष्टविधिभ्यामतियत्नतः ।
विदूररत्नं पुटितं त्वष्टधा मृतिमाप्नुयात् ॥ ११६ ॥

मृतवैदूर्यस्य गुणाः

सुमृतं खलु वैदूर्यं मधुरं शिशिरं परम् ।
दीपनं मेध्यमायुष्यं बल्यं च मलभेदनम् ॥ ११७ ॥
रक्तपित्तप्रशमनं चक्षुष्यं बृंहणं परम् ।
पित्तामयप्रशमनं समाख्यातं विशेषतः ॥ ११८ ॥

वैदूर्यस्य मात्रा

चरणशतो रक्तिकाया वैदूर्यं गुञ्जसंमितम् ।
प्राणाचार्यः प्रयुञ्जीत बलकालाद्यपेक्षया ॥ ११९ ॥

### अथ गोमेदकस्य नामानि

गोमेदकश्च गोमेदः पिङ्गस्फटिक इत्यपि ।
गोमेद राहुरत्नञ्च कीर्तितश्च तमोमणि ॥ १२० ॥

जात्यगोमेदस्य स्वरूपम्

गोमूत्राभं स्निग्धममन्दं समगात्रं
हेमारक्तं निर्दलमच्छं गुरुभारम् ।
दीप्तच्छायं मञ्जुलरूपं मसृणं यद्
गोमेदाख्यं रत्नमिह स्यात्तज्जात्यम् ॥ १२१ ॥

हेयगोमेदस्य स्वरूपम्

सत्रासं विगतच्छायं चिपिटं मलिनप्रभम् ।
सदलं लघु रूक्षं च गोमेदं हेयमीरितम् ॥ १२२ ॥

गोमेदस्य शोधनम्

निम्बूकस्वरसेनेह दोलायन्त्रे निधानतः ।
परिस्विन्नं तु यामैकं शुद्धिमायात्यनुत्तमाम् ॥ १२३ ॥

गोमेदस्य मारणम्

माणिक्यमारणोद्दिष्टविधिभ्यामतियत्नतः ।
त्वष्टवारं सुपुटितं गोमेदं मृतिमाप्नुयात् ॥ १२४ ॥

मृतगोमेदस्य गुणा

गोमेदकं रुचिकरं दीपनं पाचनं परम् ।
त्वग्दोषशमनं बल्यं कफपित्तप्रणाशनम् ॥ १२५ ॥
उष्णं पाण्ड्वामयहरं क्षयक्षयकरं परम् ।
समाख्यातं विशेषेण बुद्धिसम्वर्द्धनं तथा ॥ १२६ ॥

मृतगोमेदस्य मात्रा

आरभ्य गुञ्जापादाशाद्गुञ्जैकप्रमितं मृतम् ।
गोमेदं तु प्रयुञ्जीत बलकालाद्यपेक्षया ॥ १२७ ॥

### अथ प्रवालस्य नामानि

प्रवालक प्रवालश्च भौमरत्नञ्च विद्रुमम् ।
अब्धिजन्तुविशेषोत्थ तदेन परिकीर्तितम् ॥ १२८ ॥

#### ग्राह्यविद्रुमस्य स्वरूपम्

आरक्तमञ्जुलच्छाय स्निग्ध वृत्तञ्च निर्व्रणम् ।
दीर्घं स्थूल गुरु दृढ ग्राह्य विद्रुममुच्यते ॥ १२९ ॥

#### हेयविद्रुमस्य लक्षणम्

पाण्डुरं सव्रण रूक्ष सशिर लघु धूसरम् ।
कृष्ण सूक्ष्म सुमसृण हेय विद्रुममीरितम् ॥ १३० ॥

#### विद्रुमस्य प्रथम शोधनप्रकार

जयन्त्या' स्वरसेनेह दोलायन्त्रे तु विद्रुमम् ।
यामैक सुपरिस्विन्न शुद्धिमायात्यनुत्तमाम् ॥ १३१ ॥

#### द्वितीय शोधनप्रकार

सर्जिकाक्षारसंयुक्ते सलिले परिपाचितम् ।
यामैकेन प्रवाल तु शुद्धिमायात्यनुत्तमाम् ॥ १३२ ॥

#### तृतीय शोधनप्रकार

तण्डुलीयद्रवेणेह दोलायन्त्रे तु यामकम् ।
प्रवालक परिस्विन्न शुद्धिमायात्यनुत्तमाम् ॥ १३३ ॥

#### अथ विद्रुमस्य प्रथमो मारणप्रकार

विशोधित विद्रुम तु श्लक्ष्णचूर्णं तु कारयेत् ।
कन्याम्भमाऽथ सम्पेष्य शोषयेत् कृतचक्रिकम् ॥ १३४ ॥
सम्पुटस्थ तत कृत्वा त्रिवार पुटयेद्भिषक् ।
एव पुटत्रयैर्भस्म जायते शशिसुन्दरम् ॥ १३५ ॥

#### द्वितीयो मारणप्रकार

विद्रुम गव्यदुग्धेन सम्पेष्य कृतचक्रिकम् ।
म्रियते पुटित भस्म जायतेऽतिमनोहरम् ॥ १३६ ॥

तृतीयो मारणप्रकारः

जयन्त्याः स्वरसेनेह सम्पेष्य कृतचक्रिकम् ।
त्रिवारं पुटितं सम्यक् विद्रुमं म्रियते ध्रुवम् ॥ १३७ ॥

चतुर्थो मारणप्रकारः

पिष्टं वरीरसेनेह प्रवालं कृतचक्रिकम् ।
म्रियते पुटितं वह्नौ भस्म स्यात् सुमनोहरम् ॥ १३८ ॥

अथ विद्रुमस्य गुणाः

विद्रुमं सुमृतं क्षारं मधुरं लघु शीतलम् ।
दीपनं पाचनं चैव दृष्टिरोगनिषूदनम् ॥ १३९ ॥
त्रिदोषशमनं बल्यं विशेषात्कफनाशनम् ।
क्षयकासहरं चैव रक्तपित्तप्रणाशनम् ॥ १४० ॥
स्वेदातिनिर्गमहरं रात्रिस्वेदहरं परम् ।
विषघ्नं भूतशमनं वीर्यवर्णविवर्द्धनम् ॥ १४१ ॥

मृतविद्रुमस्य मात्रा

गुञ्जार्धतः समारभ्य गुञ्जाद्वयमितं परम् ।
विद्रुमं विनियुञ्जीत बलकालाद्यपेक्षया ॥ १४२ ॥

अथ विद्रुमस्य आमयिकः प्रयोगः

तण्डुलोदकयोगेन प्रवालं रक्तिकाद्वयम् ।
शीलितं विनिहन्त्याशु मूत्रकृच्छ्रं कफोत्थितम् ॥ १४३ ॥
रससिन्दूरसंयुक्तं प्रवालं गुञ्जसंमितम् ।
कदलीद्राक्षाभयायुक्तं त्रिदविघातं निहन्त्यलम् ॥ १४४ ॥
प्रवालं सुमृतं गुञ्जं रससिन्दूरसंयुतम् ।
गोक्षुरस्य कषायेण शीलितं मूत्रसादहृत् ॥ १४५ ॥
द्विरक्तिकं तु सुमृतं विद्रुमं मधुसंयुतम् ।
शीलितं नाशयत्याशु निशास्वेदमशेषतः ॥ १४६ ॥

विद्रुम रससिन्दूरसंयुक्त परिशीलितम् ।
पुनर्नवागोक्षुराभ्यां शोथ नाशयति ध्रुवम् ॥ १४७ ॥
रससिन्दूरसयुक्त विद्रुम परिशीलितम् ।
वरीक्षुरकपायेण मूत्रकृच्छ्र व्यपोहति ॥ १४८ ॥
समयशदसमेत मारित भौमरत्न
विमलमधुनिमिश्र शीलित तु त्रिमासम् ।
करयुगलसमुत्था स्वेदसस्रावबाधा-
मपहरति नितान्त वै तदूत्थानजाताम् ॥ १४९ ॥
अभ्रनाशीरजोयुक्त विद्रुम परिशीलितम् ।
विनिहन्ति विशेषेण कास क्षयसमुत्थितम् ॥ १५० ॥
विश्वाभ्ररससिन्दूरव्याघ्रीयुक्त तु विद्रुमम् ।
मधुना सेवित हन्ति शिशूना कासमुल्बणम् ॥ १५१ ॥
अभ्रकट्फलसिन्दूरभार्ङ्गीयुक्त तु विद्रुमम् ।
शिशूना सज्वर श्वास नाशयत्याशु निश्चितम् ॥ १५२ ॥
शुक्तिकारससिन्दूरतुगाक्षीरीसमन्वितम् ।
विद्रुम शीलित श्वास कासञ्च विनिहन्त्यलम् ॥१५३ ॥

अथ क्षुद्ररत्नगणः

वैक्रान्त सूर्यकान्तश्च चन्द्रकान्तो नृपोपलः ।
पेरोजकञ्च स्फटिक क्षुद्ररत्नगणो ह्ययम् ॥ १५४ ॥

अथ वैक्रान्तस्य नामानि

वैक्रान्तश्चैव विक्रान्त वैक्रान्त जीर्णवज्रकम् ।
क्षुवज्र क्षुद्रकुलिश चूर्णवज्रञ्च तन्मतम् ॥ १५५ ॥

वैक्रान्तस्य निर्वचनम्

वज्रवत् सर्वरोगाणा हरणाय यतस्त्विदम् ।
धत्ते विक्रान्तिमतुला वैक्रान्त कथ्यते तत ॥ १५६ ॥

### मार्गावक्रान्तस्य स्वरूपम्

अष्टास्रमष्टफलकं त्रिकोणं सितपीतासितवारणम् ।
मसृणं गुरु षट्कोणं वैक्रान्तं जात्यमुच्यते ॥ १५७ ॥
श्वेतो नीलस्तथा रक्तः पीतः पारावतप्रभः ।
तार्क्ष्याभः कर्बुरः कृष्णो वर्णतश्चाष्टधा हि सः ॥ १५८ ॥

### वैक्रान्तशोधनस्य प्रथमः प्रकारः

वैक्रान्तः पोट्टलीसंस्थः पटुक्षारसमन्वितम् ।
अम्लेन केनचिद्वापि कोद्रवक्वथितेन वा ॥ १५९ ॥
गोमूत्रेणाथवा काम प्रखरानलयोगतः ।
दोलायन्त्रे परिस्विन्नः शुद्धिमायात्यनुत्तमाम् ॥ १६० ॥

### द्वितीयः शोधनप्रकारः

वैक्रान्तं सपटुक्षारं कुलत्थक्वाथयोगतः ।
दोलायन्त्रे परिस्विन्नः शुद्धिमाप्नोति यामतः ॥ १६१ ॥

### तृतीयः शोधनप्रकारः

वैक्रान्तः पोट्टलीसंस्थः कदलीकन्दजद्रवे ।
दोलायन्त्रे परिस्विन्नः यामकेन विशुध्यति ॥ १६२ ॥

### वैक्रान्तस्य प्रथमो मारणप्रकारः

विमलसलिलमिश्रं चूर्णवज्रस्य चूर्णं
समदरदसमेतं निम्बुनीरेण पिष्टम् ।
द्विरदपुटसमाख्ये तत् पुटे सम्पुटस्थं
वसुमितपुटपक्वं भस्मतां याति नूनम् ॥ १६३ ॥

### द्वितीयो मारणप्रकारः

विशोधितं तु वैक्रान्तं यत्नतश्चूर्णयेद्भिषक् ।
त्रिगुणं गन्धपाषाणं समं चैव रसेश्वरम् ॥ १६४ ॥
दत्त्वा निम्बूकतोयेन पेषयेद् याममात्रकम् ।
सुशुष्कं सम्पुटे न्यस्य पुटेद् गजपुटेन वै ॥ १६५ ॥

एवमष्टपुटेनैव वैक्रान्त म्रियते ध्रुवम् ।
चतुर्थादिपुटेष्वत्र रसेश न नियोजयेत् ॥ १६६ ॥

वैक्रान्तस्य गुणा

तत्तन्महागदहरः परमश्च मेध्यो
वह्निप्रदीपनकरोऽतिरसायनश्च ।
दोषत्रयापहरणो बहुयोगवाही
वैक्रान्तकस्तु गदित' खलु वज्रतुल्यः ॥ १६७ ॥
वैक्रान्तक परं त्वच्य राजयक्ष्मनिषूदनम् ।
जराशोषादिशमन ज्वरकुष्ठापह तथा ॥ १६८ ॥
पाण्डूदरश्वासकासप्रमेहक्षयशुग्रणुत् ।
देहदार्ढ्यकरञ्चैव समाख्यात विशेषतः ॥ १६९ ॥

मृतवैक्रान्तस्य मात्रा

तच्चाशतो रक्तिकाया रुद्राशप्रमित भ्रुवम् ।
वैक्रान्तक प्रयुञ्जीत बलकालाद्यपेक्षया ॥ १७० ॥

मृतवैक्रान्तस्य आमयिक प्रयोग

प्रथम वैक्रान्तरसायनम्

सुमृत खलु वैक्रान्तं चतुर्गुञ्जमित शुभम् ।
तोलकैकमितञ्चैन सुमृतं घनसत्वकम् ॥ १७१ ॥
रसेश्वरञ्च सुमृत तोलकार्द्धकसमितम् ।
आदाय खल्वे सम्मर्द्य शाल्मलीमूलवारिणा ॥ १७२ ॥
कारयेद्रसतन्त्रज्ञो रक्तिकैकमिता वटीम् ।
एकैका वटिका दद्यात् समघ्राज्य तु प्रत्यहम् ॥ १७३ ॥
रसायनमिद बल्य वृष्य वर्ण्यञ्च बृंहणम् ।
क्लैब्यापहञ्च परम नास्ति भेषजमीदृशम् ॥ १७४ ॥
आमया न प्रशाम्यन्ति येऽन्यभेषजसेवया ।
एतद्रसायनाभ्यासात् यान्ति शान्ति त निश्चितम ॥ ,

सूर्यकान्तस्य मारणम्

सूर्यकान्तः सुसम्पिष्टः शिलामलिसमन्वित' ।
सप्तधा पुटितो यत्नान्म्रियते नात्र संशयः ॥ १८६ ॥

अथ चन्द्रकान्तस्य नामानि

चन्द्रकान्तश्चन्द्रमणिस्तथा चन्द्रोपलाह्वयः ।
शशिकान्तश्चेन्दुकान्तः स एव परिकीर्तितः ॥ १८७ ॥

जात्यचन्द्रकान्तस्य लक्षणम्

यन्निर्मल सुमसृण शिशिर च पीत
स्निग्ध पर सुविशद परम पवित्रम् ।
स्राव स्रवत्यथ पर तुहिनांशुसगा-
च्चन्द्रोपल खलु तदेव मत तु जात्यम् ॥ १८८ ॥

च द्रकान्तस्य गुणा

चन्द्रकान्तोऽतिशिशिरः स्निग्धः पित्तापह. परम् ।
रक्तपित्तप्रशमनस्तथा दाहनिपूदन ॥ १८९ ॥

चन्द्रकान्तस्य मारणम्

कुनटीहिङ्गुलोपेत कन्यानीरेण पेषित. ।
चन्द्रकान्त. सुपुटितो म्रियते नात्र सशय ॥ १९० ॥

अथ राजावर्तस्य नामानि

राजावर्तो नृपावर्त आवर्तमणिरित्यपि ।
नृपोपलश्च नीलाश्मा स एव परिकीर्तितः ॥ १९१ ॥

जात्यराजावर्तस्य स्वरूपम्

यन्निर्मलः सुमसृण' खलु गारशून्य.
स्निग्धश्च शारदनिरभ्रनभ'सुनीलः ।
कृष्णो गुरुश्च शिखिकण्ठसमप्रकाशो
राजोपलः खलु स एव मतस्तु जात्यः ॥ १९२ ॥

गन्धावर्तस्य प्रथमं शोधनप्रकारः

सगन्धमूत्रः सक्षारो निम्बूकद्रवयोगतः ।
स्विन्नो नृपोपलो याम शुद्धिमायात्यनुत्तमाम ॥ १९३ ॥

द्वितीयं शोधनप्रकारः

निम्बूकाम्लसमायुक्तं सजलं क्षारसयुतं ।
नृपोपलः परिस्विन्नो विशुध्यति न संशयः ॥ १९४ ॥

तृतीयं शोधनप्रकारः

शिरीषपुष्पस्वरसे स्वेदितस्तु नृपोपलः ।
दोलायन्त्रे याममात्रं शुद्धिमायात्यनुत्तमाम् ॥ १९५ ॥

राजावर्तस्य मारणम्

विचूर्णितं नृपोपलं विशुद्धगन्धकान्वितम् ।
नवेन निम्बुकाम्बुना सुपेषयेद् दिनत्रयम् ॥ १९६ ॥
विशोषितश्च विन्यसेच्छरावसम्पुटान्वितम् ।
विधाय सन्धिलेपनं पुटेत्पुटे गजाह्वये ॥ १९७ ॥
विपाचितः सुवर्त्मना ह्यनेन नागवारकम् ।
नृपोपलोऽविलम्बितं समेति पञ्चतामलम् ॥ १९८ ॥

मृतराजावर्तस्य गुणाः

नृपोपलः कटुस्तिक्तो दीपनः पाचनस्तथा ।
शिशिरः पित्तशमनो बृंहणोऽतिरसायनः ॥ १९९ ॥
पाण्डुप्रमेहहरणः क्षयशापनिबर्हणः ।
मदात्ययात्ययकरश्छर्दिहिक्कानिवारणः ॥ २०० ॥

मृतराजावर्तस्य आमयिकः प्रयोगः

नृपोपलः समभृततारताप्यसमन्वितः ।
विपक्वो गव्यहविषा सितामध्वाज्यसयुतः ॥ २०१ ॥
निषेवितो निहन्त्याशु सर्वानेव मदात्ययान् ।
रसमिन्द्रताम्राढ्यः सुश्रुतस्तु नृपोपलः ॥ २०२ ॥

यष्टीमधुकचूर्णेन सितामध्वाज्यसयुतः ।
निषेवितो निहन्त्याशु सर्वानेव मदात्ययान् ॥ २०३ ॥
मृताभ्रसत्त्वकान्ताभ्या सुमृतस्तु नृपोपल ।
मधुना शीलित हन्ति प्रमेहादिकमुल्बणम् ॥ २०४ ॥

गजावर्तस्य सत्त्वपातन मारणञ्च

मनःशिलाज्यसयुत नृपोपल विचूर्णितम् ।
पचेत्तु लोहभाजनेऽथ सैरिभीसुदुग्धत ॥ २०५ ॥
समित्रपञ्चकस्ततो निमर्द्य गोलकीकृत ।
सुतीक्ष्णखादिराग्निना निपाचितस्ततस्त्वयम् ॥ २०६ ॥
स्वकीयसत्त्वमुत्तम निमुञ्चतीह सत्वरम् ।
तत मल्लुङ्गगन्धक विपक्वमेति पञ्चताम् ॥ २०७ ॥

## अथ पेरोजकस्य नामानि

पेरोजकश्च पेरोज रसज्ञैः परिकीर्तितम् ।
भस्माङ्ग हरित चेति द्विविध तत्प्रकीर्तितम् ॥ २०८ ॥

पेरोजकस्य शोधनमारणम्

शोधन मारणञ्चैव पेरोजस्य विशेषतः ।
नृपोपलसम स्यात रसतन्त्रविशारदैः ॥ २०९ ॥

मृतपेरोजकस्य गुणा

पेरोजक सुतुवर मधुर च सुदीपनम् ।
शूलदूषीविषघ्नश्च चराचरविषापहम् ॥ २१० ॥

## अथ स्फटिकस्य नामानि

स्फटिक स्फटिक चैव स्फाटिक स्फटिकोपलः ।
स्फाटीक स्फटिकाश्मा च तथैव स्फटिकोपल ॥ २११ ॥
शालिपिष्ट धौतशिल शिवरत्न शिवप्रियम् ।
सितोपलोऽमलमणिः स एव परिकीर्तितः ॥ २१२ ॥

राजावर्तस्य प्रथमः शोधनप्रकारः

सगव्यमूत्रः सक्षारो निम्बूकद्रवयोगतः ।
स्विन्नो नृपोपलो यामं शुद्धिमायात्यनुत्तमाम् ॥ १९३ ॥

द्वितीयः शोधनप्रकारः

निम्बूकाम्लसमायुक्तः सजलः क्षारसंयुतः ।
नृपोपलः परिस्विन्नो विशुध्यति न संशयः ॥ १९४ ॥

तृतीयः शोधनप्रकारः

शिरीषपुष्पस्वरसैः स्वेदितस्तु नृपोपलः ।
दोलायन्त्रे याममात्रं शुद्धिमायात्यनुत्तमाम् ॥ १९५ ॥

राजावर्तस्य मारणम्

विचूर्णितं नृपोपलं विशुद्धगन्धकान्वितम् ।
नवेन निम्बुकाम्बुना सुपेषयेद् दिनत्रयम् ॥ १९६ ॥
विशोषितश्च विन्यसेच्छरावसम्पुटस्थितम् ।
विधाय सन्धिलेपनं पुटेत्पुटे गजाह्वये ॥ १९७ ॥
विपाचितः सुवर्त्मना ह्यनेन नागवारकम् ।
नृपोपलोऽनिलम्बितं समेति पञ्चतामलम् ॥ १९८ ॥

मृतराजावर्तस्य गुणाः

नृपोपलः कटुस्तिक्तो दीपनः पाचनस्तथा ।
शिशिरः पित्तशमनो बृंहणोऽतिरसायनः ॥ १९९ ॥
पाण्डुप्रमेहहरणः क्षयशोषनिवर्हणः ।
मदात्ययात्ययकरश्छर्दिहिक्कानिवारणः ॥ २०० ॥

मृतराजावर्तस्य आमयिकः प्रयोगः

नृपोपलः समभृततारताप्यसमन्वितः ।
विपक्वो गव्यहविषा सितामध्वाज्यसंयुतः ॥ २०१ ॥
निषेवितो निहन्त्याशु सर्वानेव मदात्ययान् ।
रससिन्दूरताम्राढ्यः सुमृतस्तु नृपोपलः ॥ २०२ ॥

स्थावरविषस्य अधिष्ठानानि

कन्दः सारोऽथ निर्यासः पुष्प मूल फलं दलम् ।
त्वक् क्षीर खनिरित्यस्य ह्यधिष्ठानानि वै दश ॥ ५ ॥

प्रकारान्तरेण स्थावरविषस्य द्वैविध्यम्

विष चोपविष चेति द्विविध स्थावर विषम् ।
प्रथम वत्सनाभादि द्वितीय तिन्दुकादिकम् ॥ ६ ॥

विषस्य नव भेदा

हालाहलः कालकूटः शृङ्गकश्च प्रदीपनः ।
सौराष्ट्रिको ब्रह्मपुत्रो हारिद्रः सक्तुकस्तथा ॥ ७ ॥
वत्सनाभ इति ज्ञेया विषभेदा अमी नव ।
रसे रसायनादौ च वत्सनाभ[1] प्रशस्यते ॥ ८ ॥
विषाणा सक्तुकान्ताना प्रयोगो नेह दृश्यते ।
अतस्त्वेषा विषाणा तु स्वरूप न प्रदर्शितम् ॥ ९ ॥

---

१—हालाहलादिविषाणा तन्त्रान्तरोक्तानि लक्षणानि—

हालाहल —गोस्तनाभफलो गुच्छस्तालपत्रच्छदस्तथा ।
तेजसा यस्य दह्यन्ते समीपस्था द्रुमादय ॥
असौ हालाहलो ज्ञेय किष्किन्धाया हिमालये ।
दक्षिणाब्धितटे देशे कोङ्कणेऽपि च जायते ॥

कालकूट —देवासुररणे देवैर्हतस्य पृथुमालिन ।
दैत्यस्य रुधिराज्जातस्तरुरश्वत्थसंनिभ ॥
निर्यास कालकूटोऽस्य मुनिभि परिकीर्तित ।
सोऽहिच्छत्रे शृङ्गवेरे कोङ्कणे मलये भवेत् ॥

शृङ्गक —यस्मिन् गोशृङ्गके बद्धे दुग्ध भवति लोहितम् ।
स शृङ्गक इति प्रोक्तो द्रव्यतत्त्वविशारदै ॥

प्रदीपन —प्रदीपलोहितो य स्याद्दीप्तिमान् दहनप्रभ ।
महादाहकर पूर्वै कथित स प्रदीपन ॥

सौराष्ट्रिक -सुराष्ट्रविषये य स्यात् स सौराष्ट्रिक उच्यते ।

जात्यस्फटिकस्य स्वरूपम्

शीतं स्निग्धं निस्तुषं नेत्रहृद्यं
घृष्टं धत्ते स्वच्छतां पूर्वतुल्याम् ।
स्वच्छच्छायं यच्च शुद्धान्तरालं
तन्निर्दिष्टं शैवरत्नं तु जात्यम् ॥ २१३ ॥

स्फटिकस्य शोधनमारणम्

शोधनं मारणञ्चैव शिवरत्नस्य सर्वदा ।
राजावर्तमणेस्तुल्यं जानीयाद्रसकोविदः ॥ २१४ ॥

मृतस्फटिकस्य गुणाः

स्फटिको मधुरो बल्यस्तुषारसमशीतलः ।
रक्तपित्तप्रशमनो ज्वरदाहादिनाशनः ॥ २१५ ॥

इति रत्नादिविज्ञानीयो नाम त्रयोविंशस्तरङ्गः ।

---

## अथ विषोपविषादिविज्ञानीयश्चतुर्विंशस्तरङ्गः

विषपदस्य निर्वचनम्

दृष्ट्वैतद् यद्विषीदन्ति जनास्तस्माद्विषं मतम् ।
नरं वा विपिणोत्येतन्मृत्युपाशैस्ततो विषम् ॥ १ ॥

विषस्य नामानि तद्द्वैविध्यञ्च

विषं क्ष्वेडश्च गरलं कालकूटश्च तन्मतम् ।
स्थावरं जङ्गमश्चेति द्विविधं विषमुच्यते ॥ २ ॥

स्थावरजङ्गमविषयोः स्वरूपम्

वन्यौषधाश्रयं यत्तु विषं तत्स्थावराह्वयम् ।
सर्पादिजन्तुप्रभवं विषं जङ्गमसञ्ज्ञकम् ॥ ३ ॥

स्थावरविषस्य भेदाः

अधिष्ठानविभेदेन विषं स्थावरसञ्ज्ञकम् ।
समाख्यातं दशविधं रसतन्त्रविचक्षणैः ॥ ४ ॥

वत्सनाभसंशोधनस्य प्रयोजनम्

अविशुद्धं विषं दाहं मोहं हृद्गतिरोधनम् ।
मृत्युश्च विदधात्याशु तस्मात्तं परिशोधयेत् ॥ १८ ॥

वत्सनाभस्य प्रथमं शोधनप्रकारः

यथोक्तगुणसम्पन्नं वत्सनाभं समाहरेत् ।
ततश्चणकसंस्थानं खण्डशः कारयेद्भिषक् ॥ १९ ॥
पाषाणचषके वापि मृत्तिकाभाजने ततः ।
गोमूत्रेण समाप्लाव्य स्थापयेत्प्रखरातपे ॥ २० ॥
प्रत्यहं पूर्वनिक्षिप्तं गोमूत्रमपनीय तु ।
दत्त्वा च नूतनं मूत्रं तीव्रघर्मे तु विन्यसेत् ॥ २१ ॥
एवं दिनत्रयं कृत्वा त्वचामपनयेत्ततः ।
शोषयेच्च विषं त्वेवं शुद्धिमायात्यनुत्तमाम् ॥ २२ ॥

द्वितीयं शोधनप्रकारः

विषं चणकसंस्थानं कृत्वा पोट्टलिकागतम् ।
सुरभीपयसा चेह दोलिकायन्त्रयागतः ॥ २३ ॥
यामद्वयं वा यामैकं स्वेदयेदतियत्नतः ।
संशोधितं विषं त्वेवं विशुद्ध्यति न संशयः ॥ २४ ॥

तृतीयं शोधनप्रकारः

खण्डीकृतो वत्सनाभः पोट्टलीगर्भसंस्थितः ।
अजादुग्धेन सुस्विन्नो यामतः शुद्धिमाप्नुयात् ॥ २५ ॥

अथ वत्सनाभस्य गुणाः

विषं तु कटुकं तिक्तमुष्णं चैव कषायकम् ।
योगवाहि परं चैतन्महोत्कृष्टं रसायनम् ॥ २६ ॥
त्रिदोषघ्नं विशेषेण मतं वातबलासनुत् ।
दीपनं शीतशमनं बृंहणं बलवर्द्धनम् ॥ २७ ॥
अग्निमान्द्यप्रशमनं प्लीहोदरनिबर्हणम् ।

वत्सनाभक्षुपस्य परिचय
सिन्दुवारदल पार्श्वे तरुवृद्धिनिनर्जित'।
नीलपुष्प. कन्दविषो क्षुपो हस्तद्वयोच्छ्रितः ॥ १० ॥
वत्सनाभ इति ख्यातो रसतन्त्रविचक्षणै'।
गढपाले च काश्मीरे नेपालादौ च जायते ॥ ११ ॥

वत्सनाभस्य परिचय
दैर्घ्ये तु पञ्चाङ्गुलत पर सप्ताङ्गुलोन्मित'।
व्यासे चैकाङ्गुलात् सार्द्धद्वयङ्गुलप्रमितस्तथा ॥ १२ ॥
आमूलचूल क्रमशः स्थूलश्च पाण्डुरप्रभः।
कन्दोऽस्य भिषजा र्वैर्वत्सनाभ इति स्मृतः ॥ १३ ॥
दीर्घमूल स्थूलकन्द वत्सनाभविषक्षुपम्।
उत्पाट्य शीतसमये वसन्ते वा समाहरेत् ॥ १४ ॥

वत्सनाभस्य भेदा
कृष्णाभ कपिश पाण्डुर्वर्णतस्त्रिविधो मत'।
वत्सनाभो विशेषेण क्रमेण गुणवत्तम ॥ १५ ॥

## वत्सनाभस्य नामानि
वत्सनाभो वत्सनाग. क्ष्वेडोऽस्त्री च विष मतम्।
अमृतश्च तदेवोक्त रसतन्त्रविशारदै' ॥ १६ ॥

ग्राह्यवत्सनाभस्य स्वरूपम्
स्थूल स्निग्ध गुरु नव फलपाकोत्तरोद्धृतम्।
कीटाद्यभक्षितश्चैव विष ग्राह्यमिहोच्यते ॥ १७ ॥

---

ब्रह्मपुत्र —वर्णत कपिलो यः स्यात् तथा भवति सारक।
ब्रह्मपुत्र स विज्ञेयो जायते मलयाचले ॥
हारिद्र —हरिद्रातुल्यमूलो यो हारिद्र' स उदाहृत।
सक्तुक —यद् ग्रन्थि सक्तुकैनैव पूर्णमध्य स सक्तुक ॥

मस्तिष्कदेशे सद्वद्वा रक्तसञ्चरणक्रियाम् ।
नाशयत्याशु मस्तिष्के जातं वा रक्तसञ्चयम् ॥ ४१ ॥
फुप्फुसच्छदशोथग्रस्तथा फुप्फुसशोथनुत् ।
तथा शोथसमुद्भूतनिनिधज्वरवेगजित् ॥ ४२ ॥
शोथ विनाशयत्याशु हृदयावरणोत्थितम् ।
तथान्त्रावरणोद्भूत ज्वरञ्च विनिहन्त्यलम् ॥ ४३ ॥
फुप्फुसच्छदशोथादिरोगाणा प्रक्रमे निपम् ।
प्रयुक्त निरुणद्ध्येतत् केपाचिद्भिपजा मतम् ॥ ४४ ॥
गलशोथ तुण्डिकेरीं तथैव गलशुण्डिकाम् ।
अन्याश्च तरुणान् कण्ठरोगानाशु निहन्त्यलम् ॥ ४५ ॥
तत्तत्स्थानसमुद्भूत त्वभिघातादिहेतुजम् ।
बाह्यमाभ्यन्तर रक्तस्राव ह्रासयति द्रुतम् ॥ ४६ ॥
सदाहं सक्षत तीव्रशिरोवेदनयान्वितम् ।
सदाहभ्रूयुग हन्ति प्रतिश्याय नवोत्थितम् ॥ ४७ ॥
सकफा बहुरक्ता वा स्वल्परक्ताम्नुपक्रमे ।
प्रवृद्धमलवेगाढ्या विनिहन्ति प्रवाहिकाम् ॥ ४८ ॥
ऊर्ध्वजत्रुगता या तु नाडिका पञ्चमी मता ।
शूल तदुत्थित शीघ्र निनिहन्ति विशेषत· ॥ ४९ ॥
बहुवेग वाल्पवेग प्रगाढारक्तलोहितम् ।
ज्वरान्वित तूर्ध्वगत रक्तपित्त व्यपोहति ॥ ५० ॥
तावदेव प्रयोक्तव्यं विप होरात्रयोत्तरम् ।
गात्रतापो भवेन्नेह यावत् खलु शताशिकम् ॥ ५१ ॥
अन्तर्दाहसमायुक्त द्रुत प्रचलनाडिकम् ।
पिपासया परिगत द्रुतहृत्कृतिसयुतम् ॥ ५२ ॥

वातरक्तापहं चैव श्वासकासविधूननम् ॥ २८ ॥
गुदामयग्रहणिकागुल्मनिर्दलनं परम् ।
कृशपाण्डुज्वरहरं त्वामवातप्रणाशनम् ॥ २९ ॥
विनिहन्ति विशेषेण तिमिरं च निशान्ध्यताम् ।
अभिष्यन्दं नेत्रशोथं कर्णशोथञ्च दारुणम् ॥ ३० ॥
कर्णशूलं शिरःशूलं गृध्रसीं कटिवेदनाम् ।
आशुवृश्चिकदंष्ट्राणां विषं चैवाविलम्बितम् ॥ ३१ ॥

वत्सनाभस्य विशिष्टा गुणाः

विषं प्राणप्रदमलं विधिना परिशीलितम् ।
तदेवाविधिनायुक्तं मतं प्राणहरं परम् ॥ ३२ ॥
तस्माद्विषविधानज्ञो रोगाणां लक्षणानि तु ।
निरूप्य सूक्ष्मया बुद्ध्या प्रयुञ्जीत प्रयत्नतः ॥ ३३ ॥
विषं विशेषतो वातवेदनाहरमुत्तमम् ।
मूत्रलं स्वेदजननं शूलनिर्मूलनं परम् ॥ ३४ ॥
प्रवृद्धतापशमनं तथा शोथनिषूदनम् ।
तत्तद्धेतुप्रवृद्धाया हृद्गतेश्च नियामकम् ॥ ३५ ॥
स्वेदमञ्जनकान्येषां भेषजानामपेक्षया ।
परं तु तापशमनं न चातिस्वेदकृत्तया ॥ ३६ ॥
प्रवृद्धरक्तसञ्चारसुयमनविधौ ।
अमोघास्त्रमिदं ख्यातं सर्वोत्कृष्टं महौषधम् ॥ ३७ ॥
रसतन्त्रचिकित्सायां बाहुल्येन निरूपिते ।
विषप्रयोगे भूम्ना तु प्रवृत्ते सति भारते ॥ ३८ ॥
पूर्वाचार्यविनिर्दिष्टं रक्तनिर्हरणादिकम् ।
इदानीमत एवेह तिरोभूतं तु निर्भरम् ॥ ३९ ॥
विशोधितं खलु विषं मात्रया परिशीलितम् ।
हृदयस्य गतिं नैवावसादयति कर्हिचित् ॥ ४० ॥

मस्तिष्कदेशे सञ्जाता रक्तसञ्चरणक्रियाम् ।
नाशयत्याशु मस्तिष्के जातं वा रक्तसञ्चयम् ॥ ४१ ॥
फुप्फुसच्छदशोथमस्तथा फुप्फुसशोथनुत् ।
तथा शोथसमुद्भूतविविधज्वरवेगजित् ॥ ४२ ॥
शोथं विनाशयत्याशु हृदयावरणोत्थितम् ।
तथान्त्रावरणोद्भूतं ज्वरञ्च विनिहन्त्यलम् ॥ ४३ ॥
फुप्फुसच्छदशोथादिरोगाणां प्रक्रमे विषम् ।
प्रयुक्तं निरुणद्ध्येतत् केषाचिद्भिषजां मतम् ॥ ४४ ॥
गलशोथं तुण्डिकेरीं तथैव गलशुण्डिकाम् ।
अन्यांश्च तरुणान् कण्ठरोगानाशु निहन्त्यलम् ॥ ४५ ॥
तत्तत्स्थानसमुद्भूतं त्वभिघातादिहेतुजम् ।
बाह्यमाभ्यन्तरं रक्तस्रावं ह्रासयति द्रुतम् ॥ ४६ ॥
सदाहं सक्षवं तीव्रशिरोवेदनयान्वितम् ।
सदाहभ्रूयुगं हन्ति प्रतिश्यायं नवोत्थितम् ॥ ४७ ॥
सकफां बहुरक्तां वा स्वल्परक्तामुपक्रमे ।
प्रवृद्धमलवेगाढ्यां विनिहन्ति प्रवाहिकाम् ॥ ४८ ॥
ऊर्ध्वजत्रुगता या तु नाडिका पञ्चमी मता ।
शूलं तदुत्थितं शीघ्रं विनिहन्ति विशेषतः ॥ ४९ ॥
बहुवेगं चाल्पवेगं प्रगाढारक्तलोहितम् ।
ज्वरान्वितं तूर्ध्वगतं रक्तपित्तं व्यपोहति ॥ ५० ॥
तावदेव प्रयोक्तव्यं विषं होरात्रयोत्तरम् ।
गात्रतापो भवेन्नेह यावत् खलु शताशिकम् ॥ ५१ ॥
अन्तर्दाहसमायुक्तं द्रुतं प्रबलनाडिकम् ।
पिपासया परिगतं द्रुतहृद्गतिसंयुतम् ॥ ५२ ॥

अजीर्णाध्मानसंयुक्तं तथैव स्वेदवर्जितम् ।
अतिमात्राभिसंवृद्धगात्रतापाङ्गसंगतम् ॥ ५३ ॥
कासकम्पशिरःशूलं पर्याकुलमनारतम् ।
अस्थिरारतिवैचित्त्यभयोद्वेगादिसंयुतम् ॥ ५४ ॥
वातवेदनयाक्रान्तं त्वारक्तमुखमण्डलम् ।
शुष्कोष्णचर्मसंस्पर्शं प्रगाढारक्तमूत्रकम् ॥ ५५ ॥
शीतपूर्वं तु दाहान्तं ज्वरं त्रिविधहेतुजम् ।
विषं विधिप्रयुक्तं तु नाशयत्याशु निश्चितम् ॥ ५६ ॥
विविधोत्थानसम्भूतान् विविधस्थानसंस्थितान् ।
निहन्ति तरुणानाशु शोथांस्तु विविधाकृतीन् ॥ ५७ ॥
विविधोत्थानसंस्थानां त्वङ्महत्त्वप्रकाशिकाम् ।
स्पर्शासहां सविभवां वेदनाञ्च निहन्त्यलम् ॥ ५८ ॥
तत्तद्रोगप्रभैषज्ययुतं तु विमलं विषम् ।
योगवाहितया हन्ति सर्वानिव महामयान् ॥ ५९ ॥
नानारसप्रयोगेण शान्तिं यान्ति न ये गदाः ।
विषप्रयोगेण तु ते प्रशाम्यन्ति न संशयः ॥ ६० ॥

### विषप्रयोगस्य निषेधः

न बालेष्वतिवृद्धेषु रोगिणीगर्भिणीषु च ।
न चातिक्षीणगात्रेषु यक्ष्मलम्भयुते न च ॥ ६१ ॥
न क्रोधिते न च श्रान्ते हर्म्यैर्नल्ये विशेषतः ।
वत्सनाभविषं वैद्यः प्रायशो न प्रयोजयेत् ॥ ६२ ॥
एतेष्वपि प्रयोक्तव्येऽवश्यं खलु विधानवित् ।
यत्नतोऽत्यल्पकालार्थं युञ्जीतात्यल्पमात्रया ॥ ६३ ॥

### विषस्य मात्रया प्रयोगे फलवैशिष्ट्यम्

विषं भवति पीयूषं मात्रया विनियोजितम् ।
तदेवामात्रया युक्तं द्रुतं मुष्णाति जीवितम् ॥ ६४ ॥

तस्मात् पूर्वं तु रोगाणां रोगिणां च बलाबलम् ।
वीक्ष्य देशादिकञ्चापि विषमात्रां प्रकल्पयेत् ॥ ६५ ॥

वत्सनाभविषस्य मात्रा

कलाशतो रक्तिकायाः वस्त्रशप्रमितं विषम् ।
निर्मलं विनियुञ्जीत बलकालाद्यपेक्षया ॥ ६६ ॥

अथ वत्सनाभविषस्य आमयिकः प्रयोगः

मृत्युञ्जयरसः

अमृतं द्विगुणामलेङ्गुलाढ्यं
त्रिदिनं त्वार्द्रकवारिणा निपिष्टम् ।
बलिमागधिकामरीचटङ्कैः
समभागैः परिपेषयेत्त्रिकामम् ॥ ६७ ॥
वटिकाः कारयेद्यत्नात् ततो विषविधानवित् ।
गुञ्जार्धसम्मिता वापि गुञ्जापादांशसम्मिता ॥ ६८ ॥
रसोऽयं तु समाख्यातो मृत्युञ्जयसमाह्वयः ।
अयं वातज्वरहरस्तथा फुफ्फुसशोथहृत् ॥ ६९ ॥
प्रवाहिकाप्रशमनो विविधज्वरनाशनः ।
आध्मानाजीर्णसंयुक्तसंनिपातनिपातनः ॥ ७० ॥

मृत्युञ्जयरसस्य आमयिकः प्रयोगः

आरक्तनक्ते प्रबलज्वरे च श्वासोच्छ्रये कष्टदकासवेगे ।
देयो दिनेऽत्र प्रथमे द्वितीये मृत्युञ्जयः फुफ्फुसशोथरोगे ॥७१॥
रसोऽयं शीलितस्तीव्रज्वरवेगसमन्वितम् ।
आध्मानाजीर्णसंयुक्तं कृमिरोगं विनाशयेत् ॥ ७२ ॥
विविधोत्सेधजं वापि हृदावरणशोथजम् ।
ज्वरमारम्भवेलायां हन्ति मृत्युञ्जयो रसः ॥ ७३ ॥
नवज्वरायमाणं च त्वजीर्णाध्मानसंयुतम् ।
सन्निपातं निहन्त्याशु रसोऽयं निम्बुकाम्भसा ॥ ७४ ॥

गौरवारुचिसंसृष्टं सामं वापि निरामकम् ।
रसोऽयं निम्बुकद्रावैर्निहन्ति विषमज्वरम् ॥ ७५ ॥
पिप्पलीमधुसंयुक्तो रसोऽयं परिशीलितः ।
नवज्वरायमाणन्तु जीर्णज्वरमपोहति ॥ ७६ ॥
सोत्सेधारक्तशिश्नाग्रं सदाहं वेदनान्वितम् ।
निहन्त्यारम्भवेलायामौपसर्गिकमेहकम् ॥ ७७ ॥

हिङ्गुलेश्वरो रसः

अमृतं विमलं युगतोलमितं
दरदं च कणां सममेन समम् ।
परिपेष्य भृशं खलु सार्द्धयव-
प्रमिता वटिका विदधीत बुधः ॥ ७८ ॥
रसोऽयं तु समाख्यातो विबुधैर्हिङ्गुलेश्वरः ।
आमवातप्रशमनस्तथा वातज्वरापहः ॥ ७९ ॥

हिङ्गुलेश्वरस्य आमयिकः प्रयोगः

तीव्रज्वरं साङ्गमर्दं सन्धिशूलसमन्वितम् ।
आमवातं निहन्त्याशु शीलितो हिङ्गुलेश्वरः ॥ ८० ॥
शीतकम्पाङ्गमर्दाढ्यं शिरोवेदनयान्वितम् ।
रसोऽयं शीलितो हन्ति वातिकज्वरमुल्बणम् ॥ ८१ ॥
नवज्वरायमाणन्तु जीर्णज्वरमथापि वा ।
सनिरामज्वरं हन्ति रसोऽयं परिशीलितः ॥ ८२ ॥

पञ्चामृतरसः

अमृतं तोलकमितं रसं गन्धञ्च तन्मितम् ।
मरिचं टङ्कणञ्चैव तोलकत्रितयोन्मितम् ॥ ८३ ॥
समादाय ततो चारु वटिका रक्तिकोन्मिता ।
निर्मापयेद्भिषग्वर्यो रसः पञ्चामृताभिधः ॥ ८४ ॥

विविधोत्थानसस्थान निनिधस्थानसास्थितम् ।
ज्वरातिसारयुक्तञ्च शोथ हन्त्यविलम्बितम् ॥ ८५ ॥
जलोदर शिरःशूल पीनसञ्च गलग्रहम् ।
नासारोग कण्ठरोगं हन्ति च श्लैष्मिकामयम् ॥ ८६ ॥

अस्य आमयिक प्रयोग

पुनर्नवाकषायेण रसोऽय चार्द्रकद्रवैः ।
विविधोत्थानसस्थान शोथ हन्त्याशु सर्वगम् ॥ ८७ ॥
आर्द्रकद्रवयोगेन रसोऽय परिशीलित. ।
शिरःशूल निहन्त्याशु वृक्ष शक्राशनिर्यथा ॥ ८८ ॥

शिवताण्डवरस

विप तु तोलकमित रससिन्दूरक तथा ।
तालक निमल सूत वलिं च समभागिकम् ॥ ८९ ॥
चूर्णीकृत च मरिच चतुस्तोलकममितम् ।
समादाय भिपग्वर्यः पेषयेदार्द्रकद्रवै. ॥ ९० ॥
निर्मापयेद्विधानज्ञो वटिका रक्तिकोन्मिता ।
रसोऽय तु समाख्यात' शिवताण्डवसमकः ॥ ९१ ॥
दृढदन्त लिप्तदेह भ्रान्ततारकलोचनम् ।
विपयाशक्तकरण सन्निपात निपातयेत ॥ ९२ ॥

आनन्दभैरवो रस

अमृत गव्यमूत्रेण यत्नतो विमलीकृतम् ।
मागधी मरिच चैव सौभाग्य दरद तथा ॥ ९३ ॥
सम सम समादाय वारिणा परिपेपयेत् ।
रक्तिकार्द्धमिताश्चैव वटिकाः कारयेत्तत' ॥ ९४ ॥
अग्राहिकाप्रशमनः पूयमेहप्रणुन्परम् ।
ज्वरातीसारजिन्नाम्ना रसो ह्यानन्दभैरवः ॥ ९५ ॥

आनन्दभैरवस्य आमयिक प्रयोग

मधोथारक्तशिश्नाग्र दाहकण्डूयनान्वितम् ।
पूयमेह निहन्त्याशु रसो ह्यानन्दभैरव' ॥ ९६ ॥
अतीसार ज्वरोद्भूत ज्वर वाप्यतिसारजम् ।
महुताप वातिवेग हन्त्ययं तु रसोत्तम ॥ ९७ ॥
अजीर्णशूलप्रनलज्वरया ग्रसाहिकाया कफवातजायाम् ।
ज्वरोपशान्त्यै विनियोजनीयः फलेन्द्रपत्रस्वरसादियोगात्९८

जयावटी

विष निशा कटुत्रिक क्रमिघ्ननिम्बमुस्तकम् ।
सम सम समोन्वित जयन्तिकाशिफारजः ॥ ९९ ॥
ममाहरेङ्घ्रिपग्वरो वटीं द्विगुञ्जसंमिताम् ।
प्रणाययेत्तु नामतो बुधैर्मता जयावटी ॥ १०० ॥
जयावटी विशेषत प्रमेहकासपाण्डुजित् ।
नवज्वरापहा पर तथैव रक्तपित्तनुत् ॥ १०१ ॥

जयावटिकाया आमयिक प्रयोग

चन्दनस्य कषायेण शीलिता तु जयावटी ।
रक्तपित्त निहन्त्याशु सज्वर त्वनिलान्वितम् ॥ १०२ ॥
बलामूलकषायेण शीलिता तु जयावटी ।
जङ्घोर्ध्वपश्चमीनाडीगत शूल व्यपोहति ॥ १०३ ॥
मुस्तेन्द्रयवनिधाना क्वाथेन तु जयावटी ।
शीलिता ग्रहणीं हन्ति सज्वरामतिदारुणाम् ॥ १०४ ॥
पर्पटस्य कषायेण जया तु परिशीलिता ।
विनाशयति पित्तोत्थ ज्वर खल्वतिदारुणम् ॥ १०५ ॥

कफकेतु रस

अमृत तोलकमित गोमूत्रपरिशोधितम् ।
पिप्पली शङ्खभसित टङ्कण चैव तन्मितम् ॥ १०६ ॥

शृङ्गवेररसेनैव पेषयेत्तु दिनत्रयम् ।
गुञ्जार्धमात्रा वटिकाः कर्तव्याः खलु यत्नतः ॥ १०७ ॥
रसोऽयं भाषितो नाम्ना कफकेतुसमाह्वयः ।
प्रतिश्यायं तथा कासं कण्ठरोगञ्च नाशयेत् ॥ १०८ ॥
गलग्रहं कर्णरोगं श्वासं प्रतमकाभिधम् ।
विनिहन्ति विशेषेण रसोऽयमविलम्बितम् ॥ १०९ ॥

अस्य आमयिक प्रयोग

क्षौद्रार्द्रकरसोपेतो रसोऽयं परिशीलितः ।
तीव्रशीघ्रव्यथोपेतं स्तब्धाङ्गं काससंयुतम् ॥ ११० ॥
सज्वरं वातजं वापि खलु वातनलासजम् ।
प्रतिश्यायं निहन्त्याशु दिवसत्रयमात्रतः ॥ १११ ॥
सन्निपातसमुद्भूतं तथैव तु गलग्रहम् ।
कर्णक्षतादिजनितं ज्वरं हन्ति च दारुणम् ॥ ११२ ॥
नवज्वरायमाणञ्च प्रतिश्यायसमन्वितम् ।
श्वासं प्रतमकाभिख्यं नाशयत्यविलम्बितम् ॥ ११३ ॥

विषरसायनम्

अमृतं तोलकमितं गोमूत्रविमलीकृतम् ।
तत्समं रससिन्दूरं हिङ्गुलं विमलं तथा ॥ ११४ ॥
तथैव तारं ताम्रं च रसगन्धकजारितम् ।
त्र्योषं पलार्द्धप्रमितं चतुर्जातं च चित्रकम् ॥ ११५ ॥
समादाय भिषग्वर्यो वारिणा परिपेषयेत् ।
वटिकाः कारयेद्युक्त्या रक्तिद्वितयसंमिता ॥ ११६ ॥
प्राणाचार्यैः समाख्यातं नाम्ना विषरसायनम् ।
बल्यं वर्ण्यं परं वृष्यं नानारोगनिषूदनम् ॥ ११७ ॥
मासद्वयप्रयोगेण रसस्यास्य निरन्तरम् ।

दिव्यदृष्टिर्दीर्घकायो मनत्येनानिलम्भितम् ॥ ११८ ॥
अग्निसन्दीपनमिदं यकृत्प्लीहनिषूदनम् ।
अजीर्णानाहशमनं परं शूलनिवर्हणम् ॥ ११९ ॥
कर्तुं जीवनसाफल्यं विहर्तुं ललनाकुले ।
यौवनानन्दमाहर्तुमिदं सेव्यं रसायनम् ॥ १२० ॥

अमृतरसायनम्

विषं द्वितोलकमितं सुरभीमूत्रभावितम् ।
धात्रीहृतं कान्तलोहं गगनं स्वर्णमाक्षिकम् ॥ १२१ ॥
स्वर्णसिन्दूरकञ्चैव तारं वङ्गञ्च तन्मितम् ।
खादिरं नागरं चैव त्रितोलकमितं पृथक् ॥ १२२ ॥
समादाय भिषग्वर्यः कन्यानीरेण मर्दयेत् ।
निर्मापयेत्तु वटिका रक्तिद्वितयसम्मिताः ॥ १२३ ॥
समाख्यात भिषग्वर्यैर्नाम्नामृतरसायनम् ।
नानातङ्कप्रशमनं रसायनमनुत्तमम् ॥ १२४ ॥
रसायनमिदं रम्यं दीपनं बृंहणं परम् ।
बलसञ्जननञ्चैव रतिशक्तिविवर्द्धनम् ॥ १२५ ॥
कासश्वासप्रशमनं क्षयक्षयकरं परम् ।
क्लैब्यापहं विशेषेण शुक्रतारल्यनाशनम् ॥ १२६ ॥
अतीसारग्रहणिकावाह्निमान्द्यनिषूदनं ।
परं त्वग्दोषशमनं तथा कुष्ठविनाशनम् ॥ १२७ ॥
अपत्यकरमत्यन्तं परमोजोविवर्द्धनम् ।
धृतिस्मृतिप्रदञ्चैव नानामेहनिषूदनम् ॥ १२८ ॥
यौवनोपवने नित्यं रतिपुष्पचिचीषया ।
विहरद्भिः कामिभिस्तु सेव्यमेतद्रसायनम् ॥ १२९ ॥
एतद्दिव्यरसायनं घृतसिताक्षौद्रेण संयोजितम्

चपक परिशीलितं ह्यविरतं काम द्विगुञ्जोन्मितम्।
चार्द्धक्य निनिहन्त्यल शमयति श्लेष्माणमत्युल्बण
काम कामकलाविलासचतुरप्रौढाङ्गनारञ्जनम्॥ १३० ॥

अथ विषस्य प्रयोगा

व्योपताम्रसमायुक्त विप तु परिशीलितम्।
वातशूल तथा गुल्म विनिहन्ति सुदारुणम्॥ १३१ ॥
मधुयष्टीपद्मकन्दलाक्षोशीरयुत विपम्।
शीलित तण्डुलाम्भोभी रक्तपित्तहर परम्॥ १३२ ॥
वचाचन्दनलोध्राढ्य विप क्षौद्रेण शीलितम्।
समाख्यात विशेषेण जीर्णज्वरनिनाशनम्॥ १३३ ॥
वरीनिदारिकाद्राक्षाकपिकच्छसमन्वितम्।
विप तु मधुना लीढ शुक्रसञ्जनन परम्॥ १३४ ॥
रजनीगोक्षुरद्राक्षायुत युक्त विप द्रुतम्।
गोक्षुरस्य कपायेण मूत्रकृच्छ्रप्रणाशनम्॥ १३५ ॥
त्रायन्तीवायसीमूलगायत्रीराजपादपैः।
शृतैर्विप शीलित तु ख्यात कुष्ठनिपूदनम्॥ १३६ ॥
पापाणभेदाश्मजतुयवक्षारसमन्वितम्।
अमृत शीलित हन्ति त्वश्मरीमतिदारुणाम्॥ १३७ ॥
सर्जिकाक्षारसयुक्त सव्योप परिशीलितम्।
विप खलु समाख्यात पर गुल्मप्रणाशनम्॥ १३८ ॥
जन्तुघ्नदाडिमशिफाशतपुष्पायुत विपम्।
शीलित नाशयत्याशु कृमिरोग सुदारुणम्॥ १३९ ॥
त्रिक्षारशरपुङ्खाढ्य-कणामूलयुत विपम्।
शीलित मात्रया नित्य मत प्लीहनिपूदनम्॥ १४० ॥

अथास्य बाह्यप्रयोगा

बीजपूरद्रवे पिष्ट विष समसितायुतम् ।
अञ्जनान्नाशयत्याशु काच नातिचिरोत्थितम् ॥ १४१ ॥
निशाद्वयकणायुक्त विष कृष्णाञ्जनान्वितम् ।
अञ्जित नाशयत्येव काच नातिचिरोत्थितम् ॥ १४२ ॥
त्रिसप्तवार त्वमृत भावित धात्रिकारसै ।
अञ्जित शुद्धशङ्खाढ्य तिमिर हन्ति दारुणम् ॥ १४३ ॥
सुरभीमूत्रयोगेन सप्तधा भावित विषम् ।
सकण त्वञ्जित यत्नान्मत काचजिदञ्जनम् ॥ १४४ ॥
सुश्लक्ष्णपिष्टहीराढ्य विष गोमूत्रभावितम् ।
नारीस्तन्येन सघृष्ट मत काचजिदञ्जनम् ॥ १४५ ॥
करवीरकरञ्जार्कनिम्बपत्रनिशायुतम् ।
रक्तचन्दनमञ्जिष्ठासप्तपर्णवचान्वितम् ॥ १४६ ॥
मालतीपत्रसयुक्त विष तालशिलायुतम् ।
प्रलेपेन निहन्तीह व्रणान् कुष्ठसमुद्भवान् ॥ १४७ ॥
घृष्टमार्द्रकतोयेन विषमत्यल्पमात्रया ।
मद्य पूरणयोगेन कर्णशूलहर मतम् ॥ १४८ ॥
कदलीकन्दतोयेन विष भृङ्गाम्बुभावितम् ।
पूरणाद्विनिहन्तीह पुष्प नातिचिरोत्थितम् ॥ १४९ ॥
भृङ्गराजरसेनैव पूरणाच्च निशान्धताम् ।
विषाञ्जिते च नयने सिञ्चेद्धारा मुहुर्मुहु ॥ १५० ॥

विषप्रभाववर्तिका

विष तु तोलकमित निशास्वरसपेषितम् ।
विशोषिता रोगशिला भृङ्गराजद्रवेण तु ॥ १५१ ॥
श्लक्ष्णचूर्णीकृत शङ्ख त्वब्धिफेन च सैन्धवम् ।

कणाभया लोध्रनिशे बीजमक्षकरञ्जयोः ॥ १५२ ॥
वृक्षाम्ल मरिच चैव मञ्जिष्ठा रक्तचन्दनम् ।
सम सम समादाय त्वजाक्षीरेण पेषयेत् ॥ १५३ ॥
निर्मापयेद्भिषग्वर्यो वर्तिका[1] खलु शोभनाः ।
नामतस्तु समाख्याता भिषग्भिस्तु विषप्रभाः ॥ १५४ ॥
सद्घृष्टा वर्तिका वारा नेत्रयोर्विनियोजिता ।
शुक्रार्ममासपिच्छादीन् रोगान् नाशयति द्रुतम् ॥ १५५ ॥
शिरीषदलपुष्पाढ्य विष तु परिशीलितम् ।
समाघ्रात निःशेषेण भृशमाशुविषापहम् ॥ १५६ ॥
कदलीकन्दतोयेन विष साज्य प्रयोजितम् ।
अशनाल्लेपनाच्चैव हन्ति सर्पविष भृशम् ॥ १५७ ॥
गोतक्रेण समायुक्त विषमत्यल्पमात्रया ।
निपीत शमयत्येव विषमाखुकुलोद्भवम् ॥ १५८ ॥
विष तु तिलतैलेन घृष्ट लेपप्रयोगत. ।
विनिहन्त्यचिरादेव वृश्चिकार्ति सुदारुणाम् ॥ १५९ ॥
अर्कक्षीरेण लिप्त तु विषमत्यल्पमात्रया ।
सर्वासामेव लूताना विष जयति दारुणम् ॥ १६० ॥
कुष्ठैलानाकुचीमासीदेवदारुनतान्वितम् ।
विष पानप्रलेपाभ्या मत सर्वविषापहम् ॥ १६१ ॥
विषगर्भाभिध तैल नित्यमभ्यङ्गयोजितम् ।
मन्यास्तम्भ हनुस्तम्भ पक्षाघात परिग्रहम् ॥ १६२ ॥

---

१-विषगर्भतैल यथा-धत्तूरस्य रसस्य पञ्चकुडव तैल तथा काञ्जिक
प्रस्थानाञ्च चतुष्टय गदवचा त्रिशत्पर शाणका ।
ह्यद्धार्ग्रीमरिचात्पृथङ्नव विषात् षट् स्वर्णबीजात्पटो
स्युः सप्ताधिकविंशति परिमित तैलानिलध्वसनम् ॥

मर्माङ्गग्रहणं पृष्ठत्रिककम्पादिकं तथा ।
निहन्ति हि निःशेषेण निखिलानिलवेदनाः ॥ १६३ ॥

अथ उपविषगणनामानि

विषतिन्दुकबीजं च स्नुह्यहिफेनञ्च रेचकम् ।
धत्तूरबीजं विजया गुञ्जा भल्लातकाह्वयम् ॥ १६४ ॥
अर्कक्षीरं स्नुहीक्षीरं लाङ्गली करवीरकम् ।
समाख्यातो गणोऽयं तु बुधैरुपविषाभिधः ॥ १६५ ॥

अथ विषतिन्दुकस्य नामानि

कुचेलकः कुचेलश्च कुचिला कुचिलं तथा ।
विषतिन्दुस्तथा तिन्दुस्तिन्दुकं विषतिन्दुकम् ॥ १६६ ॥
कारस्करो रम्यफलः कुपाको विषमुष्टिका ।
विषमुष्टिः कालकूटस्तदेव विनिगद्यते ॥ १६७ ॥

विषतिन्दुकस्य परिचयः

कारस्करः समाख्यातः गिरिजातीयकस्तरुः ।
काण्डोऽस्य वक्रः स्थूलश्च काण्डत्वक् असितप्रभा ॥१६८॥
पत्रं तु वर्तुलं प्रायो मसृणं खल्वखण्डितम् ।
हरिद्वर्णं स्पष्टशिरं ह्रस्वकं पत्रवृन्तकम् ॥ १६९ ॥
कुसुमं लघु शुक्लञ्च हरिदाभञ्च कोमलम् ।
नारङ्गरङ्गं मसृणं फलं रम्यं सुवर्तुलम् ॥ १७० ॥
मज्जा शुभ्रा कोमला च बीजं वृत्तञ्च रोमशम् ।
बीजमेव चिकित्सायां विबुधैर्विनियुज्यते ॥ १७१ ॥
कोङ्कणे च तथा वङ्गे दक्षिणे च विशेषतः ।
देशेऽन्येषु च तथा जायते विषतिन्दुकम् ॥ १७२ ॥

विषतिन्दुकस्य प्रथमं शोधनप्रकारः

विषतिन्दुकबीजानि निन्यसेद् गृहवारिणि ।
दिनत्रयं प्रयत्नेन [illegible] वहिस्त्वचम् ॥ १७३ ॥

निदाघे चाथ सशोष्य चूर्णयेद्भिपजा वरः ।
एव विशुद्धिमायाति सर्वथा विपतिन्दुकम् ॥ १७४ ॥

द्वितीय शोधनप्रकार

कारस्करस्य बीजानि त्वतिमन्दाग्नियोगत' ।
निधाय पिष्टपचने तानदाज्येन भर्जयेत् ॥ १७५ ॥
यावद् बहिस्त्वचा किञ्चिज्जायते कपिशप्रभा ।
कुचेलमेव त्वरित शुद्धिमायात्यनुत्तमाम् ॥ १७६ ॥

तृतीय शोधनप्रकार

विपतिन्दुकबीजानि पोट्टल्या निन्यमेद्भिपक् ।
स्वेदयेद् गव्यपयसा दोलिकायन्त्रमार्गत ॥ १७७ ॥
एव यामैकमात्रेण शुद्धिमायान्त्यनुत्तमाम् ।
शोधित तिन्दुक त्वेव वीतशङ्कः प्रयोजयेत् ॥ १७८ ॥

विपतिन्दुकस्य गुणा

विपतिन्दुकमाग्नेय कटुक दीपन परम् ।
उग्रवीर्य तीक्ष्णसार कामोद्दीपनमुत्तमम् ॥ १७९ ॥
अम्लपित्तप्रशमन भूत्रल क्षुत्प्रदीपनम् ।
पाचन श्लेष्महरण बलसञ्जनन परम् ॥ १८० ॥
मेदोहर रुचिकर सारमेयविषापहम् ।
ग्रहणीहरमत्यन्त तथोन्मादविनाशनम् ॥ १८१ ॥
आध्मानापहमत्यन्त तथाजीर्णविनाशनम् ।
आमाशयोत्थशूलघ्न हृद्दौर्बल्यहर परम् ॥ १८२ ॥
श्वासप्रशमनश्चैव तथा फुप्फुसशोथनुत् ।
अर्धाङ्गार्दितवातघ्न नाडीबलनिबर्धनम् ॥ १८३ ॥
दुष्टनागाशनोद्भूत वा मदात्ययसम्भवम् ।
अर्धाङ्गवात हन्तीह भृशमङ्गविशेषगम् ॥ १८४ ॥

मांसपेशीशोषयुक्ते चैव कठिनपेशिके ।
पक्षाघाते न युञ्जीत स्पर्शानुभववर्जिते ॥ १८५ ॥
सदा ययात्ययकरं नाडीशूलनिबर्हणम् ।
अनिद्रापहमत्यन्तं गुदजामयनाशनम् ॥ १८६ ॥
राजयक्ष्मसमुद्भूतनिशास्वेदनिवारणम् ।
मानसश्रमसम्भूतावसादविनिषूदनम् ॥ १८७ ॥
अनिद्राजनितार्णिनाशनं दुग्धपाचनम् ।
अर्द्धावभेदकहरं श्रमकामनिबर्हणम् ॥ १८८ ॥
निम्ननिर्दिष्टरोगाणां तत्तल्लक्षणसम्भवे ।
कारस्करं प्रयुञ्जीत भृशमत्यल्पमात्रया ॥ १८९ ॥
निर्जनप्रियता चैव परा शोकालुता तथा ।
विनिहन्ति हि रुग्णानां तच्चद्वेतुनिशेषताम् ॥ १९० ॥
अम्लतिक्तरसोन्मिश्रानुद्गारान् नाशयत्यलम् ।
श्रमोत्था चिनदौर्बल्यसमेता मलबद्धताम् ॥ १९१ ॥
अत्यम्लरदनास्वादं नवं वा चिरकालजम् ।
आध्मानं नाशयत्याशु भोजनोत्तरकालिकम् ॥ १९२ ॥
चिन्तावसादसंयुक्तं दारुणाध्मानसंगतम् ।
अम्लपित्तसमुद्भूतमन्त्रशूलं व्यपोहति ॥ १९३ ॥
मलत्यागसमीहाढ्या मुहुर्नदनयान्विताम् ।
कष्टप्रवृत्ताल्पमलां नाशयेन्मलबद्धताम् ॥ १९४ ॥
अत्यल्पमूत्रस्रवणं सदाहं वेदनान्वितम् ।
मूत्रणेच्छापरिगतं मूत्ररोधं निवारयेत् ॥ १९५ ॥
रक्तातिसारसंयुक्तं दीर्घकालानुबन्धिनम् ।
रजःस्रावं निहन्त्याशु समयात्पूर्वकालिकम् ॥ १९६ ॥
संवेदना तथा पीतदुर्गन्धास्रावसंयुताम् ।

निनिहन्ति विशेषेण श्वेतप्रदरजां रुजम् ॥ १९७ ॥
रात्रौ निद्रायमाणस्य विरुद्धां पृष्ठदेशजाम् ।
वेदनां शमयत्याशु तथैव कटिवेदनाम् ॥ १९८ ॥
दिने तु स्रवदास्राव निशि स्रावविवर्जितम् ।
व्यपोहति विशेषेण प्रतिश्यायं नवोत्थितम् ॥ १९९ ॥
भक्षणोत्तरज श्वास हन्ति पित्तसमुत्थितम् ।
अनारत जायमान वर्त्मस्पन्दनक तथा ॥ २०० ॥
रात्रिजागरणोद्भूत तथा मद्यशनोत्थितम् ।
विवर्द्धमान प्रत्यूषे सशब्द तृष्णयान्वितम् ॥ २०१ ॥
आलोहित घनश्चैव काम सलिलसन्निभम् ।
समुल्वण विशेषेण विनिहन्त्युदरामयम् ॥ २०२ ॥
मुहुर्मुहुर्मलत्यागवाञ्छयातिनिपीडितम् ।
कष्टप्रवृत्ताल्पमल विनिहन्ति गुदामयम् ॥ २०३ ॥

विपतिन्दुकस्य मात्रा

आरम्य गुञ्जापादांशाद् गुञ्जैकप्रमित परम् ।
मात्राविद्विनियुञ्जीत विमल विपतिन्दुकम् ॥ २०४ ॥

विपतिन्दुकस्य आमयिक प्रयोग

नवजीवनरस

कुचेलक सुनिर्मल तोलकद्वयसमितम् ।
लोह द्वितोलकमित रससिन्दूरक तथा ॥ २०५ ॥
पलार्द्ध न्यूपणश्चैव समादायार्द्रकद्रवैः ।
विमर्द्य कारयेद्वैद्यो वटिका रक्तिकोन्मिताः ॥ २०६ ॥
रसोऽय तु समाख्यातो नवजीवनसज्ञकः ।
नवजीवनमेतद्धि ददाति नवजीवनम् ॥ २०७ ॥
दीपन पाचनश्चैव बलसञ्जनन परम् ।
नाडीबलप्रजनन रतिशक्तिविवर्द्धनम् ॥ २०८ ॥

मासपेशीशोपयुते नवे कठिनपेशिके ।
पक्षाघाते न युञ्जीत स्पर्शानुभवर्जिते ॥ १८५ ॥
मदात्ययात्ययकरं नाडीशूलनिवर्हणम् ।
अनिद्रापहमत्यन्तं गुदजामयनाशनम् ॥ १८६ ॥
राजयक्ष्मसमुद्भूतनिशास्वेदनिवारणम् ।
मानसश्रमसम्भूतावसादविनिषूदनम् ॥ १८७ ॥
अनिद्राजनिताजीर्णनाशनं दुग्धपाचनम् ।
अर्द्धावभेदकहरं श्रमकासनिवर्हणम् ॥ १८८ ॥
निम्ननिर्दिष्टरोगाणां तत्तल्लक्षणसम्भवे ।
कारस्करं प्रयुञ्जीत भृशमत्यल्पमात्रया ॥ १८९ ॥
निर्जनप्रियता चैव परा क्रोधालुता तथा ।
विनिहन्ति हि रुग्णानां तत्तद्धेतुविशेषजाम् ॥ १९० ॥
अम्लतिक्तरसोन्मिश्रानुद्गारान् नाशयत्यलम् ।
श्रमोत्था चित्तदौर्बल्यसमेतां मलबद्धताम् ॥ १९१ ॥
अत्यम्लवदनास्वादं नवं वा चिरकालजम् ।
आध्मानं नाशयत्याशु भोजनोत्तरकालिकम् ॥ १९२ ॥
चित्तावसादसंयुक्तं दारुणाध्मानसंगतम् ।
अम्लपित्तसमुद्भूतमन्त्रशूलं व्यपोहति ॥ १९३ ॥
मलत्यागसमीहाढ्यां मुहुर्वेदनयान्विताम् ।
कष्टप्रवृत्ताल्पमलां नाशयेन्मलबद्धताम् ॥ १९४ ॥
अत्यल्पमूत्रस्रवणं सदाहं वेदनान्वितम् ।
मूत्रणेच्छापरिगतं मूत्ररोधं निवारयेत् ॥ १९५ ॥
रक्तातिस्रावसंयुक्तं दीर्घकालानुबन्धिनम् ।
रक्तस्रावं निहन्त्याशु समयार्त्तवकालिकम् ॥ १९६ ॥
सवेदनां तथा पीनदुर्गन्धास्रावसंयुताम् ।

विनिहन्ति विशेषेण श्वेतप्रदरजां रुजम् ॥ १९७ ॥
रात्रौ निद्रायमाणस्य निरुद्धां पृष्ठदेशजाम् ।
वेदनां शमयत्याशु तथैव कटिवेदनाम् ॥ १९८ ॥
दिने तु स्रवदाम्रावं निशि स्रावविवर्जितम् ।
व्यपोहति विशेषेण प्रतिश्याय नवोत्थितम् ॥ १९९ ॥
भक्षणोत्तरज श्वास हन्ति पित्तसमुत्थितम् ।
अनारत जायमान वर्त्मस्पन्दनक तथा ॥ २०० ॥
रात्रिजागरणोद्भूत तथा बह्वशनोत्थितम् ।
निर्द्धमान प्रत्यूषे सशब्द तृष्णयान्वितम् ॥ २०१ ॥
आलोहित घनश्चैव काम सलिलसन्निभम् ।
समुल्वण विशेषेण विनिहन्त्युदरामयम् ॥ २०२ ॥
मुहुर्मुहुर्मलत्यागवाञ्छयातिनिपीडितम् ।
कष्टप्रवृत्ताल्पमल विनिहन्ति गुदामयम् ॥ २०३ ॥

विषतिन्दुकस्य मात्रा

आरभ्य गुञ्जापादांशाद् गुञ्जैकप्रमित परम् ।
मात्राविद्विनियुञ्जीत विमल विषतिन्दुकम् ॥ २०४ ॥

विषतिन्दुकस्य आमयिक प्रयोग

नवजीवनरस

कुचेलक सुनिर्मल तोलकद्वयसमितम् ।
लोह द्वितोलकमित रससिन्दूरक तथा ॥ २०५ ॥
पलार्द्धं त्र्यूषणञ्चैव समादायार्द्रकद्रवैः ।
विमर्द्य कारयेद्वैद्यो वटिका रक्तिकोन्मिताः ॥ २०६ ॥
रसोऽय तु समाख्यातो नवजीवनसञ्ज्ञकः ।
नवजीवनमेतद्धि ददाति नवजीवनम् ॥ २०७ ॥
दीपन पाचनञ्चैव बलमञ्जननं परम् ।
नाडीबलमजनन रतिशक्तिविवर्द्धनम् ॥ २०८ ॥

अन्त्रशूलहरं कामं त्वाध्मानविनिवारणम् ।
मलबन्धहरं चैव तथातीसारनाशनम् ॥ २०९ ॥
अर्द्धावभेदकहरं रक्तमञ्जननं परम् ।
शूलापहं मानसिकश्रमोद्भूतावसादनुत् ॥ २१० ॥

अग्नितुण्डीरसः

अमृतं तोलकमितं जीरकञ्च फलत्रिकम् ।
रसेश्वरं सुविमलं वह्निश्चैव विडङ्गकम् ॥ २११ ॥
सौवर्चलं च सामुद्रं सौभाग्यं सैन्धवं तथा ।
सर्जिक्षारं यवक्षारं चित्रकं त्वजमोदिकाम् ॥ २१२ ॥
कुचेलकं सुविमलं सर्वेषां समभागिकम् ।
समादाय भिषग्वर्यो जम्बीराम्लेन मर्दयेत् ॥ २१३ ॥
निर्मापयेत्ततो यत्नाद्वटिका रक्तिकोन्मिता ।
नामतस्तु समाख्यातास्त्वग्नितुण्डीरसाख्यया ॥ २१४ ॥
अग्नितुण्डीरसो ह्येष दीपनं पाचनं परम् ।
अग्निमान्द्यप्रशमनो नाडीबलविवर्द्धनः ॥ २१५ ॥
गुदामयप्रशमनस्तथातीसारनाशनः ।
कटिपृष्ठसमुद्भूतां नाशयेद्वातवेदनाम् ॥ २१६ ॥

लक्ष्मीविलासो रसः

कुचेलकं सुविमलं रसतोलकसम्मितम् ।
सुपुष्पितं च सौभाग्यं मरिचं चैव तन्मितम् ॥ २१७ ॥
लोहं द्विकर्षप्रमितं गन्धेशौ द्व्येकभागिकौ ।
सर्वं सम्मेल्य यत्नेन भावयेदार्द्रकद्रवैः ॥ २१८ ॥
वरीभूधात्रिकाभृङ्गस्वरसेन च भावयेत् ।
निर्मापयेत्प्रयत्नेन वटिका रक्तिकोन्मिता ॥ २१९ ॥
समाख्यातो रसो लक्ष्मीविलास इति नामतः ।
तारुण्यलक्ष्मीमतुलां प्रददाति रसो ह्ययम् ॥ २२० ॥

रोगदुर्बलदेहाना कृशाना क्षीणरेतसाम् ।
देहपुष्टिकरः कामं तथा वीर्यविवर्द्धन' ॥ १२१ ॥
बलवर्णकरो वृष्यो वह्निमान्द्यविनाशन' ।
रक्तसञ्जननश्चैव तथा लावण्यवर्द्धन ॥ २२२ ॥

### शूलनिर्मूलनरस

त्र्यूपण गन्धपापाण मरिच शङ्खभस्मकम् ।
सैन्धव रससिन्दूर जीरक चाम्लवेतसम् ॥ २२३ ॥
सर्वार्द्धभागिकश्चैव विमल विषतिन्दुकम् ।
आदाय भिषजा वर्यः भृङ्गराजस्य वारिणा ॥ २२४ ॥
विभाव्य कारयेद्यत्नाद्वटिका रक्तिकोन्मिता. ।
रसोऽय तु समाख्यात शूलनिर्मूलनाभिधः ॥ २२५ ॥
दीपन पाचनश्चाय वह्निमान्द्यप्रणाशन. ।
अतीसारग्रहणिकाविषूचीविनिवारण. ॥ २२६ ॥
बलवर्णकरो वृष्यो गुल्मामयनिषूदनः ।
रसोऽय शूलदलने बहुशो दृष्टप्रत्यय' ॥ २२७ ॥

### सुप्तिवातारि रस

कर्पकप्रमित शुद्ध विषतिन्दुकबीजकम् ।
समा कज्जलिका चैव समगन्धेशसाधिता ॥ २२८ ॥
त्र्यूपण च पलार्द्ध स्यान्निर्गुण्डीद्रवयोगतः ।
ब्रह्मबीजद्रवेणापि भावयेत्सप्तवारकम् ॥ २२९ ॥
निर्मापयेत्प्रयत्नेन वटी गुञ्जाद्वयोन्मिता ।
रसोऽय सुप्तिवाताख्य. सुप्तिवातनिषूदनः ॥ २३० ॥

### सारमेयविषापहो योग

विषतिन्दुकबीज तु प्रत्यहं परिशीलितम् ।
निहन्ति कुक्कुरविष खलु मासिकमात्रत' ॥ २३१

विषतिन्दुकस्य बाह्यप्रयोग
विषतिन्दुकतैलम्

विषतिन्दुकबीज तु तोलकैकमित शुभम् ।
तिलतैले तु विमले तोलकाष्टकसम्मिते ॥ २३२ ॥
मन्दाग्निना पचेत्तावधानदायाति रक्तताम् ।
एतत्प्रजायते रम्य विषतिन्दुकतैलकम् ॥ २३३ ॥
विषतिन्दुकतैलन्तु भृशमभ्यङ्गयोजितम् ।
पक्षाघातादिकान् रोगान् विनिहन्त्यविकल्पत ॥ २३४ ॥

अथ अहिफेनस्य नामानि

अहिफेनमफेनश्च निफेनमहिफेनकम् ।
अफूक फणिफेनश्च नागफेनश्च तन्मतम् ॥ २३५ ॥

अहिफेनस्य परिचय

खस्तिलस्य फलाना तु चीरणात्खलु दुग्धवत् ।
निर्यासो योऽभिनिर्याति सैवाफेनाख्यया मत ॥ २३६ ॥

खस्तिलनिर्यासस्य निर्मलीकरणम्

खस्तिलस्य तु निर्यास सलिले तु सुनिर्मले ।
सन्द्राव्य खलु यत्नेन वस्त्रपूतन्तु कारयेत् ॥ २३७ ॥
निर्मलीकृतमेतत्तु खस्तिलद्रवतोयकम् ।
गव्यदुग्धसमायुक्त पचेन्मन्दाग्नियोगत ॥ २३८ ॥
पाककाल सुविज्ञाय पाकविद्भिषजा वर ।
समाहरेत्प्रयत्नेन त्वफेन निर्मलीकृतम् ॥ २३९ ॥

खस्तिलनिर्यासनिर्मलीकरणस्य प्रयोजनम्

विक्रीयते विपण्या यत्त्वफेन खलु साम्प्रतम् ।
द्रव्यान्यथोगाद्धृतादिभावितत्वाच गर्हितम् ॥ २४० ॥
खस्तिलस्य तु निर्यासमादायातो भिषग्वर ।
स्वय सुनिर्मलीकृत्य शोधयेच्च प्रयोजयेत् ॥ २४१ ॥

अहिफेनस्य शोधनम्

निर्मलं त्वहिफेनं तु शृङ्गवेरस्य वारिणा ।
विभावितं सप्तवारं शुद्धिमायात्यनुत्तमाम् ॥ २४२ ॥

अहिफेनस्य गुणाः

अहिफेनं सुतिक्तं तु निद्राजनकमुत्तमम् ।
ग्राहि चैव विशेषेण वेदनाविनिवारणम् ॥ २४३ ॥
सन्निपातप्रशमनं तथा वमिनिषूदनम् ।
पुरातनं नवं वापि विनिहन्त्यतिसारकम् ॥ २४४ ॥
निहन्त्यामाशयोद्भूतक्षतमासार्बुदव्यथाम् ।
मद्यपानोत्थशोथस्य व्यथाश्चामाशयाश्रयाम् ॥ २४५ ॥
अपानवायोर्भुक्तान्नबहिर्निःसारणात्मिकाम् ।
क्रियां निरुद्धां चपलां ह्रासयत्यविकल्पतः ॥ २४६ ॥
प्रथमायामवस्थायामर्तीसारैकलक्षणाम् ।
विनिहन्ति विशेषेण विषूचीमतिदारुणाम् ॥ २४७ ॥
सातिसारं सप्रलापं पर्याकुलमनिद्रया ।
निपातयेत्सन्निपातमान्त्रिकज्वरमञ्जकम् ॥ २४८ ॥
प्रवाहिकाप्रशमनं त्वन्त्रशूलविनाशनम् ।
मदात्ययहरं चैव तथोन्मादनिबर्हणम् ॥ २४९ ॥
रजःशूलप्रशमनमस्थिमग्नव्यथापहम् ।
नवामवातशमनं हितमस्थिच्युतौ तथा ॥ २५० ॥
शुष्ककासप्रशमनं गर्भस्रावनिषूदनम् ।
राजयक्ष्मसमुद्भूतनिशास्वेदनिवारणम् ॥ २५१ ॥
हृद्धमन्योर्गते काम मन्दीकरणकारणात् ।
अन्त्रोत्थं फुफ्फुसोत्थं वा रक्तस्रावं व्यपोहति ॥ २५२ ॥
श्लेष्माधिक्याद् मुहुर्वेगं कफनिर्गमवर्जितम् ।

कण्ठकण्डूसमुत्थं या कासं नाशयति द्रुतम् ॥ २५३ ॥
नाडीनां धमनीनां च यस्माद् हृदयस्य च ।
नैसर्गिकीं प्रवृद्धां यां गतिं मन्दयति द्रुतम् ॥ २५४ ॥
तस्माद्धृदयरोगेषु रसतन्त्रविचक्षणः ।
अहिफेनं प्रयुञ्जीत सावधानतया सदा ॥ २५५ ॥

अहिफेनस्य निषेधः

न बालेषु न वृद्धेषु मधुमेहप्रपीडिते ।
शीतपादकरायाञ्च निपूया खलु नैव च ॥ २५६ ॥
न श्लैष्मिके तथा कासे प्रचुरश्लेष्मनिर्गमे ।
अहिफेनं वृक्कशोथे प्रयुञ्जीत न कर्हिचित् ॥ २५७ ॥

बाह्यप्रयोगे अहिफेनस्य गुणाः

अहिफेनं विशेषेण खलु बाह्यप्रयोगतः ।
फुप्फुसच्छदशोथघ्नं त्वक्सावरणशोथनुत् ॥ २५८ ॥
विविधोत्थानसम्भूता विविधस्थानसंश्रयाम् ।
तथा विविधसंस्थाना वेदना विनिहन्त्यलम् ॥ २५९ ॥
अभिष्यन्दप्रशमनं कर्णशूलनिबर्हणम् ।
कृमिदन्तोत्थशूलघ्नं त्वामवातापहं तथा ॥ २६० ॥
गुदामयहरश्चैव पायुस्थविदरापहम् ।
व्रणपीडाप्रशमनं नाडीनामवसादनम् ॥ २६१ ॥

अहिफेनस्य मात्रा

आरभ्य गुञ्जापादांशाद् गुञ्जैकप्रमितं शुभम् ।
अहिफेनं प्रयुञ्जीत बलकालाद्यपेक्षया ॥ २६२ ॥

अहिफेनस्य आमयिकः प्रयोगः

पिण्डखर्जूरसंयुक्तं फणिफेनं तु शीलितम् ।
नाशयत्यतिसारेण गर्भस्रावमसंशयम् ॥ २६३ ॥

अर्कमूलत्वचाचूर्णसयुक्त त्वहिफेनकम् ।
शीलित त्वचिरादेव विनिहन्ति प्रनाहिकाम् ॥ २६४ ॥
एलालाक्षारजोयुक्त फणिफेन तु शीलितम् ।
रक्तस्राव निहन्त्याशु फुप्फुमोत्थ सुदारुणम् ॥ २६५ ॥
रसाञ्जनसमायुक्त शिलाघृष्ट त्वफेनकम् ।
योजित विनिहन्त्याशु त्वभिष्यन्दभवा रुजम् ॥ २६६ ॥

वेदनान्तकरस

अहिफेन सुविमल मापकत्रयसमितम् ।
घनसार सम तुल्या पारसीकयवानिकाम् ॥ २६७ ॥
रससिन्दूरकञ्चैव रसमापकसमितम् ।
आदाय पेषयेद्यत्नाद् विजयाद्रवयोगत ॥ २६८ ॥
निर्मापयेत्तु वटिका रक्तिकाद्वयसमिताः ।
रसोऽय तु समाख्यातो वेदनान्तकसञ्ज्ञक ॥ २६९ ॥
रोगोऽयमम्भसा युक्तो विनिहन्ति विशेषतः ।
विविधोत्थानसस्थाना वेदना विविधाश्रयाम् ॥ २७० ॥

निद्रोदयरस

अहिफेन सुविमल रसमापकसमितम् ।
तन्मिता च तुगाक्षीरीं रससिन्दूरक तथा ॥ २७१ ॥
धात्रीचूर्ण तोलकैक समादाय भिषग्वर ।
विभावयेत्प्रयत्नेन विजयावारिणा त्रिधा ॥ २७२ ॥
निर्मापयेत्तु वटिका रक्तिद्वितयसमिताः ।
रसोऽय तु समाख्यातो निद्रोदयसमाह्वयः ॥ २७३ ॥
तत्तद्गदैर्वेदनयार्दितानां
पुसा सुखस्वापकरोऽतिवेलम् ।
यथार्थनामा समुदीरितोऽय

रसस्तु निद्रोदयनामधेय' ॥ २७४ ॥

सिन्दूरभूषणरस

अहिफेन सुविमल रसमापकमभितर ।
तत्सम सुमृत स्वर्ण घनसारञ्च तन्मितम् ॥ २७५ ॥
रुचिर रससिन्दूर तोलकद्वयसमितम् ।
एलाबीज तुगाक्षीरी पृथक् तोलकममितर ॥ २७६ ॥
समादाय ततो मुस्तक्काथेन परिपेष्य तु ।
निर्मापयेत्तु वटिका रक्तिकाद्वयममिता· ॥ २७७ ॥
रसोऽय तु समाख्यातो नाम्ना सिन्दूरभूषण ।
महौषधमिद ख्यातमतीसारप्रशुत्तये ॥ २७८ ॥

हर्षोदया वटी

फणिफेन सुविमल तोलकैकमित शुभम् ।
कस्तूरिकाञ्च कर्पूर पृथक् मापत्रयोन्मितर ॥ २७९ ॥
मरिच रससिन्दूर पृथक् तोलकसमितम् ।
जातीफल जातिपत्री कुङ्कुम शुद्धमिङ्गुलम् ॥ २८० ॥
समाहरेत्पृथग्वैद्यो रसमापकमभितम् ।
विजयास्वरसेनेह त्रिवार खलु भावयेत् ॥ २८१ ॥
कारयेद्वटिका यत्नाद् गुञ्जाद्वितयसमिता· ।
वटिकेय समाख्याता तुर्यहर्षोदयाभिधा ॥ २८२ ॥
बलवर्णाग्निजननी प्रमदामदमर्दिनी ।
वीर्यसस्तम्भनी ह्येपा विशेषेण प्रकीर्तिता ॥ २८३ ॥
ताम्बूलवीटिकोपेता वटीय परिशीलिता ।
मासमात्रप्रयोगेण ददाति विपुल बलम् ॥ २८४ ॥
पृथुसन्तानिकोपेत प्रतप्त माहिष पयः ।
तथा मापान्नपिष्टानि सेवयेत्प्रत्यह पुमान् ॥ २८५ ॥

स्मरस्मयस्मेरविलोचनाभि-
विलासिनीभिः परितर्जितानाम् ।
यतः प्रहर्षं प्रकरोति यूनां
हर्षोदया सार्थकनामिकातः ॥ २८६ ॥

अहिफेनासव

अहिफेनं सुनिर्मलं तोलकत्रयसम्मितम् ।
पञ्चाशत्तोलकमितां मृतसञ्जीवनीं सुराम् ॥ २८७ ॥
समादाय भिषग्वर्यः काचकुप्यां तु विन्यसेत् ।
ततः काचपिधानेन रोधयेत् कूपिकामुखम् ॥ २८८ ॥
ततः कूपीं सुनिभृते स्थापयेत् सप्तवासरम् ।
अहिफेनासवो नाम्ना समाख्यातो भिषग्वरैः ॥ २८९ ॥

अस्य गुणा

विविधोत्थानसम्भूतातीसारविनिषूदनः ।
कर्णशूलप्रशमनो दन्तशूलनिबर्हणः ॥ २९० ॥
अस्थिभग्नादिसम्भूतां तथास्थिच्युतिसम्भवाम् ।
वेदनां नष्टहेतूत्थां विनिहन्त्यतिसत्वरम् ॥ २९१ ॥
विविधोत्थानजातानां वेदनानां निवृत्तये ।
महौषधमिदं ख्यातं रसतन्त्रविचक्षणैः ॥ २९२ ॥

अस्य मात्रा

आरभ्य शरबिन्दुभ्यस्तिथिबिन्दुमितं परम् ।
अहिफेनासवं युञ्ज्याद् बलकालाद्यपेक्षया ॥ २९३ ॥

अहिफेनासवस्य आमयिक प्रयोग

अहिफेनासवोऽयं तु मात्रया परिशीलितः ।
विविधोत्थानसम्भूतं नूतनं वा पुरातनम् ॥ २९४ ॥
सुदारुणमतीसारमतीसारकलक्षणाम् ।
विपूचीं च निहन्त्याशु यथा सूर्यस्तमस्ततिम् ॥ २९५ ॥

बिन्दुक्षेपणयन्त्रेण निक्षिप्तं कर्णयोरयम् ।
अत्यल्पमात्रयैवेह कर्णशूलं व्यपोहति ॥ २९६ ॥
अहिफेनासवे सिक्तं तूलं तु कृमिदन्तके ।
न्यस्तं नातिचिरादेव वेदनां हन्ति तज्जनाम् ॥ २९७ ॥

मङ्गलोदया वटी

फणिफेनं सुनिर्मलं माषकैकमितं शुभम् ।
उत्तमं घनसारं च सप्तमाषकसम्मितम् ॥ २९८ ॥
सम्पेष्य वारिणा यत्नाद्वटिका रक्तिकोन्मिताः ।
कारयेद्भिषजां वर्यो रसतन्त्रविचक्षणः ॥ २९९ ॥
नामतस्तु समाख्याता वटिका मङ्गलोदया ।
प्रलापादिप्रशुत्यर्थं मता हिततमा परम् ॥ ३०० ॥

वेदनान्तकमलहर

सिक्थतैलं सुनिर्मलं ग्रहतोलकसम्मितम् ।
फणिफेनञ्च निर्मलं ग्रहमाषकसम्मितम् ॥ ३०१ ॥
फणिफेनमितश्चैव खलु हेरम्बभूषणम् ।
समादाय भिषग्वर्यः खल्वे सम्मेलयेत्ततः ॥ ३०२ ॥
काचकुप्यां निधायाथ पिधानेन निरोधयेत् ।
मतो मलहरोऽयं तु वेदनान्तकसञ्ज्ञकः ॥ ३०३ ॥
वेदनां शमयत्याशु गुदाङ्कुरसमाश्रयाम् ।
पायुस्थविदराद्भूतां वेदनाञ्चातिदारुणाम् ॥ ३०४ ॥
गुदाङ्कुरप्रशमनः पायुस्थविदरान्तकः ।
मतो मलहरोऽयं तु वेदनान्तकसञ्ज्ञकः ॥ ३०५ ॥

अथ जयपालस्य नामानि

जयपालश्च जेपालो रेचकः सारकस्तथा ।
विभेदनो मलद्रावी स एव परिकीर्तितः ॥ ३०६ ॥

### जयपालस्य परिचय

नात्युच्छ्रितो नातिह्रस्वो दन्तीजातीयकस्तरुः ।
अधुना तु विशेषेण देशे पञ्चनदाह्वये ॥ ३०७ ॥
तथैव सिंहलद्वीपे द्वीपेष्वन्येषु जायते ।
बीज तस्य भिषग्वर्यैर्जयपाल इति स्मृतः ॥ ३०८ ॥
दन्तीबीजात् क्षुद्रतर बीजमस्य तु यद्यपि ।
पर तीव्रतरा शक्तिर्दृश्यते मलभेदने ॥ ३०९ ॥

### जयपालस्य प्रथम शोधनप्रकार

जयपालस्य बीजानि नवानि तु समाहरेत् ।
बाह्यत्वचमपाकृत्य द्विधा खलु विभेदयेत् ॥ ३१० ॥
हरिद्वर्णां नातिदीर्घां रसना तु परित्यजेत् ।
पोट्टल्यामथ विन्यस्य दोलायन्त्रे विधानत ॥ ३११ ॥
गव्यदुग्धे प्रयत्नेन यामैक स्वेदयेत्तत ।
एव त्रिवार सुस्विन्नो जयपालो विशुद्ध्यति ॥ ३१२ ॥

### द्वितीय शोधनप्रकार

त्वग्रसज्ञाविरहित जयपालस्य बीजकम् ।
वस्त्रशद्कणोपेत पोट्टल्या रोधयेद् दृढम् ॥ ३१३ ॥
स्वेदयेद् दोलिकायन्त्रे द्वियाम गव्यदुग्धतः ।
इत्थ स्विन्नस्तु जेपाल शुद्धिमायात्यनुत्तमाम् ॥ ३१४ ॥

### तृतीय शोधनप्रकार

जयपाल त्वग्रसज्ञारहित पोट्टलीगतम् ।
दोलायन्त्रे तु यामैक स्वेदयेद् गव्यदुग्धत ॥ ३१५ ॥
सम्पेष्य खल्वे नूतनेषु खर्परेषु प्रलेपयेत् ।
विज्ञाय विगतस्नेह जयपाल समाहरेत् ॥ ३१६ ॥
न्यसेद्वा यत्नतो मध्ये मषीशोषकपत्रयोः ।
एव तु विगतस्नेहो रेचकः शुद्धिमाप्नुयात् ॥ ३१७ ॥

जयपालस्य गुणा

जयपालो मतस्तिक्तो विरेचनकरः परम् ।
जलोदरप्रशमनो नवज्वरनिबर्हण ॥ ३१८ ॥
कृमिहारी कुष्ठहरो वातश्लेष्मनिषूदनः ।
वान्तिकृत्पित्तजननो वृश्चिकादिविषप्रणुत् ॥ ३१९ ॥

जयपालस्य मात्रा

अष्टमाशाद्रक्तिकाया रक्तिकाचरणाशिकम् ।
जयपाल प्रयुञ्जीत भेषजै. सह योजितम् ॥ ३२० ॥

जयपालस्य आमयिक प्रयोग

इच्छाभेदी रस

टङ्कण मरिच सूत गन्धक विश्वभेषजम् ।
समाहरेद्भिषग्वर्यस्तोलकैकमित पृथक् ॥ ३२१ ॥
विशुद्ध जयपाल च तोलकत्रयसमितम् ।
समादाय सुसम्पेष्य सार्द्धगुञ्जैकममिता ॥ ३२२ ॥
वटिका' कारयेद्वैद्यो द्विगुञ्जप्रमितास्तथा ।
इच्छाभेदीरसोऽय तु नामत परिकीर्तित ॥ ३२३ ॥
शीततोयेन वटिका सार्द्धगुञ्जैकममिताम् ।
मृदुकोष्ठे नागरिके मितया विनियोजयेत् ॥ ३२४ ॥
क्रूरकोष्ठेषु शूरेषु ग्रामीणेषु तु कोविद ।
प्रयुञ्जीत सितोपेता वटीं गुञ्जद्वयोन्मिताम् ॥ ३२५ ॥
वटीं भुक्त्वा जल शीत यावद्वार तु पीयते ।
तावद्वार विरिच्यन्ते मनुजा नात्र सशय ॥ ३२६ ॥
विरेचननिवृत्त्यर्थं कामष्णोदक पिबेत् ।
विरेकान्ते प्रयोक्तव्य पथ्य तक्रौदन खलु ॥ ३२७ ॥
प्रशान्तरेचन. पुमान् प्रयत्नतस्तु यामकम् ।
पिबेन्न शीतल जल विरिच्यते पुनर्यत ॥ ३२८ ॥

जलोदरारिरस

सुमृत रविलोहञ्च पिप्पलीं रसगन्धकम् ।
मरिच रजनीचूर्णं पृथक् तोलकसमितम् ॥ ३२९ ॥
नवं विशुद्ध जैपाल युगतोलकसमितम् ।
आदाय वारत्रितय त्रिवृत्क्वाथेन भावयेत् ॥ ३३० ॥
निर्मापयेत्प्रयत्नेन वटिका रक्तिकोन्मिताः ।
जलोदरारिर्नाम्नाय रसः ख्यातो भिषग्वरैः ॥ ३३१ ॥
रसोऽय रेचनकरो जलोदरहरस्तथा ।
निरेकस्तम्भनार्थञ्च हित दध्योदन मतम् ॥ ३३२ ॥

ज्वरारिरस

हिङ्गुल पिप्पली शुण्ठी मरिच विश्वभेषजम् ।
सौभाग्यममृत धात्री पृथक् तोलकसमितम् ॥ ३३३ ॥
जयपालं पलमित नव सुविमलीकृतम् ।
सम्पेष्यार्द्रकतोयेन वटीं गुञ्जकसमिताम् ॥ ३३४ ॥
निर्मापयेत्प्रयत्नेन, ज्वरारिर्नामतो मतः ।
समाख्यातो विशेषेण नवज्वरनिबर्हणः ॥ ३३५ ॥

अञ्जनभैरवरस

सूतगन्धकणाटङ्क पृथगेकैकभागिकम् ।
जयपाल सुविमल सर्वेपामर्द्धभागिकम् ॥ ३३६ ॥
आदाय निम्बुकद्रावै पेपयेदतियत्नतः ।
छायायामथ सशोष्य काचकूप्यान्तु विन्यसेत् ॥ ३३७ ॥
रसोऽय तु समाख्यातो नाम्ना ह्यञ्जनभैरव' ।
अञ्जनाद्विनिहन्त्याशु सन्निपात सुदारुणम् ॥ ३३८ ॥

वृश्चिकविषहर प्रलेप

जलपिष्टस्तु जैपालो यत्नत' परिलेपितः ।
विपं वृश्चिकदंशोत्थ विनिहन्ति विशेषतः ॥ ३३९ ॥

जयपाल्युक्तयोगाना निषेध

बाले वृद्धे कृशे क्षीणे गर्भिण्याञ्च गुदामये ।
प्रवाहिकाया, शोथे च रुजामपक्वाशयाश्रिते ॥ ३४० ॥
गुदभ्रंशे चान्त्रशोथयुते बद्धगुदोदरे ।
तथान्त्रच्छदशोथे च जयपाल न योजयेत् ॥ ३४१ ॥

## अथ धत्तूरस्य नामानि

धत्तूरः कितवोन्मत्तौ धूर्तश्च कनकाभिध ।
शठश्च कण्टकफलः कीर्तित' शिवशेखरः ॥ ३४२ ॥

धत्तूरस्य परिचय

धत्तूर क्षुपजातीय सकण्टकफलस्तथा ।
सुलभो, भिद्यते चाय पुष्पवर्णविभेदतः ॥ ३४३ ॥
धत्तूरा सर्व एवैते मता समगुणान्विता ।
विशेषतस्तु मर्त्येषु कृष्णपुष्पो गुणाधिक ॥ ३४४ ॥
पत्र मूल फल बीज तथा मृदुदलद्वय ।
प्रयुज्यते विशेषेण धत्तूरस्य भिषग्वरै ॥ ३४५ ॥

धत्तूरबीजाना प्रथम शोधनप्रकार

धत्तूरबीजान्यादाय पोट्टल्या रोधयेत्तत. ।
स्वेदयेद्दोलिकायन्त्रे गव्यदुग्धेन यामकम् ॥ ३४६ ॥
सस्वेद्य क्षालयेदुष्णतोयेन तु ततो भिषक् ।
इत्थ शुद्धानि बीजानि वीतशङ्क' प्रयोजयेत् ॥ ३४७ ॥

द्वितीय शोधनप्रकार

नवानि धूर्तबीजानि दोलिकायन्त्रयोगत ।
स्वेदयेद्गव्यमूत्रेण यामैक पोट्टलीगतम् ॥ ३४८ ॥

खलेऽथ खलु सम्पेष्य वस्त्रपूत तु कारयेत् ।
इत्थ शुद्धानि वीजानि वीतशङ्क' प्रयोजयेत् ॥ ३४९ ॥

धत्तूरस्य गुणा

धत्तूर' कटुकश्चोष्णस्तथा शोथनिपूदनः ।
कृमिघ्नः कुष्ठशमनो विशेषाज्ज्वरनाशनः ॥ ३५० ॥
पर त्वग्दोपशमनस्तथा कण्डूतिकापहः ।
भ्रमकृन्मोहजननः समाख्यातो भिपग्वरै. ॥ ३५१ ॥

धत्तूरस्य विशिष्टा गुणा

धत्तूर' श्वासशमन. कफसशोपण. परम ।
आक्षेपोन्मादहरणः स्तम्भनो हर्षवर्द्धनः ॥ ३५२ ॥
अभिष्यन्दप्रशमनः कर्णशूलनिवर्हणः ।
मनेदनार्बुदहरो लसीकाग्रन्थिशोथहृत् ॥ ३५३ ॥
कृमिदन्तव्यथाहारी स्वामवातव्यथाहरः ।
स्तनशोथप्रशमनः प्रलापपरिकृन्तनः ॥ ३५४ ॥
भूतापहस्तथोन्मत्तसारमेयविपापह. ।
कटिव्यथाहरः कान्ताकामोन्मादनिनाशनः ॥ ३५५ ॥
निम्ननिर्दिष्टरोगेषु धत्तूरोऽस्त्यल्पमात्रया ।
विशेषेण प्रयोक्तव्य इति सद्भिपजा मतम् ॥ ३५६ ॥
विविधस्थानसम्भूता खलु शोथसमुत्थिताम् ।
वेदना विविधाकारा विनिहन्ति विशेषतः ॥ ३५७ ॥
प्राकृतिकज्वरोत्थ वा सन्निपातसमुत्थितम् ।
भृशदुर्गन्धपीताभकृष्णवर्णमलान्वितम् ॥ ३५८ ॥
सलिलाभ विशेषेण विनिहन्त्यतिसारकम् ।
कण्ठशुण्डीश्च हन्त्याशु भृशदारुणवेदनाम् ॥ ३५९ ॥
मसूरिकादौ स्फोटानामस्फुटोद्गमहेतुजम् ।

आक्षेप च प्रलाप च शमयत्यविकल्पतः ॥ ३६० ॥
विसर्पोत्थ ज्वरोत्थ वा सन्निपातसमुत्थितम् ।
विनिहन्ति विशेषेण प्रलापादीनुपद्रवान् ॥ ३६१ ॥
सन्निपातसमुद्भूता शय्यातः खलु रोगिणाम् ।
पलायनात्मिका चेष्टा विनिनाशयति द्रुतम् ॥ ३६२ ॥
प्रसवोत्तरकाले वा सन्निपातज्वरे खलु ।
मूत्रानुत्पत्तिहेतूत्थ मूत्ररोध व्यपोहति ॥ ३६३ ॥
नाडीदौर्बल्यजनित वक्षसाकुञ्चनान्वितम् ।
तारालापयुत हन्ति श्वास तु तमकाभिधम् ॥ ३६४ ॥
कफजान् कफपित्तोत्थान् रोगान् वा कफवातजान् ।
विनिहन्ति विशेषेण ह्यूर्ध्वजत्रुसमाश्रितान् ॥ ३६५ ॥
ग्रन्थिकज्वरसम्भूत कक्षावङ्क्षणकण्ठजम् ।
ग्रन्थीना श्वयथु हन्ति ज्वरञ्चैव तदाश्रितम ॥ ३६६ ॥

धत्तूरस्य मात्रा

आरभ्य गुञ्जापादाशाद्गुञ्जार्धं तु विशोधितम् ।
धत्तूरबीजचूर्णन्तु प्रयुञ्जीत विधानवित् ॥ ३६७ ॥
गुञ्जार्द्धत. समारभ्य सार्द्धगुञ्जैकसम्मितम् ।
चूर्णं धत्तूरपत्राणा प्राणाचार्य. प्रयोजयेत् ॥ ३६८ ॥

धत्तूरस्य आमयिक प्रयोग

धत्तूरमूल पत्र वा सम्पेष्य विमलाम्भसा ।
कवोष्णस्तूपनाहेन व्रणशोथ व्यपोहति ॥ ३६९ ॥
धूर्तपत्रद्रवे पिष्ट विफेन सरसाञ्जनम् ।
विनिहन्ति विशेषेण नेत्राभिष्यन्दमुल्बणम् ॥ ३७० ॥
धत्तूरपत्रस्वरस कवोष्ण. स्वल्पमात्रया ।

निक्षिप्तो नाशयत्याशु कर्णशूलमसंशयम् ॥ ३७१ ॥
धूर्तबीजानि सम्पेष्य वटिका खलु निर्मिता ।
क्रिमिदन्तस्थरन्ध्रस्था वेदना हन्ति दारुणाम् ॥ ३७२ ॥
धूर्तपत्र निशाफेनयुत पिष्टामलाम्भसा ।
प्रलेपान्नाशयत्याशु स्तनश्वयथुवेदनाम् ॥ ३७३ ॥
धत्तूरदलकल्केन तैलपाकविधानत' ।
साधित सार्षप तैल हन्ति पेशीगतानिलम् ॥ ३७४ ॥
कटिवातव्यथा चैव सन्धिवातभवा व्यथाम ।
यूकालिक्षादिक चैव हन्ति केशेषु मर्दनात् ॥ ३७५ ॥
धत्तूरफलचूर्ण तु काकोदुम्बरिकान्वितम् ।
शीलित तण्डुलाम्भोभि' सारमेयविष हरेत् ॥ ३७६ ॥
सगुडः सार्कदुग्धश्च कृष्णधूर्तदलद्रवः ।
शीलितो निनिहन्त्येव सारमेयविष द्रुतम् ॥ ३७७ ॥
धूर्तपत्र साहिफेन जलेन परिपेषितम् ।
लेपनान्नाशयत्याशु सर्वश्वयथुवेदनाम् ॥ ३७८ ॥

प्रलापान्तकरस

धत्तूरबीज निमल नवमाषकसमितम् ।
रसेश्वर गन्धक च पृथक् षण्माषकोन्मितम् ॥ ३७९ ॥
कटुत्रिक च सौभाग्य पृथक् तोलकमामितम् ।
आदाय पेषयेद्यत्नात् काम निम्बूकवारिणा ॥ ३८० ॥
निर्मापयेत्ततो युक्त्या वटिका रक्तिकोन्मिताः ।
रसोऽय तु समाख्यात प्रलापान्तकसज्ञक' ॥ ३८१ ॥
निशेषतो मतोऽय तु प्रलापपरिकृन्तनः ।
दीपन' पाचनश्चैव वह्निमान्द्यप्रणाशनः ॥ ३८२ ॥

उन्मादगजाङ्कुश

पूर्तबीज रस गन्ध वङ्ग रौप्य च मारितम् ।
समाहरेद्भिषग्वर्यः सर्व तु समभागिकम् ॥ ३८३ ॥
कन्याम्भसा विमर्द्याथ वटिका रक्तिकोन्मिता ।
निर्मापयेत्प्रयत्नेन रसतन्त्रविशारद. ॥ ३८४ ॥
रसोऽयं तु समाख्यातो ह्युन्मादद्विरदाङ्कुश ।
हन्त्युन्माद विशेषेण तथा ज्वरनिबर्हण ॥ ३८५ ॥

ग्रन्थिशोथनिवारिका वर्तिका

धत्तूरस्य फल त्वेक तथैव विषतिन्दुकम् ।
तोलकप्रमितश्चैव चूर्णित कृष्णजीरकम् ॥ ३८६ ॥
सद्वासार मोचरस कृष्णजीरकभागिकम् ।
समादाय स्नुहीपत्ररसेन परिमर्दयेत् ॥ ३८७ ॥
वर्तिका कारयेद्वैद्यो माषकत्रयसमिता' ।
ग्रन्थिकज्वरसम्भूतग्रन्थिशोथनिवारिका ॥ ३८८ ॥
वर्तिकैका शिलाया तु सद्घृष्य विमलाम्भसा ।
प्रलिप्ता शमयत्याशु ग्रन्थिशोथ सुदारुणम् ॥ ३८९ ॥
दिने वारद्वय वापि वारत्रयमथापि वा ।
सद्घृष्य वर्तिकामेका लेपयेद्भिपजा वर. ॥ ३९० ॥

अथ भङ्गाया नामानि

भङ्गा भङ्गी मातुलानी मादिनी मादिका तथा ।
मातुली विजया तन्द्राकारिणी बहुवादिनी ॥ ३९१ ॥

भङ्गाया परिचय

भङ्गा तु सुपजातीया सर्वत्र सुलभा मता ।
अत. परिचयस्तस्या विस्तरान्न प्रदर्शित ॥ ३९२ ॥
दलद्वयो दल बीज मातुलान्या विशेषत ।

प्रयुज्यते भेषजेषु काम रसचिकित्सकै. ॥ ३९३ ॥

भङ्गाया प्रथम शोधनप्रकार

मातुलानीं शुष्कपत्रां सलिले तु निमज्जयेत् ।
निष्पीड्य शुष्का गव्याज्ये भर्जयेन्मन्दवह्निना ॥ ३९४ ॥
सुभृष्टामथ विज्ञाय सत्वर तु समाहरेत् ।
इत्थ विशोधिता भङ्गा सर्वत्र विनियोजयेत् ॥ ३९५ ॥

द्वितीय शोधनप्रकार

भङ्गा विशुष्कामादाय बब्बूलत्वक्कषायत. ।
स्वेदयेद् घटिकार्द्ध तु मध्यमानलयोगतः ॥ ३९६ ॥
विज्ञाय विजया स्विन्ना घर्मे खलु विशोषयेत् ।
एव सस्वेदिता भङ्गा शुद्धिमायात्यनुत्तमाम् ॥ ३९७ ॥
एव विशोधिता भङ्गा पिष्ट्वा गोदुग्धयोगत' ।
कामोद्दीपनयोगेषु विशेषेण नियोजयेत् ॥ ३९८ ॥

भङ्गाया गुणा

भङ्गा तिक्ता लघुस्तीक्ष्णा ग्राहिणी कफहारिणी ।
दीपनी पाचनी चैव पित्तला मदकारिणी ॥ ३९९ ॥

भङ्गाया विशिष्टा गुणा

भङ्गा क्षुद्दीपनी चैव ध्वजभङ्गहरा परम् ।
स्वप्नमेहहरा चैव शुक्रस्तम्भनकारिणी ॥ ४०० ॥
निद्राप्रदायिनी काम कामोद्दीपनकारिणी ।
प्रलापनाशिका चैव धनु स्तम्भहरा तथा ॥ ४०१ ॥
अन्त्रशूलहरा चैव वृक्कशूलप्रणाशिनी ।
पित्तशोपजशूलघ्नी त्वामाशयबलप्रदा ॥ ४०२ ॥
अजीर्णजातिमारघ्नी तथाजीर्णनिवारिणी ।
उन्मादनाशिनी चैव वृक्कशोथव्यथाहरा ॥ ४०३ ॥
मूत्रला रक्तसयुक्तमूत्रस्रावनिवारिका ।

विचित्रानन्दजननस्वप्नसन्तानकारिका ॥ ४०४ ॥
अक्षोण्यथाहरा चैव किञ्चिज्ज्वरनिवारिका ।
व्रणमेहसमुद्भूताशिश्नोत्थानव्यथाहरा ॥ ४०५ ॥
नाडीदौर्बल्यसम्भूत तथाक्षेपमसुत्थितम् ।
रज शूल निहन्त्याशु भास्करस्तिमिर यथा ॥ ४०६ ॥
आमाशयोत्थशूलघ्नी यक्ष्मकासहरा परम् ।
वस्त्याक्षेपहरा चैव साक्षेपतमकापहा ॥ ४०७ ॥
दारुणाक्षेपसयुक्तमतिकष्टप्रदायिनम् ।
पर सङ्क्रामक कास निनिहन्ति विशेषत ॥ ४०८ ॥
रजोनिवृत्तिकालोत्था प्रौढास्थाक्षये तथा ।
शीर्षव्यथा तु नारीणा विनिहन्ति सुदारुणाम् ॥ ४ ९ ।
गर्भस्रावसमुद्भूता मासिकस्रावकालजाम् ।
रक्तप्रदरजा वापि शुद्धा रक्तस्रुतिं जयेत् ॥ ४१० ॥
आलपन् विस्मरेद् यत्र स्वकीय पूर्वभाषितम् ।
दौर्बल्य मानसोद्भूत विनाशयति सत्वरम् ॥ ४११ ॥
अन्नजात तु निखिल भुक्त यत्र न जीर्यति ।
अजीर्ण नाशयत्याशु सारुचि क्षुद्विवर्जितम् ॥ ४१२ ॥
अर्द्धावभेदकोपेतकासरोगनिवारिका ।
सङ्कोचनी तथा श्रोत्रदृष्टिशक्तिविवर्द्धिनी ॥ ४१३ ॥

भङ्गाया मात्रा

द्विगुञ्जत समारभ्य चतुर्गुञ्जमिता परम् ।
भङ्गा खलु प्रयुञ्जीत बलकालाद्यपेक्षया ॥ ४१४ ॥

भङ्गाया आमयिक प्रयोग

आर्द्रा निष्पुक्का वा भङ्गा स्त्रजादुग्धेन पेषिता ।
प्रलिप्ता पादतलयो निद्रा जनयति द्रुतम् ॥ ४१५ ॥

भङ्गा सुश्लक्ष्णमपिष्टा शिलाया विमलाम्भसा ।
कोष्णोपनाहयोगेन कथिताशोऽन्यथाऽङ्गरा ॥ ४१६ ॥
धूम्रपानविधानेन भङ्गा युक्ताथनाशिता ।
साक्षेप तमकश्वास कास मंक्रामक हरेत ॥ ४१७ ॥

मदनोदयमोदक

जातीपत्रीफले मासी लवङ्ग चन्द्रकुङ्कुमम् ।
एला दारुसिता व्योष वङ्ग जीरकमभ्रकम् ॥ ४१८ ॥
लोह च रसमिन्दूर पृथक् तोलकसमितम् ।
शतावरी गोक्षुरको द्राक्षा कर्कटशृङ्गिका ॥ ४१९ ॥
नलात्मगुप्ता कुष्ठ च वृद्धदारकबीजकम् ।
चूर्णीकृत सर्वमेतत् पृथक् कर्षद्वयोन्मितम् ॥ ४२० ॥
भङ्गा विशोधिता चैव पूर्वचूर्णार्द्धसमिता ।
मिता सर्वद्विगुणिता दत्ता रसविशारदः ॥ ४२१ ॥
आरम्य माषत्रितयाद्रसमाषकममितान् ।
निर्मापयेन्मोदकास्तु खलु मोदकपाकवित् ॥ ४२२ ॥
नामतोऽय समाख्यातो मदनोदयमोदकः ।
मदनोद्दीपनकरो विशेषात्परिकीर्तित ॥ ४२३ ॥
भृत पर घनीभूत सितैलायुत पय. ।
अनुपाने प्रयोक्तव्य तदतीव हि बृहणम् ॥ ४२४ ॥
मोदकस्यास्य सतत मासत्रयनिषेवणात् ।
कामरूपो भवेन्मर्त्यस्तथा भीमपराक्रम ॥ ४२५ ॥
सरसयस्मेरदृशो नवयौवनघूर्णिता. ।
प्रमदास्तोपयत्यस्य सेवकोऽपतितध्वज ॥ ४२६ ॥

त्रैलोक्यविजया वटी

भङ्गासत्व भागिक तु पूर्वोक्तविधिसाधितम् ।

तुगाक्षीरीरजश्चैव मागत्रितयसंमितम् ॥ ४२७ ॥
समर्घ वारिणा खल्वे वटिका रक्तिकोन्मिताः ।
निर्मापयेत्प्रयत्नेन रसतन्त्रविचक्षणः ॥ ४२८ ॥
वटिकेयं समाख्याता त्रैलोक्यविजयाभिधा ।
प्रलापोन्मादशमनी पृष्ठशूलप्रणाशिनी ॥ ४२९ ॥
रज शूलहरा चैव यक्ष्मकासनिवारिका ।
अतीसारप्रशमनी सप्रमेहनिषूदनी ॥ ४३० ॥

त्रैलोक्यसमोहनरस

त्रैलोक्यविजया शुद्धा भानुतोलकसमिताम् ।
हिङ्गुल रससिन्दूर घनसार लवङ्गकम् ॥ ४३१ ॥
अभ्रक शङ्खभसित पृथक् तोलकसमितम् ।
गोक्षुरं वानरीबीज तथा कर्कटशृङ्गिका ॥ ४३२ ॥
चूर्णीकृत पृथक् चैतत्तोलकद्वयसमितम् ।
समादाय भिषग्वर्य सप्तधा सुविधानत ॥ ४३३ ॥
भङ्गाया॰ शतपु याश्च स्वरसेन विभावयेत् ।
निर्मापयेत्तु वटिका रक्तित्रितयसमिता ॥ ४३४ ॥

यत॰ स्मरस्यापि कटाक्षपातै॰
स्त्रीणा तु समोहनकारिणीनाम् ।
सम्मोहन नै विदधाति तस्मात्
त्रैलोक्यसमोहनसज्ञकोऽयम् ॥ ४३५ ॥

वामावश्यकर पर रुचिकर क्लैब्यापहारी पर
हर्षोत्साहकरो धृतिस्मृतिकर शुक्रातिसस्तम्भन॰ ।
पुत्रापत्यकरो रतिप्रियकर मर्त्येत्र सौख्याकर
सव्योऽय खलु कामिनी रसवरस्त्रैलोक्यसमोहन॰ ॥४३६

### अथ गुञ्जाया नामानि

गुञ्जा रक्ता रक्तिका च ताम्रिका कृष्णचूडिका ।
उच्चटा शीतपाकी च भिल्लभूषणिकारुणा ॥ ४३७ ॥
चूडामणिस्ताम्रिका च शिखण्डी कृष्णला तथा ।
काकणन्ती च काम्भोजी सैवेह परिकीर्तिता ॥ ४३८ ॥

### गुञ्जाया परिचय

मिष्टमूलदला रम्या लता तु शीतपाकिनी ।
कृष्णचूडफला गुञ्जा सर्षपा निदिता मता ॥ ४३९ ॥
पत्र पत्ररसो मूल बीज चास्या॰ प्रयुज्यते ।
बीजमेव भिषग्वर्यैर्मत तूपविषाह्वयम् ॥ ४४० ॥

### गुञ्जाबीजाना शोधनप्रयोजनम्

गुञ्जाबीज वान्तिकर तीव्ररेचनकृत्तथा ।
शीलित रत्तिमात्र तु गुञ्जाबीजमशोधितम् ॥ ४४१ ॥
विषूचीलक्षणाकारा करोति हि विषक्रियाम् ।
अतो दोषनिवृत्त्यर्थं गुञ्जाबीजानि शोधयेत् ॥ ४४२ ॥

### गुञ्जाबीजाना प्रथम शोधनप्रकार

नवानि गुञ्जाबीजानि चूर्णीकृत्य प्रयत्नत॰ ।
द्विगुणीकृतवस्त्रान्तः पोट्टल्या रोधयेत्तत ॥ ४४३ ॥
स्वेदयेद्दोलिकायन्त्रे द्वियाम गव्यदुग्धत॰ ।
इत्थ तु गुञ्जाबीजानि शुद्धिमायान्त्यनुत्तमाम् ॥ ४४४ ॥

### द्वितीय शोधनप्रकार

गुञ्जाबीज पोट्टलीस्थ दोलायन्त्रे सकाञ्जिकम् ।
यामैक स्वेदनादेव शुद्धिमायात्यनुत्तमाम् ॥ ४४५ ॥

### गुञ्जाया गुणा

गुञ्जाबीजं सुनिर्मल कामोद्दीपनमुत्तमम् ।
ऊरुस्तम्भहर चैव बलसम्वर्द्धन परम् ॥ ४४६ ॥

गुञ्जापत्रं शोथहरं त्वग्गतव्रणनाशनम् ।
तथैव च समाख्यातं वेदनाहरमुत्तमम् ॥ ४४७ ॥
गुञ्जापलाशनिर्यासो मधुरः कटुकस्तथा ।
स्वरभेदप्रशमनः शोथघ्नो वेदनाहरः ॥ ४४८ ॥
गुञ्जामूलं सुमधुरं कफनिःसारकं परम् ।
वातपित्तहरं चैव तृष्णाशोथनिवारणम् ॥ ४४९ ॥
स्वरभेदप्रशमनं तथा वान्तिविनाशनम् ।
मूत्रकृच्छ्रप्रशमनं बलवर्णकरं परम् ॥ ४५० ॥
कासघ्नं शुक्रजननं रुच्यं विषविनाशनम् ।
वृष्यं व्रणापहं चैव विशेषात्परिकीर्तितम् ॥ ४५१ ॥
गुञ्जामूलं विशेषेण मधुयष्टिगुणोपमम् ।
अत एवाधुना तत्तु तदभावे प्रयुज्यते ॥ ४५२ ॥

शुद्धगुञ्जाबीजस्य मात्रा

गुञ्जार्द्धतः समारभ्य सार्द्धगुञ्जकसम्मितम् ।
गुञ्जाबीजं सुविमलं प्रयुञ्जीत विधानवित् ॥ ४५३ ॥

गुञ्जाया आमयिकः प्रयोगः

गुञ्जाबीजं शिलापिष्टं वारिणा परिलेपितम् ।
निहन्त्युत्पिष्टसन्धिस्था दारुणा शोथवेदनाम् ॥ ४५४ ॥
इन्द्रलुप्तं पक्षवधं तत्तदङ्गसमाश्रितम् ।
गृध्रसीं दारुणां चैव सुघोरमवबाहुकम् ॥ ४५५ ॥
गुञ्जाबीजं शिलापिष्टं वारिणा चित्रकान्वितम् ।
प्रलिप्तं शमयत्येव श्वित्रकुष्ठं विशेषतः ॥ ४५६ ॥

प्रथमं गुञ्जाद्यतैलम्

गुञ्जाबीजं शिलापिष्टं कल्कीकृतमनुत्तमम् ।
तिलतैलं भृङ्गराजपत्रनिर्यासकं तथा ॥ ४५७ ॥
चतुर्गुणोत्तरं चैव मानमेषां प्रकल्पयेत् ।

तैलपाकविधानेन तैलमेभिस्तु साधितम् ॥ ४५८ ॥
निहन्त्यभ्यङ्गयोगेन कण्डुकुष्ठादिकामयान् ।
तथा दारुणक हन्ति विविधा वातवेदनाः ॥ ४५९ ॥

द्वितीय गुञ्जाद्यतैलम्

गुञ्जाबीजशिफाभिस्तु तैल द्विगुणवारिणा ।
विपाचित गण्डमाला निहन्त्यभ्यङ्गयोगत ॥ ४६० ॥
एरण्डतैलसयुक्त गुञ्जापत्र सुपेषितम् ।
कोष्णोपनाहयोगेन वेदनाहरमुत्तमम् ॥ ४६१ ॥
गुञ्जापत्ररसे पक्व तैलमभ्यङ्गयोजितम् ।
शोथप्रशमन चैव वेदनाहरमीरितम् ॥ ४६२ ॥
गुञ्जापत्र नव वापि निशुष्क चूर्णित भृशम् ।
नाशयत्यचिरादेव स्वरभेदमसशयम् ॥ ४६३ ॥

गुञ्जाजीवनरस

गुञ्जाबीज सुनिमल सार्द्धतोलकमामितम् ।
तन्मित रसमिन्दूर तयोश्च द्विगुणीकृताम् ॥ ४६४ ॥
विशोधिता तु विजया समादाय भिषग्वरः ।
सम्पेष्य वटिका कार्या गुञ्जाद्वितयसमिता ॥ ४६५ ॥
रसोऽय तु समाख्यातो गुञ्जाजीवनसज्ञक ।
बलसञ्जननश्चैव मदनोद्दीपन परम् ॥ ४६६ ॥

गुञ्जाभद्ररस

गुञ्जाबीज सुविमल रसतोलकसमितम् ।
जयन्ती निम्बबीज च रसतोलकमामितम् ॥ ४६७ ॥
तोलकत्रितय सूत गन्धं द्वादशतोलकम् ।
समादाय तत सल्वे पेषयेदतियत्नत ॥ ४६८ ॥
काकमाचीजयाधूर्तनिम्बकद्रवयोगतः ।
वटिका कारयेद्यत्नाद्गुञ्जाद्वितयसमिताः ॥ ४६९ ॥

रसोऽयं तु समाख्यातो गुञ्जाभद्रसमाह्वयः ।
ऊरुस्तम्भं महाघोरं विनिहन्ति विशेषतः ॥ ४७० ॥

अथ भल्लातकस्य नामानि

भल्लातकस्तु भल्लातस्तपनोऽरुष्करोऽग्निकः ।
कृमिघ्नश्चैव वातारिः स एव परिकीर्तितः ॥ ४७१ ॥

भल्लातकस्य परिचयः

भल्लातकः समाख्यातः शारिजातीयकस्तरुः ।
जायतेऽद्रिषु बाहुल्याद् फलं तस्य प्रयुज्यते ॥ ४७२ ॥

ग्राह्यभल्लातकस्य स्वरूपम्

भल्लातकानि पक्वानि नीरान्विमानि यानि तु ।
निमज्जन्ति हि तान्येव ग्राह्याणीह विशुद्धये ॥ ४७३ ॥

भल्लातकस्य शोधनप्रयोजनम्

भल्लातकस्य तु रसः स्वल्पोऽपि पतितस्त्वचि ।
करोति दारुणं दाहं व्रणं चैवातिदारुणम् ॥ ४७४ ॥
शोथं सञ्जनयत्याशु तीव्रदाहसमन्वितम् ।
मुखे निपतितो घोरं वीसर्पं प्रकरोति वै ॥ ४७५ ॥
उक्तोपद्रवशान्त्यर्थं फलं भल्लातकोद्भवम् ।
शोधयेद्भिषजां वर्यः सावधानतया सदा ॥ ४७६ ॥

भल्लातकस्य प्रथमः शोधनप्रकारः

इष्टकाचूर्णसंयुक्तं फलं भल्लातकोद्भवम् ।
पोट्टलीमध्यनिहितं घर्षयेन्नातिवेगतः ॥ ४७७ ॥
ततः प्रतप्ततोयेन क्षालयेदतियत्नतः ।
इत्थं तैलरसाहीनं भल्लातं शुद्धिमाप्नुयात् ॥ ४७८ ॥

द्वितीयः शोधनप्रकारः

भल्लातकफलानीह नारिकेलाम्बुयोगतः ।
स्विन्नानि दोलिकायन्त्रे शुद्धिमायान्त्यनुत्तमाम् ॥ ४७९ ॥

भल्लातकस्य गुणा

भल्लातकः कटुस्तिक्त अत्युष्णः कृमिनाशनः ।
रसायनो बलकरो गुल्मार्शोग्रहणीहर ॥ ४८० ॥
कुष्ठामयप्रशमनः कफवातोदरापहः ।
विबन्धाध्मानशूलघ्नः श्वासादिगदनाशनः ॥ ४८१ ॥

भल्लातकस्य माना

गुञ्जैकत' समारभ्य गुञ्जात्रितयसम्मितम् ।
भल्लातक प्रयुञ्जीत बलकालाद्यपेक्षया ॥ ४८२ ॥

भल्लातकस्य आमयिक प्रयोग

हरीतकीतिलगुडयुत भल्लातक समम् ।
निषेवित प्लीहपाण्डुज्वरघ्न श्वासकासनुत् ॥ ४८३ ॥

भल्लातकरसायनम्

शुण्ठीविडङ्गलोहाढ्य भल्लात विमलीकृतम् ।
मध्वाज्यसयुत युक्त मासत्रितयसेवनात् ॥ ४८४ ॥
रक्तवृद्धि करोत्येतद् बल चैव विवर्द्धयेत् ।
नवयौवनलावण्य जनयत्यविकल्पत' ॥ ४८५ ॥
समाख्यातमिद नाम्ना भल्लातकरसायनम् ।
सेवितव्य सदा यत्नाद्रक्तालपत्वनिवृत्तये ॥ ४८६ ॥

अथ करवीरस्य नामानि

करवीरो हयारिश्च हयमारोऽश्वमारक' ।
अश्वान्तकोऽश्वहाश्वघ्नो मतश्चण्डातकस्तथा ॥ ४८७ ॥
करवीर' श्वेतपीतरक्तपुष्पविभेदतः ।
त्रिविधस्तु समाख्यातो वैद्यविद्याविशारदै. ॥ ४८८ ॥

करवीरस्य परिचय

करवीर समाख्यातः सर्वत्र सुलभस्तरुः ।
भिषग्वरस्य मूल मत तूपविषाह्वयम् ॥ ४८९ ॥

करवीरस्य मूलत्वग् वक्त्रमो वा निषेवित ।
करोति हि विशेषेण मोहदाहभ्रमादिकान् ॥ ४९० ॥
करवीरकमूलन्तु बाह्ययोगे प्रयुज्यते ।
आभ्यन्तर प्रयोगोऽस्य न कुत्रापि प्रशंसित' ॥ ४९१ ॥

करवीरस्य बाह्यप्रयोग

करवीरकमूल तु वारिणा परिपेषितम् ।
समाख्यात प्रलेपेन क्षुपदग्रव्रणापहम् ॥ ४९२ ॥
करवीरदलद्रावो नेत्रयोर्विनियोजित' ।
अभिष्यन्द जलस्राव व्यपोहति विशेषत ॥ ४९३ ॥

करवीराद्यतैलम्

करवीरशिफाक्वाथविपक्व तिलतैलकम् ।
कल्कीकृतविडङ्गाग्नियोगतो गोजलान्वितम् ॥ ४९४ ॥
करवीराद्यतैल तु समाख्यात भिषग्वरै ।
अभ्यङ्गाद्विनिहन्त्याशु त्वग्गतान् विविधान् गदान् ॥४९५॥

## अथ लाङ्गलिकाया नामानि

लाङ्गली हलिनी सीरी विशल्या कलिकारिका ।
अग्निजिह्वा स्वर्णपुष्पा दीप्ता नक्तेन्दुपुष्पिका ॥ ४९६ ॥
विद्युज्ज्वाला वह्निशिखा लाङ्गल्या गर्भपातिनी ।
हली लाङ्गलिनी चैव समाख्याता भिषग्वरै ॥ ४९७ ॥

लाङ्गलिकाया परिचय

लाङ्गली स्वर्णकुसुमा लता तु सुमनोहरा ।
सीरमूला विशेषेण मता नक्तेन्दुपुष्पिका ॥ ४९८ ॥
लाङ्गल्या मूलमेवेह मत तूपविषाह्वयम् ।
तदेव च विशेषेण योगेषु विनियुज्यते ॥ ४९९ ॥

लाङ्गलिकाया आभ्यन्तरप्रयोगे दोषाः

शुष्का वार्द्रा लाङ्गलिनी स्वल्पापि परिशीलिता ।
करोति दारुणं दाहं मोहातीसारविभ्रमम् ॥ ५०० ॥

लाङ्गलिकाया गुणाः

लाङ्गली कटुका चोष्णा कफवातापहा सरा ।
अपरापातनी चैव सद्यःप्रसवकारिका ॥ ५०१ ॥
शोथापहा विशेषेण मता व्रणनिवारिणी ।
कुष्ठकृमिप्रशमनी विशेषात्परिकीर्तिता ॥ ५०२ ॥
आभ्यन्तरप्रयोगार्थं लाङ्गलीं न प्रयोजयेत् ।
बाह्यप्रयोगे युञ्जीत तत्तद्रोगापनुत्तये ॥ ५०३ ॥

लाङ्गलिकाया बाह्यप्रयोगः

सुधौतं लाङ्गलीमूलं वारिणा परिपेषितम् ।
नाभौ योनौ प्रलिप्तं चा सद्यःप्रसवकृन्मतम् ॥ ५०४ ॥
लाङ्गली वारिणा पिष्टा करपादप्रलेपिता ।
अपरां पातयत्याशु न सन्देहोऽत्र कश्चन ॥ ५०५ ॥
लाङ्गलीमूलतोयं तु पूरितं कृमिकर्णके ।
निहन्त्यन्तः प्रविष्टास्तु शतपद्यादिकान् कृमीन् ॥ ५०६ ॥
सूर्यभक्ताद्रसोपेतः सन्धोपो लाङ्गलीद्रवः ।
निधाय वस्त्रपूतं तु योजयेत् कृमिकर्णके ॥ ५०७ ॥
पातयत्यचिरादेव कृमिकीटपिपीलिकाः ।
तथा कर्णजलौकाश्च तथैवान्यान् कृमीनपि ॥ ५०८ ॥
कङ्कगोधावसोपेतं तुलसीलाङ्गलीद्रवैः ।
साधितं तैलमभ्यङ्गाद् हन्त्युन्मन्थं विशेषतः ॥ ५०९ ॥

अथ अर्कक्षीरस्य नामानि

अर्कक्षीरं रविक्षीरं सूर्यक्षीरं तथैव च ।
अर्कदुग्धं सूर्यदुग्धं रविदुग्धं च तन्मतम् ॥ ५१० ॥

### अर्कक्षीरस्य गुणा

अर्कक्षीर मत स्निग्ध तिक्तोष्ण कुष्ठगुल्मनुत् ।
उदरापहमत्यन्त रेचन वान्तिकारकम् ॥ ५११ ॥
गुदाङ्कुरप्रशमन कृमिदन्तव्यथापहम् ।
क्षारकर्मकर चैव त्वचि लिप्त विशेषत ॥ ५१२ ॥

### अर्कक्षीरस्य बाह्यप्रयोग

सर्क्षौद्रे रविदुग्धे तु तूलमल्प निषेचितम् ।
कृमिदन्तस्थरन्ध्रस्थ कृमिदन्तव्यथापहम् ॥ ५१३ ॥
निगुणक्षौद्रसयुक्त रविदुग्ध प्रलेपितम् ।
मुखक्षत शमयति द्रुत नास्तीह सशयः ॥ ५१४ ॥
निशाशिरीषबीजाढ्य सूर्यदुग्ध विलेपितम् ।
गुदाङ्कुरान् पातयति चिरोत्थानप्यसशयम् ॥ ५१५ ॥

### अथ स्नुहीक्षीरस्य नामानि

स्नुहीक्षीर सुधाक्षीर सेहुण्डक्षीरक तथा ।
स्नुहीदुग्ध सुधादुग्ध स्नुग्दुग्ध च मतन्तु तत् ॥ ५१६ ॥

### स्नुहीक्षीरस्य शोधनम्

पलद्वय सुधादुग्ध तोलकद्वयसमिते ।
चिञ्चादलद्रवे वस्त्रपूते घर्मे विशोषयेत् ॥ ५१७ ॥
द्रव निशुष्क विज्ञाय सुधादुग्ध समाहरेत् ।
ततः सर्वत्र योगेषु प्रयुञ्जीत भिषग्वर. ॥ ५१८ ॥

### स्नुहीक्षीरस्य गुणा

सुधादुग्ध वातहर गुल्मोदरविनाशनम् ।
विषाध्मानहर चैव गुदाङ्कुरहर परम ॥ ५१९ ॥
पर विरेचनकर पुष्पकच्चक्षिमध्यगम् ।
समाख्यात विशेषेण क्षारकर्मकर परम् ॥ ५२० ॥

अस्य आमयिक प्रयोग

सुधादुग्ध निशाकोपातकीसैन्धवसयुतम् ।
गोमूत्रेण प्रलिप्तं तु पातयेद्गुदजाङ्कुरान् ॥ ५२१ ॥

क्षारवर्तिका

चूर्णं दारुहरिद्रायास्तोलकैकमित हरेत् ।
मासार्द्धं पेषयेद्धारा निदाघे खलु शोषयेत् ॥ ५२२ ॥
समांशिके सुधादुग्धे रविदुग्धे च तन्मिते ।
निक्षिप्य खलु खल्वेऽथ पेषयेदतियत्नतः ॥ ५२३ ॥
विज्ञाय वर्तिकायोग्य रसतन्त्रविशारदः ।
दीर्घा एषणिकाकारा वर्तिका कारयेत्तत. ॥ ५२४ ॥
समाख्याता भिषग्वर्यैर्नामत. क्षारवर्तिका ।
भगन्दरमहाघोरनाडीव्रणविशोधिका ॥ ५२५ ॥
वर्तिकेय सुनिन्यस्ता प्रयत्नेन भगन्दरे ।
नाडीव्रणान्तराले च खलु शोधयति द्रुतम् ॥ ५२६ ॥

क्षारसूत्रम्

सुधादुग्धे वस्त्रपूतहरिद्राचूर्णसयुते ।
निषिक्तेन तु तूलेन स्वल्पेन खलु यत्नतः ॥ ५२७ ॥
प्रलिप्त सुदृढ सूत्र छायायामथ शोषयेत् ।
विलिप्य सप्तधा ह्येव शोषयेद्भिषजा वरः ॥ ५२८ ॥
सूत्रमेतत्समाख्यात क्षारसूत्र तु नामतः ।
गुदाङ्कुरच्छेदनार्थममोघास्त्रमिद मतम् ॥ ५२९ ॥
भगन्दरच्छेदनार्थमप्येतद्विनियुज्यते ।
प्रयोक्तव्य क्षारसूत्र सावधानतया सदा ॥ ५३० ॥

अथ कृष्णसर्पविषस्य नामानि

कृष्णसर्पविष चैव गरल दारद तथा ।
तदेव जङ्गमविष समाख्यात भिषग्वरैः ॥ ५३१ ॥

कृष्णसर्पविषस्य आहरणविधिः

शुक्तिका तालपत्रेण सर्जरसस्य दलेन वा ।
आच्छाद्य सर्वतो दीर्घयष्टिकाया तु बन्धयेत् ॥ ५३२ ॥
कृष्णसर्पो यथा रोषात् तालपत्रे दशेत्तथा ।
निदध्यात् कृष्णसर्पस्य सम्मुखं यष्टिकामिमाम् ॥ ५३३ ॥
निदध्यात्तावदेव तु बहुवारं दशेद्यथा ।
शुक्तिकामश्रितं सर्पविषं स्वयं समाहरेत् ॥ ५३४ ॥
पुनः पुनः कृष्णसर्पं रोपयन् भिषजां वरः ।
समाहरेद्विषं ह्येवं सावधानतया सदा ॥ ५३५ ॥

कृष्णसर्पविषस्य शोधनम्

तैलाक्तशुक्तिकामध्यमश्रितं जङ्गमे विषे ।
पादांशं सार्षपं तैलं न्यस्य घर्मे विशोषयेत् ॥ ५३६ ॥
जायते पीतवर्णं तन्निदाघे परिशोषितम् ।
कृष्णसर्पविषं स्वेन शुद्धिमायात्यनुत्तमाम् ॥ ५३७ ॥

कृष्णसर्पविषस्य गुणाः

कृष्णसर्पविषं तीक्ष्णं महोष्णमतिदारुणम् ।
पित्तप्रकोपणकरं तथा दाहकरं परम् ॥ ५३८ ॥
आसन्नमृत्युकालोत्थसञ्ज्ञालोपप्रणाशनम् ।
श्वासकृच्छ्रप्रशमनं तथा श्लेष्मविशोषणम् ॥ ५३९ ॥
हृद्दौर्बल्यसमुद्भूतं महात्ययिकलक्षणम् ।
अवसादं निहन्त्याशु निश्चितं करणाश्रितम् ॥ ५४० ॥
प्रणश्यन्नाडिकां घोरां शीतपादकरान्विताम् ।
श्वासकृच्छ्रादिसंयुक्तां विनिहन्ति विषूचिकाम् ॥ ५४१ ॥
निरुक्तलक्षणोपेतं सन्निपातं व्यपोहति ।
शीताङ्गसन्निपातघ्नं हृदुत्तेजनकृत्परम् ॥ ५४२ ॥
शीतगात्रश्वासकृच्छ्रप्रणश्यन्नाडिकादिषु ।

सन्निपातसमाकारलक्षणेषु भवत्सु तु ॥ ५४३ ॥
अन्येष्वपि च रोगेषु नूत्नेष्वात्ययिकेषु च ।
कारस्करसमायुक्तैः प्रयोगैर्विविधैस्तथा ॥ ५४४ ॥
कस्तूरीमिरनाद्यैश्च न सिद्ध्यन्ति गदा यदा ।
निष्फला स्याद् यदा चैव मृतसञ्जीवनी सुरा ॥ ५४५ ॥
तदैव कृष्णसर्पस्य विष योगेषु योजितम् ।
प्रयुञ्जीत भिषग्वर्यः सावधानतया सदा ॥ ५४६ ॥

कृष्णसर्पविषस्य निषेध

न बालेषु न वृद्धेषु न तथा राजयक्ष्मिषु ।
न सन्यासे न मूर्च्छाये न जीर्णज्वरजर्जरे ॥ ५४७ ॥
जीर्णामयप्रजीर्णेषु रक्तपित्तिषु नैव च ।
न क्षीणेषु प्रयुञ्जीत कृष्णसर्पविष भिषक् ॥ ५४८ ॥

कृष्णसर्पविषस्य आमयिक प्रयोग

सूचिकाभरणरस

कृष्णसर्पविष शुद्ध मापकद्वयसमितम् ।
रसाहिगन्धकविष पृथक् मापद्वयोन्मितम ॥ ५४९ ॥
छागमायूरवाराहमात्स्यपित्तैस्तु पेषयेत् ।
समर्धार्द्रकतोयेन यामैकमतियत्नत ॥ ५५० ॥
कारयेद्वटिका वैद्य क्षुद्रसर्षपसमिता• ।
समाख्यातो रसोऽय तु सूचिकाभरणाह्वयः ॥ ५५१ ॥
सन्निपातसमाक्रान्तलोकानुग्रहकाम्यया ।
आविष्कृतो रसोऽय तु भैरवेण महात्मना ॥ ५५२ ॥
क्षतादिवर्जितकरस्तथा नीचनख• पटु• ।
नर्टानिर्मापकश्चास्य कर्तव्यः परिचारक' ॥ ५५३ ॥
रस नखान्तसलग्नमपनीय शलाकया ।

प्रक्षालयेत्करौ काम भूयो भूयो मलारिणा ॥ ५५४ ॥

अस्य गुणा

सूचिकाभरणो ह्येष सन्निपातनिनाशन ।
विषूचिकाहर' काम श्वासकृच्छ्रापह, परम् ॥ ५५५ ॥
कृष्णसर्पस्याहेर्विषगुणनिर्दिष्टेषु तु लक्ष्मसु ।
प्रयुञ्जीत विशेषेण रसतन्त्रविचक्षण ॥ ५५६ ॥
रसोऽय खलु दातव्य भृङ्गराजस्य वारिणा ।
आरक्तास्यश्च रक्ताक्षस्तीव्रतापयुतो यदि ॥ ५५७ ॥
न स्याद्रोगी तु होरार्द्धे वटीं दद्यात्ततोऽपराम् ।
दध्योदन च दातव्य पथ्यमत्र विजानता ॥ ५५८ ॥
आरक्ताक्ष रक्तवक्त्र तीव्रतापसमन्वितम् ।
विज्ञाय रोगिण वैद्य स्नपयेच्छीतलाम्बुना ॥ ५५६ ॥
शीताम्बुसिक्तवस्त्रेण भूयोभूय. प्रयत्नत ।
आच्छादयेन्मस्तक तु व्यथादाहप्रशुत्तये ॥ ५६० ॥
कृष्णसर्पविषस्यात्र तीव्रतापादिकेषु तु ।
समुत्पन्नेषु चिन्हेषु न युञ्जीत पुना रसम् ॥ ५६१ ॥
कृष्णसर्पविषोपेतरसेषु तु विशेषत. ।
एष एव विधि. कार्यो रसतन्त्रविशारदै ॥ ५६२ ॥

द्वितीय सूचिकाभरणरस

विष सर्पविष शङ्खविष माषमित पृथक् ।
विशोधित हिङ्गुलञ्च माषकत्रयसमितम् ॥ ५६३ ॥
सम्पेष्य पञ्चपित्तेन वटिका सर्षपोन्मिता ।
निर्माय विनियुञ्जीत सावधानतया भिषक् ॥ ५६४ ॥
रसोऽय तु समाख्यात सूचिकाभरणाह्वय ।
तत्तन्निदिष्टरोगेषु पूर्ववद्गुणकारक ॥ ५६५ ॥

### विसूचीध्वंसनरस

कृष्णसर्पविषं शुद्धं विषं पारदगन्धकम् ।
सौभाग्यं नागरं ताप्यं मृतं माषमितं पृथक् ॥ ५६६ ॥
विशोधितं च दरदं सर्वेषां समभागिकम् ।
समादाय ततः खल्वे मर्दयेन्निम्बुकाम्भसा ॥ ५६७ ॥
वटिकाः कारयेद्वैद्यः श्वेतसर्षपसम्मिताः ।
रसोऽयं तु समाख्यातो विषूचीध्वंसनाह्वयः ॥ ५६८ ॥
विषूचीध्वंसनरसो विषूचीविनिषूदनः ।
शीतपादकराद्युग्रलक्षणेषु सुखावहः ॥ ५६९ ॥
सूचिकाभरणोद्दिष्टविधानेन भिषग्वरः ।
विषूचीध्वंसनरसं प्रयुञ्जीत प्रयत्नतः ॥ ५७० ॥

### मृतसञ्जीवनरस

कृष्णसर्पविषं शुद्धं विषं ताप्यं च टङ्कणम् ।
दरदं रसगन्धं च तालं माषमितं पृथक् ॥ ५७१ ॥
छागमायूरवाराहमत्स्यपित्तेन भावयेत् ।
निर्मापयेत्तु वटिकाः क्षुद्रसर्षपसम्मिताः ॥ ५७२ ॥
आसन्नमरणान् मर्त्यान् यतः सञ्जीवयत्यलम् ।
अतो रसोऽयमाख्यातो मृतसञ्जीवनाह्वयः ॥ ५७३ ॥
श्वासं प्रलापं बाधिर्यं मूकतां हिमगात्रताम् ।
रसोऽयं नाशयेत्तूर्णमासन्नमरणाश्रयाम् ॥ ५७४ ॥

### रक्तचित्रकशोधनम्

रक्तचित्रकमूलं तु चूर्णतोये निमज्जयेत् ।
ततो निदाघसंशुष्कं शुद्धिमायात्यनुत्तमाम् ॥ ५७५ ॥

### वृद्धदारकशोधनम्

वृद्धदारकबीजानि दोलायन्त्रे तु यामकम् ।
स्विन्नानि गव्यपयसा विशुद्ध्यन्ति न संशयः ॥ ५७६ ॥

### निम्बूकबीजशोधनम्

अपामार्गकषायेण दोलायन्त्रे तु यामकम् ।
स्विन्नानि निम्बूबीजानि विशुद्ध्यन्ति विशेषतः ॥५७७॥

### हिङ्गुशोधनम्

रामठं समशुद्धाज्यसंयुतं दर्विकागतम् ।
विपक्वमग्नितापेन शुद्धिमायात्यनुत्तमाम् ॥ ५७८ ॥

### गुग्गुलुशोधनम्

चतुर्गुणे गव्यदुग्धे गुग्गुलुं स्वेदयेद् मृशम् ।
वस्त्रपूतं विधायाथ मलं वस्त्रस्थमुत्सृजेत् ॥ ५७९ ॥
दुग्धं शीतं तु विज्ञाय दुग्धपात्रतलस्थितम् ।
समाहरेद् गुग्गुलुं तु सर्वदोषसमुज्झितम् ॥ ५८० ॥

#### ग्रन्थसमाप्तिकालः

खेमग्रहेन्दुप्रमिते श्रीमद्विक्रमवत्सरे ।
चैत्रे कृष्णत्रयोदश्यां ग्रन्थ एष समग्रथि ॥ ५८१ ॥
विभासयति मेदिनीं दिनमणिस्तु यावत्परं
तथा गगनमण्डले तुहिनदीधितिर्द्योतते ।
भिषग्वरमहोदयाः खलु रसागमाध्यायिन-
स्तथा रसतरङ्गिणीमिह पठन्तु तावत्परम् ॥ ५८२ ॥

इति गढवालमण्डलान्तर्गतश्रीनगरनिकटवर्तिसोलग्रामनिवासिना
सदानन्दशर्म्मणा विरचितायां रसतरङ्गिण्यां
विषोपविषादिविज्ञानीयो नाम चतुर्विंशस्तरङ्गः ।
॥ समाप्ता चेयं रसतरङ्गिणी ॥

# ❀ अनुक्रमणिका ❀

| | | पृष्ठाङ्का | पंक्त्यङ्का |
|---|---|---|---|
| महाम्भोभि | महाम्भोधि | २१७ | १ |
| स्नाङ्गशीत | स्नाङ्गशीत | २२७ | २ |
| भिषग्ू | भिषग् | २२६ | ३ |
| मिङ्गलीय | मिङ्गुलीय | २४३ | ६ |
| चूर्णैन | चूर्णेन | २४६ | ६ |
| रङ्ग | रङ्ग | २८६ | १८ |
| प्रद्रन्तक | प्रदरान्तक | २४६ | २३ |
| च्युतम् | च्युत | २५० | ४ |
| हिङ्गल | हिङ्गुल | २५४ | १४ |
| वञ्जल | वञ्जुल | २५५ | २४ |
| तुत्थाज्ञन | तुत्थाञ्जन | २५८ | २५ |
| प्रति पादित | प्रतिपादित | २६० | ६ |
| मुहुर्मुहु | मुहुमुहु | २६१ | २५ |
| परिशोषयोषिदाघे | परिशोपयेषिदाघे | २६३ | ११ |
| फञ्जालिकया | फञ्जलिकया | २६४ | २२ |
| गामिणी | गार्भिणी | २६५ | ५ |
| शीलितम | शीलितम् | २६५ | ५ |
| सिन्दूरस्य | सिन्दूरस्य | २६६ | १२ |
| किंचित् | किञ्चित् | २६७ | १ |
| घोदारम्टङ्कम् | योदारम्टङ्कम् | २६८ | ५ |
| प्रणहन् पर | प्रणहन् | २६८ | ११ |
| महारम्टङ्क | मृद्दारम्टङ्क | २६८ | २३ |
| मृद्दारम्टङ्काघो | मृद्दारम्टङ्काघो | २६९ | १७ |
| लेपित | लेपिते | २७८ | ६ |
| स्फटिकोपल | स्फाटिकवत् | ३१३ | २२ |
| मेदा | भेदा | ३१६ | १३ |
| सम्मिता | सम्मिता | ३२१ | १३ |
| शिवताण्डवमक | शिवताण्डवमक | ३२३ | १६ |
| निपून्न | निपूदनम् | ३२६ | १८ |
| निर्मापयेस्त | निमापयेत्तु | ३५४ | १६ |
| मेदिनी | मेदिनी | ३६८ | १५ |